# चित्रनिबन्धावलिः

[ विविधशास्त्रीयनिबन्धानां संग्रहः ]



निबन्धकः

**पण्डितश्रीरघुनाथशर्मा**

वाराणसेयसंस्कृतविश्वविद्यालये

वेदान्तविभागाध्यक्षः

प्रकाशकः

**मोतीलाल बनारसीदास**

दिल्ली :: वाराणसी :: पटना

## समर्पणम्

ध्यायंध्यायं पितृपादाब्जयुग्मम् ,
स्मारंस्मारं तस्य सूक्तीर्विशालाः ।
नामंनामं नाम संकीर्तयन् स्वम् ,
प्रह्वीभूतः प्राभृतं प्राहिणोमि ॥

कैलासनाथतां याते यस्मिन् वाराणसी पुरी ।
सनाथा वर्ततेऽद्यत्वे ग्रन्थं तस्मै समर्पये ॥

रघुनाथशर्मा

# विद्वद्भ्यो निबन्धकस्य निवेदनम्

अथेदं विदितमस्तु विद्यावताम्—

अयं ग्रन्थो मम द्वाविंशतिवर्षावरस्मिन्ननेहसि अनेकेष्ववसरेषु आख्यातानां मुद्रितानाममुद्रितानाञ्च निबन्धानां संग्रहः। अत्र च विषयवैविध्येन मिथो मुक्तान्वयाश्चित्रा निबन्धा मुद्रणरंहसाऽतिक्रान्तक्रमा अपि स्वरूपाभिरूप्येण मनोहराः सन्ति। 'अस्याध्ययनेन च संस्कृतभाषालेखनकला, लौकिकानां शास्त्रीयाणाञ्च बहूनां विषयाणां विज्ञानम्, लोकव्यवहारनैपुण्यम्, सभासु विविधासु गोष्ठीषु प्रागल्भ्यञ्चारमलञ्च नूनं समुदेष्यति—इति विश्वसिमि।

अयञ्च मम मनोरथपादपः वाराणसेयसंस्कृतविश्वविद्यालये परीक्षाधिकारिणां श्रीरामचन्द्रमालवीयमहाभागानां पौरुषेण फलित इति यदस्य निर्मित्या दहरमपि सुकृतं तत्तस्मै संविभजामि।

उपहरामि चैतद्ग्रन्थप्रकाशकेभ्यो मोतीलाल बनारसीदासाख्य प्रकाशनसंस्थाध्यक्षेभ्यः, संशोधकेभ्यश्च श्रीस्वामिद्वारिकादासशास्त्रिमहाभागेभ्यो व्याकरणाचार्यपदवीमलंकृतवद्भ्यो भूयसो धन्यवादान्।

अन्ते च प्रह्वीभूय विपश्चितः प्रार्थये, अस्मिन् ग्रन्थे मदीयाः परकीया वा त्रुटीः साधूकृत्य स्वीकर्तव्योऽयं निबन्धसंग्रह इति।

वाराणसेयसंकृतविश्वविद्यालयः<br>वाराणसी<br>१३।७।६४

रघुनाथशर्मा

# उपोद्घातः

वाराणसेयसंस्कृतविश्वविद्यालये वेदान्तविभागाध्यक्षैः प्रायेण सर्वेष्वपि शास्त्रेषु स्वैरसञ्चारशक्तियुक्तैः पण्डितप्रवरश्रीरघुनाथशर्ममहाभागैर्विरचितानां तदा तदा तत्र तत्र प्रकाशितानां निबन्धानां संग्रहरूपाया अस्याश्चिन्ननिबन्धावलेः प्रकाशनरूपं विद्वत्समाजे समागमनं सर्वेऽपि विद्वद्वरलेखकवैदुष्यसंजातपरिचयाः सर्वात्मना प्रत्युद्गम्याभिनन्दिष्यन्ति। निबन्धानां विषयवैचित्र्यादेव निबन्धकृतां पाण्डित्यस्य व्यापकत्वमनुमातुं शक्यते। एकतः शब्दाद्वैत-ख्यातिवाद-प्रत्यासत्तिविमर्शसदृशाः प्राचीनाः शास्त्राभ्यासपरिष्कृतमानसास्वाद्या विषयाः, अपरतश्चाद्यत्वे समस्तजगतीव भारतेऽपि प्रजाभिः शासनाधिकारिभिश्च प्रतिदिनं विचार्यमाणः, समाचारपत्रेष्वनवरतं चर्च्यमाणः, चिकित्साशास्त्रविशेषज्ञैरविच्छिन्नानुसंधानविषयतां नीयमानः, अर्थकार्श्यजनितसन्तानातिवृद्धिपरिजिहीर्षासमुत्सुकदम्पतिसहस्रसततचिन्त्यमानश्चैको विषयो गर्भनिरोधाख्यः। एतत्कोटिद्वयमध्ये व्याकरण-वेदान्त-शैवदर्शन-हिन्दूधर्म-प्राचीनभारतीयशासनपद्धति-भारतीयवेष-गर्भाधारकपितृगुणदोषसंक्रमणादिविषयका बहवो लेखाः सन्ति। विषयः प्राचीनो वा भवतु इदानीन्तनो वा, सर्वथा प्राचीनभारतीयशास्त्राण्यवलम्ब्यैव विचारः कृतो दृश्यते विद्वद्वर्यैरिति सरसोऽयं संग्रहः सर्वेषां शास्त्रप्रतिपादिततत्त्वावबोधकुतूहलवतां जनानाम्। निबन्धाः प्रायेण शास्त्रविषयभूतः सरलभाषानिबद्धाश्च वैदुष्यद्योतका अपि तत्प्रकटनाभिलाषसंस्पृष्टा दृश्यन्ते। निबन्धेषु द्वौ सूत्ररूपौ—शिक्षासूत्राणि, सदाचारसूत्राणि च। एकः 'गैरिकसूत्राणि' इति संज्ञितः परकृतसूत्रवृत्तिव्याख्यानरूपः। षड्विंशः सप्तविंशश्चेति द्वौ निबन्धौ विख्यातविद्वच्चरित्रवर्णनपरौ। अन्तिमौ द्वौ स्तोत्ररूपौ। एवं निबन्धानां न केवलं विषयकृतं वैचित्र्यम्, स्वरूपकृतमपि वैचित्र्यमुपलभ्यते।

एवं संग्रहस्य सामान्यस्वरूपं निर्दिश्य द्वित्राणां निबन्धानां निकटतो गत्वा स्वरूपप्रदर्शनं पाठकानां रुचिकरं भवेत् इत्यत्र निर्दिश्यते। प्रायेण सर्वेष्वपि दर्शनेषु वासनामधिकृत्य तेषु तेषु प्रसङ्गेषु चर्चा भवति। वासनाशब्दस्य न सर्वत्र स एवार्थो भवति। क्वचित् कथंचित् कस्यचिदनुवृत्तस्यार्थस्योन्नयनेऽपि भारतीयदर्शनेषु विचारपद्धतिषु च वासनाया यद् व्यापकं रूपं तत् कस्यचिच्छास्त्र-गतस्य सन्दर्भस्य पठनेन सम्यङ् नावबोद्धुं शक्यते। यतस्तद्विषयकाः शास्त्र-संदर्भा अतीव विप्रकीर्णा दृश्यन्ते। ते सर्व एकत्रीकृत्य पर्यालोचिताः सन्तो वासनाविषयिकां काञ्चित् समग्रां दृष्टिं जनयेयुः। परं तु प्रायेण विद्वांसः सर्वेषां सन्दर्भाणामेकत्रीकरणेऽप्यपेक्षितं समयं नोपलभन्ते, का कथा तान् सर्वान् सूक्ष्म-तया विचार्य वासनाविषयकसुसंबद्धसिद्धान्providingाविष्करणे। एवं विचारयतो मम प्रकृतसंग्रहान्तर्गतो वासनाविलसितसंज्ञको निबन्धः सर्वविद्वदादरणार्हः प्रति-भाति। अत्र हि तत्तद्दर्शनतत्त्वावबोधार्थं येषां वासनाविषयकमतानां ज्ञानमा-वश्यकं तानि सर्वाण्यपि शास्त्रदृष्ट्या विभज्य वर्गीकृत्य च प्रतिपादितानि। वासनात्रयमूलकः संसार इत्युपक्रम्यात्मदर्शनेन वासनात्रयनाशः, लघुयोग-वासिष्ठोक्तदिशा तस्यैव मोक्षरूपत्वम्, कर्मभिः सुकृतदुष्कृतान्यतररूपैः पूर्वप्रज्ञया वा प्रमाभ्रमान्यतररूपयाऽऽत्मन्यन्तःकरणे वा जनितः कश्चन संस्कारविशेषो वासनेति वासनापदार्थः; विद्यावासना, अविद्यावासना, कर्मवासना, पूर्वप्रज्ञावास-नेति वासनायाश्चत्वारो भेदाः; वासनानामुद्बोधकानि; मातापित्रादिवासनानां पुत्रादौ संक्रमः, इत्येतादृशा विषया निबन्धेऽस्मिन् विचारिताः सन्ति। प्रति-पादितानामर्थानां प्रमाणत्वेन योगवासिष्ठ-सिद्धान्तलेश-न्यायमञ्जरी-काठकोप-निषद्-मुण्डकोपनिषद्-श्रीमद्भागवत-महाभारत-मनुस्मृति-जातकपारिजात-श्रीमद्-भगवद्गीतादिग्रन्थेभ्यः संदर्भाः समुदाहृता दृश्यन्ते। निबन्धस्यास्य परिशीलनेन पाठकानां वासनाविषयकबोधे महद् वैशद्यमायास्यतीत्यत्र नास्ति मे सन्देहः।

प्रस्तुतसंग्रहान्तर्गतव्याकरणविषयकनिबन्धेष्वस्ति द्वयं यद् विशेषतो विदुषां स्वीकारार्हम्। उभयमपि निबन्धकर्तॄणामम्बाकर्त्रीव्याख्याप्रणेतॄणां तत्रभवद्भर्तृ-हरिविरचितवाक्यपदीयस्य गंभीराध्ययनस्य फलभूतम्। तत्र शब्दाद्वैतविमर्श-

संज्ञको निबन्धो वाक्यपदीयप्रथमकाण्डप्रतिपादितव्याकरणदर्शनमूलतत्त्वविवेचनपरः। तत्र प्रतिपादितमर्थजातमतिसंक्षेपेणोच्यमानं त्विदम्—"अशेषमर्थजातं प्रतीयमानं शब्दानुविद्धमेव प्रतीयते। लोके हि विकाराणां प्रकृत्यन्वयो दृष्टः। रूपादयो विषया शब्दरूपानुगता एव दृश्यन्ते। अतोऽर्थानां प्रकृतिः शब्दतत्त्वमेव। शब्दतत्त्वे ब्रह्मणि रूपादीनां भिन्नेन्द्रियग्राह्याणां कल्पितत्वेन भिन्नरूपताया आविद्यकत्वात् तेषां शब्दतत्त्वस्य च परस्परं प्रकृतिविकृतिभाव उपपद्यते। यद्यर्थः शब्दात्मको न भवेत् तदा शाब्दे ज्ञाने न प्रतीयेत; अन्येनान्यस्य प्रतीत्यसंभवात्। शब्देन विषयविशिष्टं ज्ञानमभिलप्यते—मम घट इति ज्ञानं संजातमिति। न चान्येनान्यस्याभिलापो युक्तः, इतिशब्दात्मकोऽर्थो ज्ञानं च। सर्वेऽपि स्थितिप्रवृत्तिनिवृत्तिरूपा व्यवहाराः शब्देनैव क्रियन्ते। अतो व्यवहाराणां तद्विषयाणां च मूलभूतं शब्दात्मकं ब्रह्मैव। तच्चाक्षराणां वर्णानां निमित्तत्वादक्षरमित्युच्यते। एवं शब्दतत्त्वस्य शब्दार्थोभयोपादानत्वम्। वाच्यवाचकभेदभिन्नस्य विश्वस्य जनिका शक्तिः सूक्ष्मवाक्तत्त्वे आश्रिता। अस्य सूक्ष्मवाक्तत्त्वस्य वाच्यवाचकोभयरूपेण विवर्तः। तत्रायं लयसर्गक्रमः—विषयजातस्य विनश्यतः शक्तिरूपेणेन्द्रियेषु प्रविलयः, इन्द्रियाणां बुद्धिवृत्तिषु, बुद्धेश्च सूक्ष्मे वाक्तत्त्वे। सर्गकाले सूक्ष्मात् शब्दतत्त्वाद् बुद्धेरुद्भवः, बुद्धिभ्य इन्द्रियाणाम्, इन्द्रियेभ्यो विषयाणां वाच्यवाचकोभयरूपाणाम्। सर्गप्रविलयशब्दाभ्यां प्रबोधनिद्राद्वयं वाच्यम्। सूक्ष्मं वाक्तत्त्वमेव ज्ञाता वक्ता च। विश्वमिदं शब्दशक्तिनिबन्धनं शब्दोपादानं च। सर्वा अप्यर्थमात्राः शब्दमात्रासु निश्रिताः। सर्वो ह्यर्थः स्वविषयकसंविज्ञानजनकपदप्रतिपाद्य एव स्मृतिनिरूपणाभिजल्पनिरूपणादिक्रमेण तत्तद्व्यवहारपथमवतरति। शब्दस्यार्थप्रकाशकस्यार्थतादात्म्यापन्नस्य बुद्धितादात्म्यापन्नेन स्वरूपेणार्थोपादानत्वम्। आम्नाये संहृतक्रमभोक्तृभोग्यभेदं तच्छक्तिरूपेणावस्थितं सूक्ष्मवागात्मकात्मतत्त्वमेव बहुधा भिन्नस्य विश्वस्य कारणत्वेनाम्नातम्। महत्तत्त्वात्मनावस्थितस्य शब्दस्य विश्वोपादानत्वं त्रयीरूपेणावस्थितस्य तस्य विश्वनिमित्तत्वं चाख्यातम्। क्वचित् चिद्रूपस्य ज्ञातुः शब्दरूपत्वमुक्तं क्वचित् परमात्मनोऽपि शब्दरूपताऽऽख्याता। तेन परब्रह्मरूपेण शब्देन

सायुज्यमिष्यते मुमुक्षुभिः। तस्मिन् खलु परावाग्रूपे नित्ये शब्दे वाग्योगविदो वैयाकरणा अहङ्काराश्रितान् सर्वान् वासनारूपान् सन्देहरूपाँश्च ग्रन्थीन् विच्छिद्य विभागमत्यन्तं परित्यज्य संसृज्यन्ते। वैयाकरणस्य व्याकरणहेतुकशब्दसंस्कार-ज्ञानेन शुक्लो धर्मो जायते, तेन च चित्तशुद्धिद्वारा ज्ञानोत्पत्तिरिति मोक्षमार्गो दर्शितः। "तद् ब्रह्मामृतमश्नुते", "परेण ज्योतिषैकत्वं प्रपद्यते" इत्यादिना मोक्षप्राप्तिरेव निर्दिष्टा। परेण ज्योतिषैकत्वप्राप्तौ चायं क्रमः—वैखर्या व्याकरणेन संस्कारमाधाय तामेव वाचं ध्यानक्रमेण मध्यमारूपेण पश्यन्तीरूपेण च सूक्ष्म-वर्णक्रमवतीमेव बुद्धौ निवेश्य, अर्थात् वाचं करणात् प्राणे, प्राणाद् बुद्धौ ध्यान-क्रमेण निवेश्य, ततः परमस्या वाचोऽविद्याहङ्कारादीनि बन्धनानि पृथक्कृत्य परावाग्रूपं ज्योतिरान्तरं साक्षात्कृत्य परेण ज्योतिषैकत्वं प्रपद्यते। एवं परावाग्रू-पस्य शब्दतत्त्वस्य बुद्धिप्राणौ द्वारीकृत्य शब्दार्थोभयात्मकस्य विश्वस्य सर्गविसर्गौ इति शब्दाद्वयवादस्य संक्षेपः।

अत्र पाठकैरिदं न विस्मरणीयं यद् वाक्यपदीये शब्दाद्वैतवादसंबन्धीनि सर्वाणि तत्त्वानि नैकत्र कुत्रचिदुपन्यस्य व्याख्यातानि तत्रभवता भर्तृहरिणा। तत्र तत्र विप्रकीर्णानि तानि, कदाचिच्च परस्परविरुद्धानि प्रतिभान्ति। तानि सर्वाणि संगृह्य तेषां पूर्वोत्तरानुसंधानेनापाततः प्रतिभासमानानां विरोधानां परिहारेण च समन्वयं कृत्वा यदेकस्य सुसंबद्धस्य वादस्य प्रकृतनिबन्धे प्रति-पादनं दृश्यते तद् बह्वायाससाध्यं न येन केनापि विदुषा शक्यक्रियम्, विशेषतो मूलग्रन्थस्येतरशास्त्रग्रन्थभाषाविलक्षणया कठिनया च भाषया रचितत्वात्। अतो व्याकरणदर्शनसूक्ष्मतत्त्वावबोधकुतूहलिनः सर्वेऽपि लेखकमहाभागानामस्मिन् विषयेऽधमर्णाः।

व्याकरणविषयकः प्रतिभाविमर्शनामको निबन्धोऽपि विमृश्यताम्। वाक्य-पदीयद्वितीयकाण्डप्रतिपादितोऽयं प्रकृतनिबन्धविषयः। तत्र हि वाक्यकाण्डे वाक्यलक्षणाष्टकं वाक्यार्थलक्षणषट्कं च महता विस्तरेण परपक्षप्रतिक्षेपपूर्वकं वैयाकरणपक्षस्थापनाबुद्ध्या विवेचितं तत्रभवता भर्तृहरिणा। वैयाकरणस्य

एकोऽनवयवः शब्दः स्फोटलक्षणो वाक्यम्, प्रतिभैव वाक्यार्थः, अध्यासश्च संबन्ध इति मतम्। प्रकृतनिबन्धे प्रतिभायाः स्वरूपनिरूपणात् प्राग् वाक्य-लक्षणाष्टकस्य वाक्यार्थलक्षणषट्कस्य वाक्यवाक्यार्थयोः संबन्धविकल्पानां च तत्त-द्वादिसम्मतानां वैशद्येनोपवर्णनं कृतम्। तत्रभवद्भर्तृहरिसम्मतप्रतिभाया अयमेव विशेषो यदुपक्रमे वाक्यार्थस्वरूपत्वेन समुत्प्रेक्षितमिदं तत्त्वमन्ततः शब्दतत्त्व-मिवातीव व्यापकं किञ्चित् संजातम्। प्रतिभासंबन्धीनि यानि बहूनि तत्त्वानि वाक्यपदीये तदनुसारेण प्रकृतनिबन्धे च निरूपितानि सन्ति तानि संक्षेपत इत्थं समुपस्थाप्यन्ते—"वाक्यार्थत्वेन वैयाकरणैरुक्तेयं प्रतिभोपजायमानाप्यन्यान् प्रति कथंचिदपीदं तदित्येवमनाख्येया। अनाख्येयापि प्रत्यात्मवृत्तिः स्वानुभवसिद्धे-त्यनपह्नवनीया। स्वरूपेण अनाख्येयापि फलमुखेनाश्रयमुखेनाभिव्यंजकमुखेन च निरूपयितुं शक्यत एव। तां प्रतिभां न किञ्चित् प्राणिमात्रं व्यवहारेऽतिवर्तते। सर्वोऽपीतिकर्तव्यतारूपो व्यवहारः प्रतिभामूलक एव। सा च प्रतिभा इदानींतनी प्राक्तनी च। प्रथमा प्रौढानां द्वितीया बालानां तिरश्चां च। द्विविधापि सा कवित्वहेतुः कवीनाम्। 'सतां हि सन्देहपदेषु वस्तुषु प्रमाणमन्तःकरणप्रवृत्तयः' इति कविकुलगुरूक्तदिशा सर्वो लोकः स्वां स्वां प्रतिभां प्रमाणत्वेन समनु-गच्छति। तिरश्चामपि पशुपक्षिणां जातमात्राणां प्रतिभाबलात् स्वस्वजातिसमु-चिताः समारम्भाः। अस्याश्च प्रतिभाया आसत्तिविप्रकर्षाभ्यां शब्द एव मूलम्। स्वभावचरणाभ्यासयोगादृष्टविशिष्टप्रभावरूपैर्निमित्तैः सा षड्विधा। बहुविधापि सा आगमिकवाक्याभिव्यङ्ग्या तन्मूलकलौकिकवाक्यप्रतिपाद्या च। वाक्यार्थः प्रतिभारूपतयैक एव। सर्वोऽपि शब्दः समनन्तरकार्यावबोधनरूपायाः प्रतिभाया एव हेतुः। सर्वोऽपि शब्दः सर्वेषां प्राणिनामभीष्टे प्रतिभाहेतुः। ध्वन्यात्मकोऽपि शब्दः प्रतिभाहेतुः। तदेवं बहुविधविकल्पविसृष्टः प्रतिभापदार्थ एवं बुद्धौ स्फुरति—विशिष्टार्थविषयकं कर्तव्यज्ञानं प्रतिभेति। इयं च सर्वेषां प्राणिनां प्रवृत्तिनिवृत्तिरूपाणां सर्वेषां व्यवहाराणां जननी" इति॥

एवमतिसंक्षेपेण निर्दिष्टादस्मात् प्रकृतनिबन्धप्रतिपादिततत्रभवद्भर्तृहर्युपदिष्ट-प्रतिभासंबद्धतत्त्वजातादेतावत्तु स्पष्टमेव यत्तत्त्वमिदमतीव व्यापकम्। किञ्चायं

निबन्धः आङ्गलभाषायां Meaning, Intelligence, Intuition, Inspiration, Instinct, Nature इत्यादिशब्दैः प्रतिपादितानि सर्वाण्यपि दार्शनिकानि वा वैज्ञानिकानि वा तत्त्वानि क्रोडीकरोति। एतादृशस्य व्यापकस्य तत्त्वस्य पण्डितपरम्परागतवादकोलाहलनिमग्नस्यात एव स्फुटमनुपलक्ष्यमाणस्य सरलया भाषया विस्तरेण वैशद्येन च स्वनिबन्धे प्रतिपादनेन पण्डितवरश्रीरघुनाथशर्माणः सर्वेषामस्माकं पाठकानां कृतज्ञतायाः पात्रं संजाताः।

न सर्वेषां निबन्धानां सारांशनिष्कर्षणमुद्दिश्य लिख्यतेऽयमुपोद्घातः। तस्यानावश्यकत्वात्, समस्तनिबन्धपठनमात्रलभ्यलाभानावहत्वाच्च। अनेन द्वित्रनिबन्धमात्रस्वरूपप्रदर्शनेन स्थालीपुलाकन्यायेन समस्तसंग्रहस्य स्वरूपमनुमातुं किञ्चिदप्यविहाय तस्य परिशीलनं कर्तुं च यदि पाठकमहाभागाः प्रेरिता भवेयुस्तर्ह्युपोद्घातस्यास्य लेखने प्रवृत्तोऽहमात्मानं कृतार्थमवगमिष्यामि।

अन्ततोऽहं काशीविश्वनाथं प्रार्थये यद् विद्वत्समाजसेवायां व्यापृताः श्रीरघुनाथशर्ममहाभागाः सदैव स्वास्थ्येन समायुक्ताः सन्तोऽविघ्नेन स्वस्कन्धसमारोपितसर्वकार्यनिर्वहणे समर्था भवेयुरिति शम्।

को० अ० सुब्रह्मण्य अय्यर

२-९-६४

[ लक्ष्मणपुरीयविश्वविद्यालयस्य वाराणसेयसंस्कृतविश्वविद्यालयस्य च भूतपूर्वा उपकुलपतय एते विश्वसंस्तुतानुभावाः ]

## विषयक्रमः

# चित्रनिबन्धावलिः

## ( १ )

## व्याकरणे शब्दार्थसम्बन्धविचारः

अव्याहता यात्मकला कालशक्तिमुपाश्रिता ।
शब्दतन्मात्रतः सूते जगत्तस्यै नमो नमः ॥
या शब्दरूपा प्रकृतिर्विकृतिश्चार्थरूपतः ।
विभज्य स्वं द्विधा भाति तस्यै नित्यं नमो नमः ॥

अथातः शब्दार्थसंबन्धजिज्ञासा । यतः शब्दश्रवणानन्तरमर्थविशेषविज्ञानं कस्यचिद् भवति कस्यचिन्नेति सर्वजनानुभवसिद्धम् । ततः प्रतिपद्यामहे—अस्ति शब्दार्थयोः कश्चन संबन्धो यद्ग्रहेऽर्थविशेषस्य संप्रत्ययोऽग्रहे नेति । स च संबन्धः शक्तिः पदार्थान्तरमिति मीमांसकाः, ईश्वरेच्छारूप ईश्वरसंकेत इच्छारूपः संकेतो वा शक्तिरिति नैयायिकाः । भेदाभेदरूपं तादात्म्यं शक्तिरिति सांख्या योगा अद्वैतवादिनश्च । तत्रापि भेदः परमार्थोऽभेदस्त्वाध्यासिक इति प्रथमे । चरमे त्वभेदः परमार्थो भेदोऽध्यस्त इति । बोधकत्वं शक्तिरिति प्राञ्चो वैयाकरणाः । वाच्यवाचकभावः सा इति नव्याः । तद्ग्राहकं चेतरेतराध्यासमूलकं तादात्म्यमिति इति शब्दार्थसंबन्धवादिनां बहुविप्रतिपत्तिसमाकुल एकः पक्षः । अपरोऽपि पक्षः संभाव्यते । नास्ति शब्दार्थयोः कश्चन संबन्धः, अर्थमप्राप्तानामपि शब्दानां स्वभावादेव तत्तदर्थबोधजनकत्वमिति । यथेन्द्रियाणामप्राप्यकारित्वपक्षे तत्तदिन्द्रियाणि विषयमप्राप्तान्यपि स्वस्वविषयं गृह्णन्ति, स एव तेषां स्वभावः । स्वभावादेव चान्यार्थसंबन्धेऽपि तेषां तदग्राहकत्वम् । तद्वत् शब्दार्थयोः संबन्धाभावेऽपि स्वभावादेव शब्दानां तत्तदर्थानुभावकत्वम् । न त्वेतन्मते शब्दादर्थोपस्थितिः, स्मृतिकारणाभावात् । किन्तु वाक्यादिव वाक्यार्थस्य पदात्पदार्थस्यानुभव एव । पदस्य पदार्थानुभावकत्वं च मञ्जूषायां स्पष्टम् ।

एवं पक्षद्वयावष्टम्भेन शब्दार्थयोः संबन्धोऽस्ति न वेति संशय इदमवधार्यते । अस्ति कश्चन शब्दार्थयोः संबन्ध इति । स्वभाववादिनां तु

तादृशस्य स्वभावस्यापि किं नियामकमिति प्रश्ने संबन्धस्यैव नियामकत्वं तूष्णीम्भावो वा प्रसज्येत। प्रागुक्तशक्तिरूपसंबन्धवादिनां तु शक्तिरूपसंबन्धस्य नियामकम्, कार्यकारणभावरूपं संबन्धान्तरं वा, इतरेतराध्यासमूलकं तादात्म्यं वेति विशेषः।

अथेदानीमप्रकृतत्वेन मतान्तरेषु शब्दार्थसंबन्धालोचनमपहायाद्वैतवेदान्तसिद्धान्ते शब्दार्थसंबन्धः क इति व्यवस्थापयितुं नान्तरीयकतया तन्मते सर्गक्रमश्चिन्त्यते, तत्र तस्योपयोगात्। तत्रोपनिषत्सु यद्यपि विविधः सर्गक्रमः श्रुतः, सर्गस्याध्यारोपितत्वेनानादृतत्वात्, अजातवादस्यैव मुख्यत्वात्। "इयं विसृष्टिर्यत आबभूव", "तुच्छेनाभ्यपिहितं यदासीत्" इत्यादिश्रुतिसंवादात्, गौड़पादकारिकासु तथोपपादनाच्च। तथापि समन्वयोऽपि कर्तुं शक्यते। तथा हि—"तस्माद्वा एतस्मादात्मन आकाशः संभूतः" इत्याकाशादिका सृष्टिः, "तत्तेज ऐक्षत" इत्यादौ तेजआदिका सृष्टिः। "यथाऽग्नेर्विस्फुलिङ्गा व्युच्चरन्ति सहस्रशः सरूपाः। एवमेवाक्षरात् सोम्य सर्वे भावा युगपद् व्युच्चरन्ति तत्रैवापियन्ति च" इत्यर्थोऽपि श्रुतौ दृश्यते। ततो युगपत्सर्वभावानां सृष्टिः प्रतीयते।

तत्रेयं व्यवस्था आकाशादिकैव सृष्टिः। तदनुरोधेन च "तत्तेज ऐक्षत" इत्यादावाकाशं वायुं च सृष्ट्वेत्यध्याहार्यम्। युगपत्सृष्टिस्तु भौतिकानां सर्वेषां भावानां न तु भूतसूक्ष्माणाम्, क्रमश्रुतिविरोधात्। युगपत्सृष्टिश्रुतौ "अक्षरात्" इति शब्देभ्य इत्यर्थकं जातावेकवचनम्, भूतसूक्ष्मोपाधिकमपरं ब्रह्म वाऽत्राक्षरम्। उभयोरप्यक्षरत्वं कल्पान्तस्थायित्वेन, अन्यथाऽद्वैतव्याघातात्। व्यवस्थापयिष्यते चाग्रे शब्दानां सर्वजगदुपादानत्वम्।

एवमाकाशादिकसृष्टेर्व्यवस्थितौ "तस्माद्वा एतस्मादात्मन आकाशः संभूत आकाशाद्वायुर्वायोरग्निरग्नेरापोऽद्भ्यः पृथिवी पृथिव्या अन्नौषधयः" इति श्रुत्यर्थो विमृश्यते। प्रलये बहुकालात्ययानन्तरं प्राणिनां मायानिलीनादृष्टपरिपाकवशान्मायावृत्तिरूपेक्षणसंपन्नादात्मन आकाशः संभूतः। अत्रात्मोपाधिं मायामपेक्ष्य संभवः परिणामः, विशेष्यमात्मानमपेक्ष्य तु विवर्तः सः, आत्मनः कूटस्थनित्यत्वात्। अत्राकाशपदेन शब्दतन्मात्रं गृह्यते, यतो यदद्वैतसिद्धान्ते भूतसूक्ष्मपदेन व्यवह्रियते, तदेव सांख्यैस्तन्मात्रपदेन व्यपदिश्यते, नैयायिकैस्तु परमाणुपदेन। अत्र च श्रुतावाकाशादिपदेन भूतसूक्ष्मसृष्टिरेवाभिप्रेता, अग्रे पञ्चीकरणश्रवणात्। तथा च मायोपहितादात्मनः शब्दतन्मात्रं समुत्पन्नमिति पर्यवसितम्। अत्र चाकाश इत्यत्रैकवचनं जात्यभिप्रायेण। शब्दपरमाणूनां सत्ता च हरिणाऽपि प्रदर्शिता

ब्रह्मकाण्डे वाक्यपदीये—"अभ्राणीव प्रचीयन्ते शब्दाख्याः परमाणवः" (११२) इति। आकाशाद् वायुः। शब्दपरमाणुभ्यः (प्रतिक्षणं परिणामित्व-स्वभावत्वात् सक्रियेभ्यः) वायुः संभूतः। अत्र संभवः परिणामः। दृश्यत उपपद्यते च भावक्रियातो वायुसंभवः। अत्राप्युभयत्र प्रकृतिविकृत्योर्जाता-वेकवचनम्। एवमग्रेऽपि।

अत्र यद्यपि शब्दतन्मात्रेभ्यो वायुजन्मैव श्रुतम्, तथापि तेभ्यः प्राणिनां श्रोत्रमपि समुत्पद्यते, चक्षुरादिवद् गतिशीलं प्राप्यकारि च। सर्वाणि ज्ञानेन्द्रियाण्येकैकसत्त्वप्रधानभूतसूक्ष्मकार्याणि, प्रतिनियतविषयकत्वात्। मनस्तु सर्वेषां तादृशां भूतसूक्ष्माणां कार्यम्, सर्वविषयकत्वादिति वेदान्त-सिद्धान्तात्। किञ्च, शब्दतन्मात्रेभ्य एव स्थूलशब्दोऽपि जायते। तथा च शब्दतन्मात्राणां कार्यं वायुतन्मात्रम्, श्रोत्रम्, स्थूलशब्दश्चेति त्रिकम्। इन्द्रियाणां भूतसूक्ष्मोपादानकत्वेन सूक्ष्मत्वादेव "अणवश्च" (२।४।८) इति सूत्रे सर्वेषां तेषां सूक्ष्मत्वं परिच्छिन्नत्वञ्च दर्शितं शारीरकभाष्ये। पञ्ची-करणे तु शब्दतन्मात्रेभ्य इतरतन्मात्रतुरीयांशसहकृतेभ्य आकाशजन्माऽपि। एवमग्रेऽपि तत्तत्तन्मात्रेभ्यः स्वेतरतन्मात्रतुरीयांशसहकृतेभ्यस्तत्तन्महाभूत-जन्म बोध्यम्। वायोरग्निः। वायुतन्मात्रेभ्यश्च विरुद्धदिक्क्रियतया परस्परं प्रति संहन्यमानेभ्योऽग्निस्तेजस्तन्मात्रं संभूतम्। परस्परप्रतिघाते हि तेजसः समुत्पत्तिरपि दृश्यते एव। अग्नेरापः। तेजस्तन्मात्रेभ्यो जलतन्मात्राणि संभूतानि। तेजसः प्रकर्षे हि जलजन्माऽपि प्रत्यक्षमेव। अद्भ्यः पृथिवी। जलतन्मात्रेभ्यस्तेजसा पाकेन काठिन्यमागतेभ्यः पृथिवीतन्मात्राणि। इद-मप्युपपन्नम्, दृश्यते च समुद्रफेनादिषु जलस्य तेजसा पाकेन काठिन्यं पृथि-वीभावश्च, श्रुतञ्च—"तत्शरः समहन्यत सा पृथिव्यभवत्" इत्यादौ। पृथिव्या अन्नौषधयः। अत्र पृथ्वीपदेन पञ्चीकृता पृथिवी ग्राह्या, तस्या एवान्नौषधिप्रकृतित्वात्। एवञ्च शब्दतन्मात्राण्येवेतरतन्मात्राणां साक्षात्पर-म्परया वा प्रकृतिरिति सर्वेषु तन्मात्रेषु शब्दतन्मात्रानुगम इति चायातम्। एषाञ्च शब्दस्पर्शरूपरसगन्धाख्यानां पञ्चतन्मात्राणां पञ्चीकरणेन स्थूल-भूतानां पञ्चानामुत्पत्तिः स्थूलभूतेषु च सर्वेषु शब्दतन्मात्रानुगम इति च सिद्धम्। अत एव पञ्चदश्यां सर्वेष्वपि भूतेषु शब्दस्थितिरभिहिता—

क्षितौ चटचटाशब्दो जले बुदुबुदुध्वनिः।
वह्नौ भुगुभुगुध्वनिर्वायौ वीसीति शब्दनम्॥ इत्यादिना।

अत एव सर्वेषु भूतेष्वाघातेन शब्दाभिव्यक्तिः। अत एवोक्तं वाक्य-पदीये ब्रह्मकाण्डे—

अजस्रवृत्तिर्यः शब्दः सूक्ष्मत्वान्नोपलभ्यते ।
व्यजनाद्वायुरिव स स्वनिमित्तात् प्रतीयते ॥ ११७ ॥

पञ्चीकरणप्रक्रिया च—

द्विधा विधाय चैकैकं चतुर्धा प्रथमं पुनः ।
स्वस्वेतरतुरीयांशयोजनात् पञ्च पञ्च ते ॥

इत्यादिवाक्यैरन्यत्र प्रपञ्चितेति नेह प्रतन्यते । एवं भौतिकस्यापि त्रैलोक्यस्य तत्तदर्थवाचकाः स्थूलशब्दा एव प्रकृतय इति व्यवस्था । तथा हि—शब्दतन्मात्रेभ्यः स्थूलशब्दोत्पत्तिरिति प्राक् प्रतिज्ञातम् । एतदेव—

स्वशक्तौ व्यज्यमानायां प्रयत्नेन समीरिताः ।
अभ्राणीव प्रचीयन्ते शब्दाख्याः परमाणवः ॥ १११ ॥

इति हरिणाप्युक्तम् । तत्र शब्दपरमाणुभ्यः स्थूलशब्दोत्पत्तिप्रक्रिया प्राक् प्रदर्श्यते । पश्चात्तु स्थूलशब्देभ्योऽर्थोत्पत्तिप्रक्रिया । तत्र शब्दतन्मात्राणि प्रागदृष्टसञ्जाततेजःपरिपाकवशादकाराकारेण परिणतानि । तेजःपरिपाकवशादेव रूपरसादिपरावृत्तिरपि फलादिषु दृष्टेति प्रकृतेऽपि तत्कल्पना । उक्तञ्च हरिणा—

अथेदमान्तरं ज्ञानं सूक्ष्मवागात्मना स्थितम् ।
व्यक्तये स्वस्य रूपस्य शब्दत्वेन विवर्तते ॥ ११३ ॥
स मनोभावमापद्य तेजसा पाकमागतः ।
वायुमाविशति प्राणमथासौ समुदीर्यते ॥ ११४ ॥
अन्तःकरणतत्त्वस्य वायुराश्रयतां गतः ।
तद्धर्मेण समाविष्टस्तेजसैव विवर्तते ॥ ११५ ॥ इति ।

ततस्तत्तद्वर्णाकारैः, "अकारो वै सर्वा वाक्" इति श्रुतेः । ततो वर्णाः पदरूपेण परिणताः । तत्रापि सर्वपदेभ्यः प्रागोङ्काराथशब्दाकाराभ्यामेव परिणामः, ततोऽन्यपदाकारेण । तदुक्तम्—

ओङ्कारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा ।
कण्ठं भित्वा विनिर्यातौ तस्मान्माङ्गलिकावुभौ ॥ इति ।

( ब्र० सू० १ भाष्यभामत्याम् )

पदानाञ्च वाक्याकारेण परिणाम इति । अथाधुना पदेभ्यः पदार्थानां जन्म श्रुतं समुपपाद्य प्रदर्श्यते । तत्र श्रुतौ—"स भूरिति व्याहरत् स भूमिमसृजत्, भुवरित्यन्तरिक्षम्" इत्यादि श्रूयते । वाक्यपदीयेऽपि—

अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम् ।
विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः ॥

इत्यत्र ब्रह्म शब्दतत्त्वमिति प्रकृतिविकृतिभावेन सामानाधिकरण्य-निर्देशः ।

शब्देष्वेवाश्रिता शक्तिर्विश्वस्यास्य निबन्धनी ।
यन्नेत्रः प्रतिभात्मायं भेदरूपः प्रकाशते ॥११९॥

अत्र निबन्धनी जनिका ।

शब्दस्य परिणामोऽयमित्याम्नायविदो विदुः ।
छन्दोभ्य एव प्रथममेतद् विश्वं व्यवर्तत ॥१२१॥

एतस्य श्लोकस्य टीकायां हरिवृत्तौ च—"वागेव विश्वा भुवनानि जज्ञे" इति ऋङ् मन्त्रः "वाच इत् सर्वममृतं यच्च मर्त्यम्" इति च । स्मर्यते च—

विभज्य बहुधात्मानं स छन्दस्यः प्रजापतिः ।
छन्दोमयीभिर्मात्राभिर्बहुधैव विवेश तम् ॥ इति ।

उक्तवाक्येभ्यो विश्वस्य शब्दोपादानकत्वमविपर्यस्तासंदिग्धं प्रतीयते । तच्चैवमुपपद्यते—पञ्चीकृततत्तद्भूतसहकृतेभ्यस्तत्तदर्थवाचकशब्देभ्यस्तानि तानि भौतिकानि जायन्त इति । न चैवं शब्दस्यैव तत्तदर्थोपादानत्वे—"पृथिव्या अन्नौषधयः" इति श्रुतिविरोधः, भूतशब्दयोरुभयोः समप्राधान्येनोपादानत्वात् । न च विजातीययोर्द्वयोरेककार्योपादानत्वासंभवः—सर्वस्यापि प्रागुक्तरीत्या साक्षात्परम्परया शब्दोपादानकत्वोपपादनेन वैजात्यासिद्धेः । दृष्टञ्च उर्णासूत्रकार्पाससूत्रयोर्विजातीययोर्द्वयोरेकरज्जूपादानत्वम् । एवञ्चार्थानामुभयोपादानकत्वे—"स भूरिति व्याहरत् स भूमिमसृजत्" इति, "पृथिव्या अन्नौषधयः" इत्यनयोर्न विरोधः। एवञ्च शब्दार्थयोः प्रकृति-विकृतिभावे तादात्म्यमेव भेदाभेदरूपं संबन्धः, तस्य च नियामकं तयोः कार्यकारणभावरूपं संबन्धान्तरमिति न काऽप्यनुपपत्तिः । एवमद्वैतसिद्धान्ते वर्णः पदं वाक्यञ्च सर्गाद्यकालिकोत्पत्तिमत् कल्पान्तस्थायि च तत्त-त्स्थानाभिघातजनितध्वनिभिश्च तेषामभिव्यक्तिरेव न तूत्पत्तिरिति बाह्य-शब्दतदर्थोत्पत्तिप्रक्रिया ।

अथाभ्यन्तरशब्दतदर्थोत्पत्तिप्रक्रिया । सन्ति हि बाह्यशब्दार्थवदाभ्यन्तरा अपि शब्दा अर्थाश्च । ते च बौद्धाः, बुद्धौ समुपलभ्यमानत्वात् । तत्र बौद्धा अर्थाः प्राग् द्विविधाः—सन्तोऽसन्तश्च । तत्र सन्तो बुद्धौ बहिश्चोपलभ्यन्ते,

यथा घटादयः। असन्तोऽपि द्विविधाः—अत्यन्तासन्तोऽनिर्वचनीयाश्च। तत्रात्यन्तासन्तो नृशृङ्गादयः। अनिर्वचनीयाः शुक्तिरूप्यादयः स्वाप्नाश्च। तत्र बौद्धपदपदार्थयोरपि बुद्धिरूपैकोपादानकत्वेन तादात्म्यमेव, तदभिन्नाभिन्नस्य तदभिन्नत्वनियम इति न्यायात्। यद्वा बुद्धिवृत्त्यात्मकपदस्य पूर्वं जातस्य कारणत्वम्, उत्तरजातस्य च बुद्धिवृत्त्यात्मकस्यार्थस्योपादेयत्वम्, पदवृत्तिमद्बुद्धेरुपादानकारणत्वादिति प्रकृतिविकृतिभावसत्त्वेन बौद्धयोरपि शब्दार्थयोस्तादात्म्यमेव संबन्धः। या तु—

आत्मा बुद्धया समेत्यार्थान्मनो युङ्क्ते विवक्षया।
मनः कायाग्निमाहन्ति स प्रेरयति मारुतम्॥
सोदीर्णो मूर्ध्न्यभिहतो वक्त्रमापद्य मारुतः।
वर्णाञ्जनयते................................॥

इत्युक्ता प्रक्रिया, सा तु सर्गादौ जातस्य स्थितस्य शब्दस्यैवाभिव्यक्तिप्रक्रिया, न तूत्पत्तिप्रक्रिया। तत्र जनयत इत्यस्याभिव्यञ्जयतीत्यर्थः। जन्धातोश्चाभिव्यक्तौ लक्षणा, अन्यथा—"एकदेशविकारे हि नित्यत्वं नोपपद्यते" इति वाक्यवोधितनित्यत्वसिद्धान्तव्याकोपः प्रसज्येत। शब्दतन्मात्रकार्यस्य चाकाशस्य व्यापकत्वात् शरीरान्तराकाशेऽपि शब्दतन्मात्ररूपा वर्णरूपाः पदरूपा वाक्यरूपाश्च शब्दा आकाशधर्माः सन्त्येव, ये सर्गादौ साक्षात्परम्परयात्मनो जाताः। तत्र शब्दतन्मात्राणां कारणीभूत आत्मा परा वागभिधीयते, शब्दतन्मात्राणि तु पश्यन्तीशब्देन, वर्णपदवाक्यरूपाणि च मध्यमाशब्देन अभिव्यक्तास्तु त एव शब्दा वैखरीशब्देन। तदुक्तम्—

परा वाङ् मूलचक्रस्था पश्यन्ती नाभिसंस्थिता।
हृदिस्था मध्यमा ज्ञेया वैखरी कण्ठदेशगा॥ इति।

अत्रात्मनः परा वागिति निर्देशः प्रकृतिविकृत्योस्तादात्म्यात्। उक्तञ्च—

"स्वरूपज्योतिरेवान्तः परा वागनपायिनी" इति।

शब्दतन्मात्रस्य तु पश्यन्तीपदेन निर्देशः, ज्ञानविषयो भवतीत्यर्थमाश्रित्य। स चार्थो दृशेः कर्मकर्तरि लटः शतरि प्रयोगमाश्रित्य बोध्यः, मध्यमापदेन निर्देशस्तु पश्यन्तीवैखर्योर्मध्यभवत्वेन। यद्यपि शब्दतन्मात्राण्यपि न सर्वेषां ज्ञानगोचराणीति तत्र प्रागुक्तरीत्याऽपि पश्यन्तीपदप्रयोगानुपपत्तिः, तथाप्यसाक्षात्कृतात्मनामपि योगिनां समाधौ ज्ञानगोचरत्वेन तथा व्यवह्रियते, परस्या वाचस्तु तथात्वाभावेन न तथा निर्देशः। यत्तु—

वैखर्या मध्यमायाश्च पश्यन्त्याश्चैतदद्भुतम् ।
अनेकतीर्थभेदायास्त्रय्या वाचः परं पदम् ॥ (वाक्य. ब्र. १४२)

इति हरिणा त्रैविध्यमेव वाच उक्तम्, तत्तु युक्तमेव, आत्मनो वस्तुतः शब्दरूपत्वाभावात् । एवं पदस्यैकस्य स्थायिनो वाचकत्वसिद्धौ जातिस्फोट-वादो वैयाकरणानां पराकृतो वेदितव्यः । तथा शब्दस्य प्रागुक्तरीत्या सर्वोपादनत्वे आकाशगुणः शब्द इति नैयायिकानां प्रवादोऽपि दूरोत्सारित एव । अन्यथा साम्प्रतं शब्दानां रेडियोयन्त्रादिना गतिरनुभूयमाना नोप-पद्येत, गुणानां निष्क्रियत्वात् ।

यत्तु प्रागुक्तं शब्दतन्मात्रेभ्यो वर्णोत्पत्तिरिति, तत्रायं विवेकः । शब्दतन्मा-त्रेभ्यो ध्वनिर्वर्णश्चेति द्विविधः समुत्पद्यते । तत्र वायुतन्मात्रसहकृतेभ्य एव शब्दतन्मात्रेभ्यः शब्दजन्मेति सहकारिवायुतन्मात्रवैजात्यादेव ध्वनिवर्ण-रूपतया वैजात्यं द्वैविध्यञ्च शब्दस्य । इदमपि चात्र बोध्यम्—यथा वर्णा कत्वादिधर्मैर्भिन्ना एव तथा ध्वनयोऽपि परस्परं विजातीया एव । तच्च वैजात्यं तेषामनुभूयते कण्ठताल्वाद्यभिघातेषु कोणादिवादनेषु चाभि-व्यक्तानाम् । एवञ्च वर्णधर्मा एव कत्वादयः, न तु तत्रारोपिताः; तथात्वे वर्णानां ध्वनिभ्यो भेदानुपपत्तेः । वर्णानां प्रागुक्तरीत्या स्थायित्वादेव "वर्णा एव पदमिति भगवानुपवर्षः" इति सबहुमानं शारीरकभाष्यकृद्भिरुक्तम् । वायुतन्मात्राणाञ्च शब्दतन्मात्रसहकारित्वमुपादानत्वेन, न तु निमित्तत्वेन । कथं विजातीयतन्मात्राणामेककार्योपादानत्वमिति शङ्का तु प्रागेव निराकृता। किञ्चाद्वैतिनां शरीरस्य पाञ्चभौतिकत्वं भूतपञ्चकोपादानकत्वेनैव । सांख्यानाञ्च मते विरुद्धस्वभावगुणत्रयोपादानकत्वं महत्तत्त्वस्येष्यत एव । यतश्च वायुतन्मात्रसहकृतेभ्यः शब्दतन्मात्रेभ्यो ध्वनिर्वर्णश्चेति द्विविधः शब्दः समुत्पन्नस्तत एव पार्थिवस्य घ्राणस्य गन्धाभिव्यञ्जकत्ववद् वायोर्ध्वन्य-भिव्यञ्जकत्वम्, अभिव्यक्तस्य च ध्वनेर्वर्णाभिव्यञ्जकत्वम् । एष च वायोर्ध्वनेश्च तत्तदभिव्यक्तियोग्यतालक्षणः स्वभावः । तदुक्तं हरिणा ब्रह्मकाण्डे—

द्वावुपादानशब्देषु शब्दौ शब्दविदो विदुः ।
एको निमित्तं शब्दानामपरोऽर्थे प्रयुज्यते ॥ ४४ ॥ इति ।

किञ्चास्मिन्मते वर्णानामप्यनित्यत्वेन सावयवत्वम् । पदस्यापि तत्त्वेन वर्णरूपावयवघटितत्वमेव । एवं वाक्यस्य पदरूपावयवघटितत्वमेवेति वायुना क्रमेणैवाभिव्यक्तिर्वर्णस्य, क्रमेणैव पदस्य, क्रमेणैव च वाक्यस्येति । किन्तु

वर्णेऽभिव्यक्तिक्रम आशुभावित्वान्न लक्ष्यते, क्वचित्तु सन्ध्यक्षरादौ लक्ष्यत एव। "शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति" इत्यादौ शब्दस्य ब्रह्मत्वोक्तिस्तु हिरण्यगर्भस्येव सर्वोपादनत्वेन गौणी, न तु चेतनत्वेनासंभवात्। शब्दज्ञानेन परब्रह्माधिगतिस्तु कार्यज्ञानस्य कारणज्ञाने द्वारत्वात्। तदेवंविध-विचारेण शब्दार्थयोस्तादात्म्यमेव संवन्धो भेदाभेदरूप इति सिद्धम्।

अत एव "ओमित्येकाक्षरं ब्रह्म" इति, "रामेति द्व्यक्षरं नाम मानभङ्गः पिनाकिनः" इति, "वृद्धिरादैच्", "ईदूदेद्द्विवचनं प्रगृह्यम्" इति च संज्ञासंज्ञिनोः सामानाधिकरण्येन निर्देशो नीलो घट इत्यादिवत्। अत्यन्तभेदे गौरश्व इति, अत्यन्ताभेदे घटो घट इति च सामानाधिकरण्यनिर्देशादर्शनात्। तदेव तादात्म्यं शक्तिरिति व्यपदिश्यते, शक्तिसमनियतत्वात्। यथा घटाभावाभावो घट इति, घटभेदाभावो घटत्वमिति। स्वीक्रियते हि स्वस्व-कार्यानुकूलं शक्तिरूपं पदार्थान्तरं सर्वेषु भावेषु भाट्टैः। तदेव व्यवहारे मायावादिभिरपि स्वीक्रियते, व्यवहारे भाट्टनय इति तैरभ्युपगमात्, मायाया आत्मशक्तित्वस्वीकाराच्च, "पराऽस्य शक्तिर्विविधैव श्रूयते" इति श्रुतेः, "देव्या यया ततमिदं जगदात्मशक्त्या" इति स्मृतेश्च। एवं शब्दानामर्थो-पादानत्वेऽपि शक्यार्थोपादानत्वमेव। तथा हि—सर्गादौ भगवानपरं ब्रह्म हिरण्यगर्भं तदुपाधिभूतानि पञ्चतन्मात्राणि (सूक्ष्मभूतानि) तदुपाधिभूतं सूक्ष्मशरीरञ्च ससर्ज। सृष्ट्वा च तस्य सर्गप्रवृत्तये तस्मै वेदं प्राहिणोत्। भगवत्सङ्कल्पेन तस्य पूर्वजन्माधीतवेदस्मृतिः समुत्पन्नेति यावत्। या महास्मृतिपदेन सप्तशत्यामुक्ता ब्रह्मस्तुतौ। ततश्च पदपदार्थज्ञानेन पञ्च-तन्मात्राणि पञ्चीकृत्य तेभ्यो महाभूतानि पाञ्चभौतिकानि चाशेषाणि— "सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्" इति वेदोक्तरीत्या हिरण्यगर्भः ससर्जेति प्रक्रिया। "तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः" इत्यादिश्रुतेः, 'यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै" इत्यादिश्रुतेश्च। तथा च वेदे ये पदपदार्थास्तेषामेवोपादानोपादेयभावे गङ्गापदस्य तादात्म्यं शक्तिर्वा नीर एव न तु तीर इति ततस्तीरबोधो लक्षणयेति लक्षणापि वृत्त्यन्तरं स्वीक्रियते। एवञ्च गङ्गापदे तीरबोधानुकूलसामर्थ्यसमनियता शक्तिर्नास्ति, किन्तु गङ्गापदं स्वशक्यसम्बन्धरूपलक्षणया तीरमुपस्थापयतीति गङ्गापदं तत्र लाक्षणिकमुच्यते।

एवञ्च साम्प्रतं भाषाविज्ञानवादिभिर्यदुच्यते पदपदार्थयोः सम्बन्धो न नित्यः, शब्दानां कालभेदेनार्थान्तरेषु प्रयोगदर्शनादिति, तदनेन प्रत्युक्तम्।

व्यञ्जनानामकं तु वृत्त्यन्तरं शब्दस्य नाद्वैतिभिराद्रियते, तस्याः कुत्राप्यद्वैतवादेऽचर्चनात्। तेन लक्षणया व्यञ्जनाया गतार्थतां मन्यन्ते ते। यथा ह्यखिलेषु व्यङ्ग्यार्थेषु कश्चन शक्यार्थसम्बद्धः, कश्चन च तत्सम्बद्धसम्बद्धः। न च कदापि साक्षात्परम्परया वा शक्यार्थासम्बद्धः कश्चन व्यङ्ग्यार्थः प्रतीयते, तथा सति गतोऽस्तमर्क इत्यादौ बालक्रीडनादेरप्यर्थस्य प्रत्ययापत्तेः। एवं शक्यार्थसम्बद्धार्थस्यैव व्यङ्ग्यत्वे च लक्षणयैव गतार्था व्यञ्जना। यत्तु व्यञ्जनावादिन आलङ्कारिका आहुः—गङ्गायां घोष इत्यादौ प्राग् लक्षणया तीरसंप्रत्ययः, पश्चात्तु व्यञ्जनया शैत्यपावनत्वादिसंप्रत्यय इति क्रमानुभवेन शैत्यपावनत्वादिविशिष्टं तीरं न लक्ष्यम्। तथा हि गङ्गात्वेन तीरसंप्रत्ययः कारणम्, तत्र शैत्यपावनत्वादिप्रतीतिस्तु फलमित्यनुभवात्। तदुक्तं प्रकाशकृद्भिः—

प्रयोजनेन सहितं लक्षणीयं न युज्यते।
ज्ञानस्य विषयो ह्यन्यः फलमन्यदुदाहृतम्॥ इति।

तन्न, गङ्गातीरे घोष इति प्रयोक्तव्ये गङ्गायां घोष इति लक्षणया यत्प्रयुज्यते तस्य तीरे गङ्गागतशैत्यपावनत्वादिसंप्रत्ययः फलम्। तत्तु लक्षणया विशिष्टसंप्रत्ययेऽपि संपद्यत एव। नहि विशिष्टसंप्रत्ययो विशेषणसंप्रत्ययो न भवतीति युज्यते वक्तुम्। विशेषणविशेष्ययोः क्रमभानमालङ्कारिकोक्तं त्वद्वैतिभिर्न स्वीक्रियते। अतः शक्यार्थसंबद्धार्थबोधकत्वाद् व्यञ्जना लक्षणयैव गतार्थेति।

केचित्तु—आलङ्कारिकास्तात्पर्याख्यामपि वृत्तिं मन्यन्ते। तस्याश्च विषयो वाक्यार्थः सर्वत्रैव वाक्ये। 'विषं भुङ्क्ष्व मा चास्य गृहे भुङ्क्था'' इत्यादौ पित्रादिवाक्ये विषभक्षणादप्यनिष्टमेतद्गृहे भोजनमित्यादिरूपस्तात्पर्यार्थोऽपीति वदन्ति च। तदपि न, लक्षणयैव गतार्थत्वात्। दर्शितञ्च वाक्यार्थस्य सर्वत्रैव लक्ष्यत्वं भाट्टसंमतम्। "सर्वत्रैव हि वाक्यार्थो लक्ष्य एवेति च स्थितम्" इत्यादि वदद्भिर्विद्वद्भिः।

पूर्वोक्तो द्वितीयोऽपि तात्पर्यार्थस्तात्पर्यानुपपत्तिमूलकलक्षणाप्रसादलभ्य एवेति तदर्थं वृत्त्यन्तरस्वीकारप्रयासो विफल एव। किञ्च, वाक्यार्थरूपस्तात्पर्यार्थोऽभिहितान्वयवाद आकाङ्क्षाप्रसादेनापि लभ्यः, अन्विताभिधानवादे तु लक्षणालक्ष्यः, अन्वयसामान्यस्यैतन्मते शक्यत्वेऽपि वाक्यार्थरूपस्यान्वयविशेषस्य लक्षणां विनाऽप्राप्तेः। तथा च शब्दार्थयोरुपादानोपादेयभावमूलकं तादात्म्यमेव सम्बन्धः। शब्देऽर्थबोधानुकूला शक्तिस्तु पदार्थान्तरभूता न

तयोः संबन्धः, अप्रतियोगिकत्वात् । नहि दण्डे घटानुकूला कपाले वा तदनुकूला शक्तिस्तयोस्तयोः सम्बन्ध इति केऽपि मन्वते । तथा च तादात्म्यरूपेण शब्दार्थसम्बन्धेन शब्देऽर्थबोधानुकुला शक्तिर्ज्ञाप्यते, सर्वत्रैव शक्तेरनुमेयत्वात् । तादात्म्यन्तु प्रत्यक्षमेव, अयं गौरिति सामानाधिकरण्येन निर्देशात् । वाच्यवाचकभावरूपोऽपि शब्दार्थयोः सम्बन्धो यदि शक्तिस्तदा सोऽपि तादात्म्यमूलक एव । तदुक्तं मञ्जूषायाम्—"तद्ग्राहकञ्चेतरेतराध्यासमूलकं तादात्म्यम्" इति । वस्तुतस्तु शब्दार्थयोर्वाच्यवाचकभावरूपसम्बन्धसत्वेऽपि न तस्य शक्तिरूपतया बोधजनकत्वम् । वाचकत्वं हि शब्दे बोधजनकत्वमेव, न च बोधजनकत्वरूपे तस्मिन् बोधं प्रति जनकत्वम् । नहि दण्डनिष्ठं घटजनकत्वं घटस्य कारणम् । तस्माच्छब्देऽर्थबोधानुकूलायाः शक्तेर्नियामकं शब्दार्थयोस्तादात्म्यमेव सम्बन्ध इति स्थितम् ।

वेदान्तवाक्यबीजोत्थो हरिवाक्यामृतोक्षितः ।
निबन्धपादपः सोऽयं फलताद् विदुषां मुदे ॥

# शब्द-संज्ञा-विमर्शः

परप्रकृतिरूपेण या शब्दार्थप्रसूर्मता ।
सर्वनामार्थभूतायै तस्यै नित्यं नमोनमः ॥ १ ॥
श्रीकाशीनाथपादानां गुरूणां सततस्मृतिः ।
भूयान्मे साधिकेष्टानामनिष्टानां च बाधिका ॥ २ ॥
व्यवहाराय संज्ञास्तु, क्रियन्ते लाघवान्विताः ।
अतो गुरूणां संज्ञानामन्वर्थत्वं विमृश्यते ॥ ३ ॥
टि-घु-घ-भादिसंज्ञानां, लघूनां च प्रसङ्गतः ।
अर्थापायेऽपि विहितो विमर्शो विस्मयावहः ॥ ४ ॥

तत्रादौ प्रथमोपस्थितत्वाद् वृद्धिसंज्ञैव विमृश्यते—

( १ ) वृद्धिरादैच् ( १।१।१ )–यद्यपि वृद्धिसंज्ञायाः शास्त्रादौ निर्देशो मङ्गलार्थः, तथापि वृद्धिसंज्ञातोऽपि लघीयस्या अनर्थिकायाः टिघुभादिवत् सम्भवादन्वर्थत्वमपि वृद्धिसंज्ञाया उत्प्रेक्षितुं शक्यते—

तथाहि अदेङां त्रयाणां तपराणां तात्कालिकानां गुणसंज्ञा एतत्संज्ञानन्तरमेव निर्दिष्टा, तत्संज्ञिकालापेक्षया एतत्संज्ञिकालवृद्धिरस्तीत्यतो वृद्धिसंज्ञया आदैचो व्यवहृताः ।

यद्यपि एकारैकारयोरोकारौकारयोश्च न कालभेदस्तथापि अस्ति स्थानिवर्णवृद्धिस्तथाहि– अकार इकार इत्येतयोःस्थाने एकारः, अकार एकार इत्येतयोः स्थाने ऐकार इति । एवमकारद्वयस्थाने आकार इत्यपि बोध्यम् । एवं "तेभ्योऽपि विवृतावेङौ, ताभ्यमैचौ तथैव च" इति शिक्षाऽनुसारेण प्रयत्नातिशयरूपा वृद्धिरपि ऐ औ इत्यनयोर्द्रष्टव्या ।

( २ ) अदेङ् गुणः ( १।१।२ )—इयं तु संज्ञा जगन्मूलभूतसत्त्वरजस्तमसां गुणानां त्रित्वसंख्यासाम्येन अदेङां कृता । यथा ज्योतिषे दश-

स्यास्तिथेर्दिक्संज्ञा एकादश्या रुद्रसंज्ञा संख्यासाम्येन कृता। यथा वा रस-वाणाब्धिमुन्यादिसंज्ञाः छन्दःशास्त्रादौ संख्यासाम्येनैव कृता व्यवहृता वा।

( ३ ) **हलोऽनन्तराः संयोगः** ( १।१।७ ) संयुज्यन्ते नैरन्तर्येण सम्बध्यन्ते परस्परं हलो वर्णा यत्र सः संयोगः। बाहुलकादधिकरणे घञ्। अन्यपदार्थश्च अनन्तरहल्समूहः, तदुक्तम्—हलोऽनन्तराः संयोग इति।

( ४ ) **मुखनासिकावचनोऽनुनासिकः** ( १।१।८ )—नासिकामनुगतः, नासिकामभिहृत्य वायुनाऽभिव्यञ्जित इत्यनुनासिकः। "अत्यादयः क्रान्ताद्यर्थे द्वितीया" इति समासः। लोकेऽपि प्रसिद्धेयं संज्ञा। अत एव अनुनासिकसंज्ञासूत्रं मन्दप्रयोजनमिति भाष्ये प्रत्याख्यातम्।

( ५ ) **तुल्यास्यप्रयत्नं सवर्णम्** ( १।१।९ )—समानौ सदृशौ वर्णौ यत्र तत् सवर्णम्। वर्णद्वयात्मकः परस्परशब्दार्थः समूहोऽन्यपदार्थः। समानशब्दस्य सदृशशब्दस्य वा सादेशः।

( ६ ) **ईदूदेद्द्विवचनं प्रगृह्यम्** ( १।१।११ )—सन्ध्यभावात् प्रकर्षेण गृह्यते ज्ञायते ईदूदेद् यत्र तत् प्रगृह्यम्। अत्र ईदूदेदन्तं द्विवचनमन्यपदार्थः। बाहुलकादधिकरणे क्यप्। यद्वा प्रकर्षेण गृह्यते इति प्रगृह्यम्, कर्मण्येव क्यप्। अत्रापि सन्ध्यभावादीदूदेदन्तद्विवचनस्वरूपं प्रकर्षेण गृह्यते।

( ७ ) **दाधा घ्वदाप्** ( १।१।२० )—इयं संज्ञा लाघवाभिप्रायेण कृता। अस्या अन्वर्थत्वन्तु न सम्भवति। तथापि अतिलघुत्वेन वर्णस्यैव संज्ञात्वमभिप्रेतं भगवतः पाणिनेः। तस्य च स्वरं विना उच्चारणासम्भवेन स्वराश्रितस्यैव संज्ञात्वमिति 'घ' संज्ञा कृता, तदनु इकारं स्वरमादाय घिसंज्ञा कृता, तदनन्तरमपि उकारं स्वरमादाय घुसंज्ञा कृता। तत्र 'क ख' इत्यनयोः प्रत्ययत्वेन प्रसिद्धया 'ख' इत्यस्य श्रुतिकटुत्वेनापि च त्यागे स्वरान्तरसमाश्रितयोरपि तयोस्त्यागः। 'ग' इत्यस्य मसृणस्यापि छन्दःशास्त्रादिषु गुरौ सङ्केतितत्वेन त्यागे स्वरान्तरसमाश्रितस्यापि तस्य त्यागः। यद्यपि घ इत्यस्यापि प्रत्ययत्वम्, तथापि घि, घु, इत्यनयोर्निर्दुष्टे संज्ञात्वे तदन्तःपातितया ( वर्णमात्रिकापाठप्रथमतया ) घ इत्यस्यापि संज्ञात्वम्।

( ८ ) **तरप्तमपौ घः** ( १।१।२२ )—अत्र घसंज्ञाविषये यद् वक्तव्यं तदुक्तमेव।

( ९ ) बहुगणवतुडतिसङ्ख्या ( १।१।२३ ) ( सङ्ख्या संज्ञा ) अस्याश्चान्वर्थत्वं भाष्यकृदादिभिरप्युक्तम् । सङ्ख्यायते परिच्छिद्यते स्वाश्रयो यया सा सङ्ख्या । यद् वा सङ्ख्यायते परिच्छिद्यते इति सङ्ख्या करणे कर्मणि च 'आतश्चोपसर्गे' इत्यङ् । तत्राद्ये ब्राह्मणानां विंशतिः, अन्त्ये दश ब्राह्मणाः ।

( १० ) ष्णान्ता षट् ( १।१।२४ ) ( षट् संज्ञा )—सूत्रकृतः एष स्वभावः यत् क्वचित् संज्ञ्येकतमं शब्दं संज्ञात्वेन विनियुङ्क्ते—यथा तत्पुरुषबहुव्रीह्यादिसंज्ञासु । तथा चात्र षष् शब्दः संज्ञा संज्ञी च । तस्य च संज्ञात्वं षष्शब्दत्वेन । संज्ञित्वं च षान्तत्वसमानाधिकरणसंख्या-वाचकत्वेन ।

( ११ ) क्तक्तवतू निष्ठा ( निष्ठासंज्ञा ) (१।१।२६) –

निष्ठा परिसमाप्तिः स्यात् सा च भूतार्थयोर्द्वयोः ।
अर्थः स्यादित्यभेदेन निष्ठाख्यौ प्रत्ययावपि ॥

इत्यभियुक्तोक्तेः । निष्ठा परिसमाप्तिः भूतता तदवबोधकत्वेन च क्तक्तव-त्वोर्निष्ठासंज्ञा शब्दार्थयोरभेदात् ।

( १२ ) सर्वादीनि सर्वनामानि ( १।१।२७ )—सर्वेषां नामानि सर्वनामानि इति अन्वर्थसंज्ञाकरणम्, संज्ञोपसर्जनीभूतानां सर्वनामत्ववार-णाय । एतच्च भाष्ये स्पष्टम् ।

( १३ ) स्वरादिनिपातमव्ययम् ( १।१।३७ )—

"सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु ।
वचनेषु च सर्वेषु यन्न व्येति तदव्ययम् ॥

इत्यभियुक्तवचनात् लिङ्गादिप्रयुक्तविविधविकारशून्यमव्ययमित्यर्थः । अत्रापि अन्वर्थत्वेन संज्ञोपसर्जनीभूतानामव्ययत्वाभावः ।

( १४ ) शि सर्वनामस्थानम् ( १।१।४२ ) सुडनपुंसकस्य इति । महासंज्ञाकरणं पूर्वाचार्यानुरोधेन । वस्तुतस्तु नैतदभिमतं भगवतः पाणिनेः, तदुक्तं भाष्ये—सर्वनामस्थानमिति महासंज्ञाकरणं पूर्वाचार्यानुपालब्धुम् । कृतस्यानुकरणेन हि कर्तुरुपालम्भो भवति इति दृष्टं लोके यथा गति-भाषणनेत्रवक्त्रादिविकाराणामनुकरणे । लघ्वी संज्ञा तु 'शिट्' इति, 'सुट्'

इति वा। तत्र सुडिति प्रत्याहारः। शिट् इत्यत्र तु शकारस्य संज्ञात्वमिकारस्योच्चारणार्थत्वम्, टकारस्यौट्पर्यन्तानामेवेयं संज्ञेति परिचायकत्वम् सर्वनामस्थानसंज्ञाया अन्वर्थत्वमपि सम्भवति। तथाहि सर्वं सम्पूर्णमविकृतं नाम तिष्ठत्यस्मिन्निति सर्वनामस्थानम्। औट्पर्यन्तं हि नाम्नः ईषद् विक्रियायामपि न नामापरिचयहेतुर्विकारः। तदुत्तरं तु सः। यद्यपि राजभ्याम्, राजभिः, राजसु इत्यादावपि तदस्ति। तथाऽपि असर्वनामस्थानमध्यपतितत्वात्तेषामसर्वनामस्थानत्वम्। इदं चाक्लीबस्य। क्लीबे तु जश्शसोः श्यादेशे एव सर्वनामस्थानसंज्ञा। तत्रापि प्रागुक्तैव व्युत्पत्तिः यथाकथञ्चिद् योज्या। किं च शि इति संज्ञिनमुद्दिश्य टकाररूपानुबन्धासङ्गेन संज्ञासंज्ञिनोर्भेदमापाद्य शिडिति प्राचीनैः संज्ञा कृता इत्यपि बोध्यम्। शिडिति संज्ञायां लाघवं तु अक्लीबे द्रष्टव्यम्।

( १५ ) न वेति विभाषा ( १।१।४४ )—अत्र विरुद्धयोः निषेधविकल्पयोर्भावाभावयोर्वा भाषणं विभाषा, गुरोश्च हल इत्यङ्। एतस्य रूढ्या पर्यायौ वा अन्यतरस्याम्, इत्येतौ।

( १६ ) इग्यणः सम्प्रसारणम् ( १।१।४५ ) यणः स्थाने क्रियमाण इक् सम्प्रसारणम्। अर्धमात्रिकस्य यकारादेः स्थाने मात्रिकेकारादिकरणे कालाधिक्येन यणः सम्यक् प्रसारणमिव भवति।

( १७ ) अदर्शनं लोपः ( १।१।६० )—अत्र लुप्लृ छेदने, इतिधात्वर्थनिर्देशानुसारेण लोके छेदनप्रयुक्तोऽदर्शने प्रयुज्यमानस्य लोपशब्दस्य प्रसक्तादर्शने संज्ञात्वेन विनियोगः।

( १८ ) प्रत्ययस्य लुक्श्लुलुपः ( १।१।६१ )—अदर्शनमात्रस्य लोपसंज्ञा कृतेति प्रत्ययादर्शनस्य तत्तत्कार्यार्थं संज्ञात्रयकरणम्। तत्र 'लुप्' इत्यत्र सम्पदादित्वात् क्विप् ( भावे )! लुक् इत्यत्रापि। लुञ्च अपनयने इत्यस्मात् तत एव भावे क्विप्। श्लुसंज्ञा तु अनर्थिका। तत्र यद्यपि लु इत्येतावन्मात्रस्वरूपा संज्ञा सम्भवति तथापि लु इति लुग्-लुपोराद्यक्षरनिर्देशः, यथा राजाऽसे, जे प्रोष्ठपदानामित्यादौ तथा कश्चिद् भ्राम्येत, तद्वारणाय शकारस्यापि आदौ संश्लेषः। तत्र वर्णान्तरसंश्लेषाभावे पारुष्यमुच्चारणक्लेशः शब्दान्तरबुद्धिप्रसङ्गः, अन्यो वा कश्चन हेतुर्यथासम्भवं चिन्त्यः।

(१९) अचोऽन्त्यादि टि (१।१।६४)—'ट' इत्यस्य 'टा' इत्यस्य च प्रत्ययत्वेन तत्परिहरणाय टि इत्यस्य संज्ञात्वेन निर्देशः। इदं च लाघवार्थमेव संज्ञाकरणं न तु अस्या अन्वर्थत्वम्।

(२०) अलोऽन्त्यात् पूर्व उपधा (१।१।६५) उप समीपेऽन्त्यस्य पूर्वस्मिन् समीपे धीयते निधीयते यो वर्णः स उपधा, कर्मण्यङ्। अत एवोक्तं पाणिनिना अलोऽन्त्यात् पूर्व उपधा इति।

(२१) स्वं रूपं शब्दस्याशब्दसंज्ञा (१।१।६८) शब्दस्य स्वरूपसंज्ञात्वं लोकप्रसिद्धमेव सूत्रकृताऽनूदितम्। अत एवोक्तं वाक्यपदीये—

'न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमाद् ऋते।
अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते॥'

किञ्च लोके प्रयुज्यते विष्णुमुच्चारयेति। अत एव वेदं सूत्रं भाष्यकृता प्रत्याख्यातम्।

(२२) तपरस्तत्कालस्य (१।१।७०)—अत्, आत् इत्यादीनां ह्रस्वाकारदीर्घाकारादिसंज्ञात्वं तु तपरस्तत्कालस्येति शास्त्रबलात्। तत्र अकारस्य अत्वावच्छिन्नवाचकत्वं शक्त्या, लोके व्याकरणे च। तपरकरणे तु तस्य ह्रस्वाकारमात्रे शक्तिर्नियम्यते, एतावन्मात्रे वा अत् इत्यस्य संज्ञात्वम् एवमात्, इत्यादावपि द्रष्टव्यम्।

(२३) आदिरन्त्येन सहेता (१।१।७१) इदमपि शास्त्रमणादीनां संज्ञात्वं बोधयति तत्र आद्यन्तवर्णसमुदायस्य संज्ञात्वमन्यत्रापि प्रसिद्धम्। यथा—"न स्म पुरा भूतमात्रे, न स्म पुराऽनद्यतने", इत्यादि वार्त्तिकतद्भाष्यादिषु। तद्रीत्यैवेदम्।

(२४) वृद्धिर्यस्याचामादिस्तद् वृद्धम् (१।१।७३)—वृद्धिमदर्थबोधकत्वादियं वृद्धसंज्ञाऽप्यन्वर्थैव। तच्च वृद्धिमत्त्वमुद्देश्यभूताजारब्धसमुदायस्याद्यवयवावच्छेदेन बोध्यम्।

(२५) ऊकालोऽज्झ्रस्वदीर्घप्लुतः (१।२।२७)—ह्रस्व इति संज्ञा मात्राल्पत्वेन, दीर्घ इति संज्ञा मात्रागौरवेण बोध्या। प्लुतसंज्ञा तु मात्रात्रयसम्पन्नस्याचः, अप्लोष्ट मात्रां मात्राद्वयं च प्लुत्या लङ्घितवानितिव्युत्पत्तेः।

(२६) उच्चैरुदात्तः (१।२।२९)—उत् ऊर्ध्वभागे ताल्वादिस्थानेषु आत्तो गृहीत उच्चारित इति यावत्, स उदात्त इति उच्यते।

(२७) नीचैरनुदात्तः (१।२।३०)—प्रागुक्तोदात्तविपरीतोऽनुदात्तः। ताल्वादिस्थानेषु अधोभागावच्छेदेनोच्चारित इत्यर्थः। योगरूढमिदम्।

(२८) समाहारः स्वरितः (१।२।३१)—स्वरौ उदात्तानुदात्तौ तद्धर्मौ उदात्तत्वानुदात्तत्वे वा सञ्जाते यस्य स स्वरितः।

आद्ये प्रमाणम्—तस्यादित उदात्तमर्धह्रस्वम्। द्वितीये तु एकस्मिन् धर्मिणि द्वयोर्धर्मिणोर्मेलनासम्भवो बीजम्।

(२९) अपृक्त एकाल्प्रत्ययः (१।२।४१)—अपृक्त इति वर्णान्तरेणासंयुक्त इत्यर्थः। इदमपि योगरूढम्। अतः प्रत्ययस्यैव एषा संज्ञा न तु प्रातिपदिकस्य।

(३०) तत्पुरुषः समानाधिकरणः कर्मधारयः (१।२।४२) कर्म क्रियां व्यावर्तनक्रियां कर्मत्वकरणत्वाभ्यां च धारयति यः स कर्मधारयः। "अनुपसर्गाल्लिम्पविन्दधारिपारि" इत्यादिना शः।

यद्वा कर्म व्यावर्तनक्रियाकर्म—विशेष्यं धारयति यः सः।

विशेष्यधारणेनैव विशेषणधारणास्याप्याक्षेपः।

(३१) प्रथमानिर्दिष्टं समास उपसर्जनम् (१।२।४३)—एषाऽपि संज्ञा अन्वर्थैव। तथाहि–उप समभिव्याहृतपदार्थे विशेषणतया यत् सृज्यते सम्बध्यते धातूनामनेकार्थत्वात्। यद्वा सृज्यते विशेषणं क्रियते तदुपसर्जनम्, समासविधायकशास्त्रे प्रथमानिर्दिष्टस्य च प्रयोगे प्रायः सर्वत्र विशेषणत्वरूपमुपसर्जनत्वम्। क्वचित्तु अर्धपिप्पली इत्यादौ विशेष्यत्वेऽपि बाहुल्येनास्य संज्ञात्वम्। एवमेकविभक्तिकस्याऽपि विशेषणत्वेनोपसर्जनत्वम्।

(३२) अर्थवदधातुरप्रत्ययः प्रातिपदिकम् (१।२।४५)—पदं पदं प्रतिपदं तत्र भवं प्रातिपदिकम्, सर्वस्मिन् सुबन्तलक्षणे पदे वर्तमानमित्यर्थः। एतस्य च संज्ञान्तरं 'नाम' इति तत्र च नमति आख्यातार्थं प्रति विशेषणं भवतीति व्युत्पत्तिर्बोध्या। वैयाकरणैर्हि धात्वर्थमुख्यविशेष्यक एव वाक्यार्थबोधः स्वीक्रियते इति। एतस्यैव च लाघवेन अनर्थकं संज्ञान्तरं फिडिति। इयं च यदृच्छया तत्कालोपस्थिता संज्ञा।

( ३३ ) भूवादयो धातवः ( १।३।१ )—प्रयोगान् तिङन्तकृदन्तान् दधाति धारयतीति वा। नाम्नामपि सर्वं नामधातुजमित्यभियुक्तोक्तदिशा धातुजत्वात्। यद् वा बहूनर्थान् दधाति धारयतीति वा धातुः, अत एव अनेकार्था धातव इत्यभियुक्तानां प्रसिद्धिः।

( ३४ ) उपदेशेऽजनुनासिक इत् ( १।३।२ )—इत्संज्ञापि अन्वर्थैव, एति गच्छति नश्यति इति इत् इति व्युत्पत्तेः। इण् धातोः कर्त्तरि क्विप्।

( ३५ ) यू स्त्र्याख्यौ नदी ( १।४।३ )—स्त्र्याख्ययोरीकारान्तोकारान्तयोर्नदीसंज्ञाऽपि तत्पुरुषबहुव्रीहिसंज्ञावदेव। तथा हि सूत्रकृत एष स्वभावो यत्संज्ञिषु अन्यतमं संज्ञात्वेन विनियुङ्क्ते इति प्रागुक्तम्। तथा च नदीशब्दस्य ईकारान्तत्वेन संज्ञित्वम्। नदीशब्दत्वेन तु संज्ञात्वम् इति न विरोधः।

ऊकारान्तस्याऽपि नदीसंज्ञासंज्ञित्वं तु साहचर्याच्छत्रिन्यायेन इत्यपि उक्तप्रायमेव।

( ३६ ) शेषो घ्यसखि ( १।४।७ )—घ. घि. घु. इति स्वरक्रमेण संज्ञाः, कखयोः प्रथमद्वितीययोः परुषत्वमसंज्ञात्वे बीजम्। गकारस्य तु मसृणस्यापि छन्दःशास्त्रादिषु गुरौ सङ्केतितत्वेन अर्थान्तरसाधारण्यम्। तदेतदुक्तं प्राक्।

( ३७ ) ह्रस्वं लघु ( १।४।१० )—इयमपि लौकिक्येव संज्ञा। यद्धि लोके परिमाणतो ह्रस्वं भवति तल्लघु भवति इति।

( ३८ ) संयोगे गुरु ( दीर्घं च ) ( १।४।११ )—अत्र संयोगे परे ह्रस्वस्य गुरुसंज्ञा उच्चारणे मात्रागौरवेण। तथा हि—संयोगे परे मात्रिकोऽपि अच् द्विमात्रिक इवोच्चार्यते इति ह्रस्वापेक्षया मात्रागौरवमभिप्रेत्य संयोगे गुरुसंज्ञा कृता। ह्रस्वत्वन्तु ह्रस्वं ह्रस्वमित्यनुगतप्रतीतिसिद्धो जातिविशेषः, दीर्घत्वविरोधी, गुरुत्वं तु ह्रस्वत्वदीर्घत्वाभ्यां न विरुद्धयते। एवं दीर्घत्वमपि जातिविशेष एव, मात्राद्वयकालिकत्वसमानाधिकरणो न तु तद्रूपः। न चैवम् ऊकालोऽज्झ्रस्वदीर्घप्लुत इत्यनेन मात्राकालिकस्य विधीयमाना ह्रस्वसंज्ञा विरुद्धयते इति वाच्यम् ? बाहुल्याभिप्रायेण तथोक्तेः, उपसर्जनादिवत्। यथा अर्धपिप्पली इत्यादौ विशेष्यस्यापि उपसर्जनसंज्ञा,

संयोगेऽसंयोगे च तदेवेदमिति प्रत्यभिज्ञानाच्च। असंयोगे दृष्टं मात्राकालिकत्वमादाय संयोगेऽपि ह्रस्वत्वोपपत्तेः।

रामायेत्यादौ अकारस्थानिके आकारे तु न लौकिकानां तदेवेदमिति सम्प्रत्यय इति न तत्स्थानिके आकारे ह्रस्वत्वातिप्रसङ्गः। एवं च संयोगे ह्रस्वे दीर्घे च गुरुत्वमेकविधमेव। अत एव दीर्घं चेत्यत्र समुच्चयार्थश्चकारोऽप्युपपद्यते। नचैवमपि 'अतोरोरप्लुतादप्लुते', 'एङः पदान्तादति' इत्यादौ च अत्पदेन संयोगपरस्य ह्रस्वस्याऽपि व्यावृत्तिः स्यात्—तथा च कुतोऽग्रेत्याद्यसिद्धिरिति वाच्यम्? 'तपरस्तत्कालस्य' इत्यनेन तत्कालस्य तत्कालत्वेन दृष्टस्य च संज्ञित्वबोधनात्। एवं च ह्रस्वत्वं न मात्राकालिकत्वे सत्यच्त्वरूपम्, किन्तु तत् समानाधिकरणजातिविशेषः। एवं दीर्घत्वमप्रीत्युक्तम्।

**( ३९ ) यस्मात्प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गम्** ( १।४।१३ )—प्रकृतिप्रत्ययौ सहार्थं ब्रूतस्तयोः प्रत्ययार्थस्य प्राधान्यम्, प्रकृत्यर्थोऽङ्गमप्रधानम् अप्रधानार्थवाचकत्वात् प्रकृतिरङ्गम्।

**( ४० ) सुप्तिङन्तं पदम्** ( १।४।१४ )—पद्यते गम्यतेऽर्थो येन तत् पदम्। लोके हि सुबन्ततिङन्ताभ्यामर्थो गम्यते। न तु प्रकृतिप्रत्ययाभ्याम्। तयोस्तदर्थयोश्च कल्पितत्वात्।

**( ४१ ) यचि भम्** ( १।४।१८ )—भसंज्ञायां पफयोः परुषत्वम्, वशब्दस्य मसृणत्वेऽपि अनर्थकत्वम्, भशब्दस्य तु मन्दप्रकाशकत्वरूपनक्षत्रसाम्येन यजाद्यसर्वनामस्थानप्रकृतौ प्रयोगः। तथा हि यत्र भसंज्ञा तत्रात्यन्तं विकृततया शक्ततावच्छेदकानुपूर्वीज्ञानविलम्बेन प्रकृतिर्विलम्बेन स्वार्थं बोधयतीति। एवं चादीनां प्रथमोपस्थितानामपि परुषत्वानर्थकत्वाभ्यां यथासम्भवं संज्ञात्वहानिः।

**( ४२ ) कारके** ( १।४।२३ )—करोति क्रियां निर्वर्तयति इति, करोति कर्तृकर्मादिव्यपदेशानिति वा द्विधा व्युत्पादनात्, आद्ये संज्ञात्वम्, द्वितीये तु न, किन्तु क्रियापरत्वम्।

**( ४३ ) ध्रुवमपायेऽपादानम्** ( १।४।२४ )—अपादीयते अपायो विश्लेष आदीयते परिगृह्यते यस्मात् स विभागावधिरपादानमित्यर्थः। अथवा अपकृष्य बुद्ध्या पृथक्कृत्य वस्तु आदीयते बुद्ध्या गृह्यते यस्मात्तद-

पादानम्। 'भीत्रार्थानां भयहेतुः' 'पराजेरसोढः', 'वारणार्थानामीप्सितः' एवमन्येषां च विषये बोद्धमेतादृशमपादानत्वम्; बाहुल्येन छत्रिन्यायेन वा ततोऽन्यत्र।

( ४४ ) **कर्मणा यमभिप्रैति स सम्प्रदानम्** ( १।४।३२ )—सम्यक् प्रदीयतेऽस्मै तत् सम्प्रदानम्। छत्रिन्यायेन 'पुष्पेभ्यः स्पृहयति' इत्यादावपि तन्निर्वाह्यम्।

( ४५ ) **साधकतमं करणम्** ( १।४।४२ )—अव्यवधानेन क्रियते येन तत् करणम्। कारणान्तरव्यवधानेन क्रियासाधनं कारणं हेतुरिति च। तदुक्तम्—

क्रियायाः परिनिष्पत्तिर्यद्व्यापारादनन्तरम्।
विवक्ष्यते यदा यत्र करणं तत्तदा स्मृतम्॥

इदमेव हि करणे साधकतमत्वम्।

( ४६ ) **आधारोऽधिकरणम्**—( १।४।४५ )—अधिक्रियते आश्रीयते इत्यधिकरणमाश्रयः। अत्राधेयस्य कर्तृत्वमूह्यम्।

( ४७ ) **अधिशीङ्स्थासां कर्म** ( १।४।४६ )—क्रियते इति कर्म। यद्यपि गेहमधिशेते, इत्यादौ स्वरूपेण निष्पन्नमेव गेहादिकं न त्वपूर्वं क्रियते, तथापि स्वरूपेण निष्पन्नत्वेऽपि फलाश्रयत्वेन रूपेण गेहतण्डुलादेः क्रियमाणत्वमुपपद्यते।

( ४८ ) **स्वतन्त्रः कर्त्ता** ( १।४।५४ )—यद्यपि कारकं, कर्त्तेति, पदद्वयमपि एकार्थकम्, तथापि कर्तृपदे स्वातन्त्र्येण कारकत्वं विवक्षितम् कारकपदे तु येन केनापि रूपेणेति न कारकान्तराणां कर्तृसंज्ञा। स्वातन्त्र्यं चान्यानधीनव्यापाराश्रयत्वम्। एतदेव—प्रकृतधातूपात्तप्रधानीभूतधात्वर्थ-व्यापाराश्रयत्वम्, समनियतत्वात्।

( ४९ ) **तत्प्रयोजको हेतुश्च** ( १।४।५५ )—हेतुत्वं कार्यनियत-पूर्ववृत्तित्वरूपं लोकप्रसिद्धमेवात्र गृह्यते।

( ५० ) **प्राग्रीश्वरान्निपाताः** ( १।४।५६ )—निपातयति स्वसमभिव्याहृतं पदमर्थान्तरे इति निपातः। अत्र निपातनं नाम शक्यार्थादर्थान्तरप्रतिपादकत्वापादनम्, एतच्च निपातानां द्योतकत्वेन सम्भवति। साक्षात् क्रियते, अनुभूयते प्रपुरुष इत्याद्युदाहरणम्।

(५१) उपसर्गाः क्रियायोगे (१।४।५९)—उप समीपस्थिते धातौ सृज्यते तदर्थान्वय्यर्थबोधकत्वेन तदर्थद्योतकत्वेन वा सम्बध्यते—इत्युपसर्गः। लोकेऽपि हि समीपस्थिते मनुष्ये सङ्क्रामन् व्याधिर्महामारीरूप उपसर्ग उच्यते। अत एवोक्तं सूत्रकृता 'क्रियायोगे' इति।

(५२) गतिश्च (१।४।६०)—प्रादयो हि गतिमन्तो भवन्ति कदाचिद् धातुना संसृज्यन्ते, कदाचिन्नेति। अतो धर्मधर्मिणोरभेदोपचाराद् गतिमतां प्रादीनां गतित्वेन व्यपदेशः।

(५३) कर्मप्रवचनीयाः (१।४।८३)—कर्म-क्रियां प्रोक्तवन्तः कर्मप्रवचनीयाः। गुरुसंज्ञाकरणमन्वर्थत्वलाभाय, बाहुलकाद् भूते कर्त्तर्यनीयर्। तेन सम्प्रति क्रियां न द्योतयन्ति इति लभ्यते। तथा च हरिः—

क्रियाया द्योतको नायं सम्बन्धस्य च वाचकः।
नापि क्रियापदाक्षेपी सम्बन्धस्य तु भेदकः॥"

इति। तथा हि जपमनु प्रावर्षत्, इत्यत्र अनुना न क्रियाविशेषो द्योत्यते, अनुभूयते सुखमित्यादौ यथा। नापि षष्ठ्येव सम्बन्ध उच्यते द्वितीयर्यैव तस्योक्तत्वात्। नापि प्रादेशं विपरिलिखति, विमाय परिलिखति इत्यत्र विशब्देन मानक्रियेव क्रियान्तरमाक्षिप्यते, कारकविभक्तिप्रसङ्गात्। किन्तु जपसम्बन्धि वर्षणमिति द्वितीययाऽत्रगतः सम्बन्धो लक्ष्यलक्षणभाव एवेति अवगमात्, सम्वन्ध एवानुना विशेषेऽत्रस्थाप्यते। क्वचित्तु क्रियागतविशेषद्योतकेऽपि तत्संज्ञावचनात् प्रवर्तते 'सुः पूजायाम्', 'अतिरतिक्रमणे च' इति यथा इति तत्त्वबोधिनी—कारकप्रकरणे।

(५४) लः परस्मैपदम् (१।४।९९) तङानावात्मनेपदम् (१४।१००)—

"परस्मै पद्यते यस्मात्तत् परस्मैपदं स्मृतम्।
आत्मने पद्यते यस्मात्तदेवात्रात्मनेपदम्॥"

इत्यभियुक्ताः।

यस्मात् तिङ् प्रत्ययात् स्वसमभिव्याहृतधातुं द्वारीकृत्य "परस्मैपदसमवेतफलसिद्ध्यर्थं कर्तृव्यापारः पद्यते ज्ञायते इति व्युत्पत्तिवाक्यार्थः। एवमात्मनेपदमित्यत्रापि वोद्धव्यम्। यद्यपीयं व्युत्पत्तिः स्वरितञित इत्येतत्सूत्रविषय एव, न तु तदविषये भवत्यादौ तथापि छत्रिन्यायेन तत्रापि तदुक्तिः।

क्वचित्तु परस्मैपदिनां परस्मैभाष इति, आत्मपदिनां तु धातूनामात्मनेभाष इति व्यवहारो दृश्यते, स तु परस्मैपदे भाषा उक्तिरस्येति परस्मैभाषः, पदशब्दलोपो निपातनात्। एवमात्मनेभाष इत्यपि बोध्यम्।

**( ५५ ) तिङस्त्रीणि त्रीणि प्रथममध्यमोत्तमाः** ( १।४।१०१ )
इदं प्रथमादिसंज्ञात्रयं लौकिकमेवान्वर्थत्वं भजते। पुरुषपदेनाऽपि एतेषां व्यवहारस्तु कर्तृरूपपुरुषवाचकत्वात्।

यद्यपि क्रियानिरूपितं कर्तृत्वं स्त्रीनपुंसकयोरपि सम्भवति, तथाऽपि बाहुल्येन पुरुषस्यैव तदिति बोध्यम्।

**( ५६ ) तान्येकवचनद्विवचनबहुवचनान्येकशः** ( १।४।१०२ )
इमा एकवचनादिसंज्ञा अपि लोकवदेवान्वर्थाः, एकत्वमुच्यतेऽनेनेत्यादिव्युत्पत्तेः।

शास्त्रान्तरप्रसिद्धा अत्रापि व्यवहृताः। प्रथमाद्वितीयादिवत्।

**( ५७ ) विभक्तिश्च** ( १।४।१०४ )—विभज्यते पदं सजातीयाद् विजातीयाद् वा यया सा विभक्तिः।

**( ५८ ) परः सन्निकर्षः संहिता** ( १।४।१०९ )—अत्र सन्धानं संहितम्, नपुंसके भावे क्तः। तद्वती वर्णद्वयी संहिता, अर्श आद्यच्। यद्वा सन्धीयते या सा संहिता इति कर्मणि क्तः। संहितायां विषये इत्यादौ तु भावप्रधानो निर्देशः। संहितात्वे विषये इत्यर्थः। अत्र सन्धानं सामान्येनोपात्तमपि तात्पर्यवशादात्यन्तिकं ग्राह्यम्। तात्पर्यग्राहकञ्च परःसन्निकर्ष इति।

**( ५९ ) विरामोऽवसानम्** ( १।४।११० )—अवस्यतेरन्तक्रियार्थकत्वाद् अवसानपदेन विरामार्थलाभः।

**( ६० ) प्राक्कडारात् समासः** ( २।१।३ )—समसनं समासः संक्षेपः। संक्षिप्यते हि समासे पदद्वयमेकपदत्वेन विभक्तिलोपादिभिश्च।

**( ६१ ) अव्ययीभावः** (२।१।५)—अनव्ययस्याव्ययस्य भावनम्। युज्यतेऽप्ययमर्थोऽत्र समासेऽव्ययीभावस्याव्ययत्वात्।

**( ६२ ) तत्पुरुषः** (२।१।२२)—तस्य पुरुषः, स चासौ पुरुष इति च समासद्वये इदं पदं संज्ञित्वेन विवक्षितसमाससमूहात्पृथक्कृत्य स्वस्यान्येषां च संज्ञात्वेन विनियुक्तम्। छत्रिन्यायात्—कर्मधारयस्यापि तत्पुरुषत्वाच्च।

( ६३ ) **सङ्ख्यापूर्वो द्विगुः** ( २।१।५२ )—द्वौ गावौ शब्दौ यस्मिन् स द्विगुः। द्विनावप्रिय इत्यत्र त्रिपदबहुव्रीहावपि द्वयोरेव द्विगुः।

( ६४ ) **शेषो बहुव्रीहिः** ( २।२।२३ )—इदमपि तत्पुरुषवद् बोध्यम्। बहवो व्रीहयो यस्येति समासः।

( ६५ ) **चार्थे द्वन्द्वः** ( २।२।२९ )—द्वे द्वे इति द्वन्द्वः। अयं च बाहुल्येन निर्देशः। पदत्रयस्यापि घटपटमठा इत्यादिद्वन्द्वदर्शनात्।

( ६६ ) **सामन्त्रितम्** ( २।३।४८ )—आमन्त्रणमामन्त्रितम्। नपुंसके भावे क्तः। आमन्त्रणञ्चाभिमुखीकरणरूपं सम्बोधनमेव। तथा च सम्बोधनप्रथमान्तस्यामन्त्रितार्थवाचकत्वादामन्त्रितसंज्ञा, निष्ठावत्। यद्वा आमन्त्रणमामन्त्रितम्, उपचारात् तत् साधने वृत्तिः, विभक्त्यन्तेन चामन्त्र्यते न केवलया विभक्त्या इति 'सामन्त्रितम्' इति सूत्रे तत्त्वबोधिनी।

( ६७ ) **एकवचनं सम्बुद्धिः** ( २।३।४९ )—सम्बुध्यतेऽभिमुखो भवति यया सा सम्बुद्धिः। सम्बोधनविभक्त्यन्तप्रयोगेण हि चैत्रादिरभिमुखो भवति। सम्बुद्धिपदे बाहुलकात् करणे क्तिन्। सम्बोधनं हि अभिमुखीकरणं प्रसिद्धमतः सम्बुद्धिरभिमुखीभवनम्।

( ६८ ) **प्रत्ययः** ( ३।१।१ )—प्रतीयतेऽर्थोऽनेनेति करणेऽप्, यद्वा प्रत्येति स्वस्वप्रकृत्यन्यतरार्थं प्रत्याययति इति प्रत्ययः। अन्तर्भावितण्यर्थात् प्रतिपूर्वादेतेः पचाद्यच्। इदं च भाष्ये स्पष्टम्।

( ६९ ) **तत्रोपपदं सप्तमीस्थम्** ( ३।१।९२ )—उपोच्चारितं पदमुपपदम्। पदं च सुप्तिङन्तम्।

( ७० ) **कृदतिङ्** ( ३।१।९३ )—करोतीति कृत्। कृञः क्विप्। अत्रोक्तमभियुक्तैः—

> "कर्तरि क्विपि कृच्छब्दो येषां मध्ये हि दृश्यते।
> छत्रिन्यायात् कृतस्ते स्युरेवं कृत्यसमाख्यया॥
> धातुं सर्वमुपादाय सर्वं रूपं करोति च।
> कृत् स एवेति विस्मृत्य तद्धर्मा कृत् प्रशस्यते॥"

विस्मृत्येत्यस्य अन्येषु कृत्सु क्विपो भेदं विस्मृत्येत्यर्थः। भेदविस्मरणे च तद्धर्मत्वं हेतुरुक्तः।

"तैश्चापदेशो ज्ञानविशेषाणाम्"। (अ० २ आ० १ सू० २५)। "तैरिन्द्रियैरर्थैश्च व्यपदिश्यन्ते ज्ञानविशेषाः। कथम्? घ्राणेन जिघ्रति चक्षुषा पश्यति……गन्धविज्ञानं रूपविज्ञानं……अतः प्राधान्यमिन्द्रियार्थसंनिकर्षस्येति" (भाष्यम्)।

"वर्तमानाभावे सर्वाग्रहणं प्रत्यक्षानुपपत्तेः" (२ अ० १ आ० ४० सू०) "प्रत्यक्षमिन्द्रियार्थसंनिकर्षजम्, न चाविद्यमानमसदिन्द्रियेण संनिकृष्यते" (भाष्यम्)।

"आदिमत्त्वादैन्द्रियकत्वात्कृतकवदुपचाराच्च"। (२ अ० २ आ० १४ सू०)। "इन्द्रियप्रत्यासत्तिग्राह्य ऐन्द्रियकः। किमयं (शब्दः) व्यञ्जकेन समानदेशोऽभिव्यज्यते रूपादिवत्, अथ संयोगजाच्छब्दाच्छब्दसन्ताने सति श्रोत्रप्रत्यासन्नो गृह्यत इति" (भाष्यम्)। अत्र भाष्यकारेणान्त्यः पक्ष एव सिद्धान्तितः।

"तत्त्वं भाक्तयोर्नानात्वविभागादव्यभिचारः"। (२ अ० २ आ० १६ सू०)। "इन्द्रियप्रत्यासत्तिग्राह्यमैन्द्रियकम्" इति (भाष्यम्)।

"सन्तानानुमानं विशेषणात्" (२ अ० २ आ० १७ सू०)। "नेन्द्रियग्रहणसामर्थ्याच्छब्दस्यानित्यत्वम्। किन्तर्हि, इन्द्रियप्रत्यासत्तिग्राह्यत्वात्सन्तानानुमानम्, तेनानित्यत्वमिति" (भाष्यम्)।

"रश्म्यर्थसंनिकर्षविशेषात्तद्ग्रहणम्"। (३ अ० १ आ० ३२ सू०)। "तयोर्महदण्वोर्ग्रहणं चक्षूरश्मेरर्थस्य च संनिकर्षविशेषाद् भवति। यथा प्रदीपरश्मेरर्थस्य चेति। रश्म्यर्थसंनिकर्षश्चावरणलिङ्गः। चाक्षुषो हि रश्मिः कुड्यादिभिरावृतमर्थं न प्रकाशयति, यथा प्रदीपरश्मिरिति"।

"न बुद्धिलक्षणाधिष्ठानगत्याकृतिजातिपञ्चत्वेभ्यः"। (३ अ० १ आ० ६२ सू०)। "गतिभेदादपीन्द्रियभेदः। कृष्णसारोपनिबद्धं चक्षुर्बहिर्निःसृत्य रूपाधिकरणानि द्रव्याणि प्राप्नोति। स्पर्शनादीनि त्विन्द्रियाणि विषया एवाऽऽश्रयोपसर्पणात्प्रत्यासीदन्ति। सन्तानवृत्त्या शब्दस्य श्रोत्रप्रत्यासत्तिरिति" (भाष्यम्)।

"इन्द्रियैर्मनसः संनिकर्षाभावात्तदनुत्पत्तिः" (३ अ० २ आ० २३ सू०)। "गन्धाद्युपलब्धेरिन्द्रियार्थसंनिकर्षवदिन्द्रियमनःसंनिकर्षोऽपि कारणम्" (भाष्यम्)।

तदेवं पूर्वोक्तसूत्रभाष्यदर्शनान्नैयायिकमते चक्षुरादीनीन्द्रियाणि भौतिकानि मध्यमपरिमाणानि च। तत्र चक्षुर्विषयदेशे प्राप्यकारि, इतराणि

त्विन्द्रियाणि स्वदेश एव प्राप्यकारीणि। मनस्त्वणुपरिमाणमभौतिकं नित्यञ्च, तच्च स्वात्मसंनिकर्षद्वारा ज्ञानसामान्ये साधारणकारणम्। आत्मसुखादिप्रत्यक्षे तु तत्संनिकर्षद्वाराऽसाधारणकारणम्। इत्थं नैयायिकानां वैशेषिकाणाञ्च मते भौतिकान्येवेन्द्रियाणि घ्राणेन्द्रियं पृथिवीगुणस्य गन्धस्यैव ग्राहकम्, रसनेन्द्रियं जलगुणस्य रसस्यैवेत्येवं विषयग्रहणं प्रति नियमानुसारेण घ्राणेन्द्रियं पार्थिवं रसनेन्द्रियं जलीयं चक्षुरिन्द्रियं तैजसं श्रोत्रेन्द्रियमाकाशं त्वगिन्द्रियं वायवीयमिति।

सांख्यानां पातञ्जलानाञ्च मते तु नेन्द्रियाणि भौतिकानि; किन्तु सात्त्विकाहंकारकार्याणि शब्दादितन्मात्रोपचितानि च, यथाऽस्मदादिशरीरं पार्थिवमपि जलाद्युपचितमतो विषयग्रहणप्रतिनियमो न विरुध्यते। रामानुजीयानां दर्शनेऽप्येवमेव।

अद्वैतिनान्तु मते सांख्यानामिवाऽऽहंकारिकत्वे सति भूताप्यायितत्वं वाऽस्तु भौतिकत्वं वाऽस्तु, नान्यतरस्मिन् क्वापि पक्षपातः। तथा च 'अन्तरा विज्ञानमनसी' (ब्र० सू० २–३–१५) इति सूत्रे शारीरकभाष्ये 'यदि तावद् भौतिकानि करणानि' इति पक्षमुपक्रम्येन्द्रियाणामुत्पत्त्यादि दर्शयित्वा तदुत्तरम् 'अथ त्वभौतिकानि करणानि' इति पक्षान्तरमुपन्यस्तम्। विद्यारण्याचार्यैस्तु 'सत्त्वांशैः पञ्चभिस्तेषाम्' (प० द० १–१९) इति श्लोके भौतिकत्वमेवेन्द्रियाणामभिहितम्।

इन्द्रियाणि च सर्वेषां मतेऽतीन्द्रियाण्येव। मनस्तु वेदान्तिमते नेन्द्रियम्, न च तन्मते आत्मसुखादिप्रत्यक्षस्येन्द्रियजन्यत्वाभावात्प्रत्यक्षत्वं न स्यादिति वाच्यम्; इन्द्रियजन्यत्वस्येश्वरप्रत्यक्षाव्यापकस्य मनोजन्यत्वेनानुमित्याद्यतिव्यापकस्य च प्रत्यक्षत्वाप्रयोजकत्वात्। तन्मते ज्ञानगतप्रत्यक्षत्वप्रयोजकं तु विषयचैतन्यप्रमातृचैतन्ययोरभेदः। विषयगतप्रत्यक्षत्वप्रयोजकन्तु प्रमातृसत्तातिरिक्तसत्ताकत्वाभावरूपं विषयस्य प्रमात्रभिन्नत्वम्। प्रपञ्चितञ्चैतद् वेदान्तपरिभाषादाविति नेह प्रतन्यते। इन्द्रियत्वेऽनिन्द्रियत्वे वा मनः सर्वेषामिन्द्रियाणां प्रेरकम्, "अन्यत्रमना अभूवं नाद्राक्षम्", "अन्यत्रमना अभूवं नाश्रौषम्" इत्यादिव्यवहारात्। अतएव प्रत्यक्षे इन्द्रियार्थसंनिकर्षवदिन्द्रियमनःसंनिकर्षोऽपि कारणम्। एतच्च पूर्वोदाहृतवात्स्यायनभाष्यतः प्रतीयते।

तच्च मनो न भौतिकं किन्तु स्वतन्त्रं द्रव्यमिति नैयायिका वैशेषिकाश्च मन्यन्ते। सात्त्विकाहंकारान्मन उत्पद्यत इति सांख्याः पातञ्जलाश्च वदन्ति।

अपञ्चीकृतपञ्चभूतानां सर्वेषां सात्त्विकांशेभ्यो मनस उत्पत्तिरिति अद्वैतवादिनां मतम् । मनसः परिमाणं त्वणु नैयायिकवैशेषिकाणाम्, सांख्यतत्त्वविवेचने मनसो विभुत्वमुक्तम् । मनसो विभुत्वेऽपि यथा न सर्वदेशावस्थितवस्तुग्रहणं तथोपपादितमधस्तात् । "तत्प्रतिषेधार्थमेकतत्त्वाभ्यासः" ( पात० यो० सू० १–३१ ) इति सूत्रे भाष्ये, नागेशभट्टविरचितलघुवृत्तौ च मनसो विभुत्वमुक्तम् । मीमांसका अपि मनस इन्द्रियत्वं भौतिकत्वञ्चेन्द्रियत्वेन वदन्ति । उपपादितञ्चेन्द्रियाणां भौतिकत्वं प्राग् मीमांसकमतानुसारेणेन्द्रियाणां प्राप्यकारित्वभौतिकत्वादिनिरूपणावसरे । श्लोकवार्तिकेऽपि—

"मनसस्त्विन्द्रियत्वेन प्रत्यक्षा धीः सुखादिषु ।
मनसा संप्रयुक्तो हि तान्यात्मा प्रतिपद्यते ॥" (प्रत्यक्षसूत्रे ८३ श्लो०)

मनसः स्थानं हृदयमिति विद्यारण्याचार्यैः पञ्चदश्यामुक्तम् । तत्राणुपरिमाणवादिनां भौतिकत्वेन परिच्छन्नपरिमाणवादिनां वा मते मनसो-युगपदनेकेन्द्रियसंबन्धो न संभवति, अतो नैकस्मिन्क्षणे ज्ञानद्वयादिकम् । तदेवमिन्द्रियार्थसंनिकर्षनिरूपणात्प्रागिन्द्रियसंबद्धो विचारः कृतः, प्रतियोगिनिरूप्यत्वात् संनिकर्षस्य ।

अथावसरप्राप्तः संनिकर्षो निरूप्यते । तत्र प्रत्यक्षे जननीये इन्द्रियाणां प्रमाणानां व्यापारभूत इन्द्रियार्थसंनिकर्षो लौकिकोऽलौकिकश्चेति द्विविध इति नैयायिकाः । तत्र लौकिकः षोढा । संयोग-संयुक्तसमवाय-संयुक्तसमवेतसमवाय-समवाय-समवेतसमवाय-विशेषणविशेष्यभाव-भेदात् । अलौकिकस्तु त्रिधा—सामान्यलक्षणज्ञानलक्षणयोगजधर्मभेदात् । प्रत्यासत्तेर्विशेष्यत्वे सामान्यलक्षणा ज्ञानलक्षणेति स्त्रीत्वेनापि व्यवहारः । ज्ञानलक्षणा उपनयपदेनापि व्यवह्रियते, तज्जन्यं ज्ञानञ्चोपनीतभानमिति । संनिकर्षाश्च तत्त्वचिन्तामणावुक्ताः । तथा हि—प्रत्यक्षखण्डे संनिकर्षवादे—

"अन्ये तु सामान्यज्ञानप्रत्यासत्त्योरिन्द्रियसंबद्धविशेषणताऽन्तर्भावात्तज्जन्यं प्रत्यक्षं संग्राह्यमेवेति" । अग्रे च "प्रत्यक्षविशेषे संनिकर्षविशेषो हेतुरनुगत एव, संयोगेन द्रव्यग्रहः, संयुक्तसमवायेन रूपकर्मणोर्ग्रहणम्, संयुक्तसमवेतसमवायेन रूपत्वादेः, समवायेन शब्दस्य, समवेतसमवायेन शब्दत्वादेः, [1]विशेषणतया शब्दाभावस्य, इन्द्रियसंबद्धविशेषणतया समवाय-घटाभावादेर्योग्यसंनिकर्षादेव ग्रहो न संनिकर्षमात्रात् । ननु संयुक्तसमवायेनावयविग्रहोऽस्तु, न तु संयोगादिस्तत्र हेतुः, तस्य रूपादिग्रहे क्लृप्तत्वादिति

( १ ) अयं संनिकर्षोऽग्रिमेण गतार्थं इति पृथङ्नोच्यते ।

चेन्न; आत्मग्रहे इन्द्रियसंयोगस्य कारणत्वादन्यत्रापि द्रव्यसाक्षात्कारत्वेन तथाकल्पनात्। ननु संयुक्तसमवायो न गन्धादिग्राहकः किन्त्वाश्रयसंयोगः, एवं गन्धत्वादिग्रहोऽप्याश्रयाश्रयसंयोगादिति संयुक्तसमवेतसमवायोऽपि न हेतुरिति चेन्न; गन्धसमवायिसंयोगस्य हेतुत्वे हि यदि गन्धसमवायस्य विशेषणता तदा स हेतुरेव। प्रकृते हेतुत्वरूपविधेयान्वयिन एव विशेषणत्वसंभवात्, उपलक्षणत्वे च संयुक्तद्रव्यमात्रमुपलक्ष्यम्, तथा च घटसंयोगात्पटगन्धग्रहप्रसङ्गः। अथ स्वसमवायिसंयोगो हेतुः तत्र समवायोऽवच्छेदकः (उपलक्षणविशेषेणोभयानुगतमवच्छेदकत्वमात्रं विवक्ष्यते, न तु विशेषणत्वमुपलक्षणत्वं वेति भावः) इति चेत् तर्हि संयोगिसमवायस्य हेतुत्वे संयोगोऽवच्छेदकः समवायो हेतुरिति तुल्यम्"। इति।

यद्यपि पूर्वं समवायस्य निर्विशेषणस्य हेतुत्वमुक्तम्, तथापि कर्णसंयोगावच्छिन्नसमवायस्य प्रत्यासत्तित्वं बोध्यम्। तदुक्तं तत्रैव तत्त्वचिन्तामणौ "कर्णसंयोगावच्छिन्नसमवायस्य प्रत्यासत्तित्वादिति"। यस्य शब्दस्य समवायवृत्त्या आधारता कर्णसंयोगेनावच्छिद्यते स गृह्यते, यस्य तु तदत्यन्ताभावेनावच्छिद्यते स न गृह्यते, इति तद्व्याख्यातारः श्रीमथुरानाथप्रभृतयः। सामान्यलक्षणाज्ञानलक्षणे तु तत्त्वचिन्तामणौ अनुमानखण्डे सामान्यलक्षणाग्रन्थतद्व्याख्यादर्शनेन प्रतीयेते।

तथा हि "व्याप्तिग्रहश्च सामान्यलक्षणाप्रत्यासत्त्या सकलधूमादिविषयकः। कथमन्यथा पर्वतीयधूमे व्याप्त्यग्रहे तस्मादनुमितिः, सा चेन्द्रियसम्बद्धविशेषणताऽतिरिक्तैव वा। तद्विशेष्यकप्रत्यक्षे तदिन्द्रियसंनिकर्षस्य हेतुत्वेनानागतादौ संयोगादेरभावादिति वदन्ति, तदपरे न क्षमन्ते; तथा हि—अनुमाने पक्षधर्मताबलात् धूमो वह्निव्याप्य इत्यनुभवो न तु सर्वो धूमो वह्निव्याप्य इति येन सर्वभानार्थं तत्स्वीकारः। अपि च संयोगादिसम्बन्धेन प्रमेयहेतुके पर्वतः कपिसंयोगाभाववान् प्रमेयादित्यादौ महानसादिषु संनिकृष्टप्रमेये प्रमेयत्वरूपेण व्याप्तिप्रत्यक्षदशायां प्रमेयत्वसामान्यलक्षणप्रत्यासत्त्या पक्षवृत्तिप्रमेयेऽपि व्याप्तिग्रहात् पुरुषः सर्वज्ञः स्यात्। प्रमेयत्वसामान्यलक्षणप्रत्यासत्त्या पक्षवृत्तिप्रमेये व्याप्तिप्रत्यक्षदशायां तया प्रत्यासत्त्या प्रमेयमात्रस्यैव ज्ञानातदनन्तरं प्रमेयवदित्याकारकसकलपदार्थविशेष्यकस्वस्ववृत्तिसकलधर्मप्रकारकोपनीतभाने बाधकाभावात्। अत्रोच्यते—यदि सामान्यलक्षणा नास्ति तदानुकूलतर्कादिकं विना धूमादौ वह्निव्यभिचारसंशयो न स्यात्। प्रसिद्धधूमे वह्निसंबन्धावगमात् कालान्तरीयदेशान्तरीयधूमस्य मानाभावेनाज्ञानात्। सामान्येन तु सकलधूमोपस्थितौ धूमान्तरे विशेषादर्शनेन

व्यभिचारसंशयो युज्यते। न च सर्वज्ञत्वे संशयो न स्यादिति दोषः। घटः स इति घटत्वप्रकारकं हि ज्ञानं संशयविरोधि, तच्च न वृत्तम्, स्वसामग्री-विरहात्; अतो घटत्वादिसकलविशेषज्ञानेऽपि[1] स घटो न वेति संशय इति। समानाकारो हि निश्चयः संशयविरोधी, अत एव जातिमानित्यादिनिश्चयेऽपि घटो न वेति संशयः कोटितावच्छेदकघटत्वांशे निष्प्रकारः, प्रमेयवन्त इति सामान्यलक्षणाजन्यप्रत्ययस्तु न तथेति''।

सामान्यलक्षणाप्रत्यासत्तिविषये श्रीपक्षधरमिश्र-रघुनाथशिरोमण्यो-र्विवादे संप्रदायागतमिदं श्रीपक्षधरमिश्रपद्यम्—

वक्षोजपानकृत्काण संशये जाग्रति स्फुटे।
सामान्यलक्षणा कस्मादकस्मादपलप्यते॥

सामान्यलक्षणेत्यत्र सामान्यं लक्षणं यस्या इत्यर्थः। तत्र यदि लक्षण-पदेन स्वरूपमुच्यते तदा सामान्यस्वरूपा प्रत्यासत्तिरित्यर्थो लभ्यते, तच्चेन्द्रियसंबद्धविशेष्यकज्ञानप्रकारीभूतं बोध्यम्, तथा हि यत्रेन्द्रियसंयुक्तो धूमादिस्तद्विशेष्यकं धूम इति ज्ञानं यत्र जातं तत्र ज्ञाने धूमत्वं प्रकारस्तत्र धूमत्वेन संनिकर्षेण धूम इत्येवंरूपं सकलधूमविषयकं ज्ञानं जायते। यद्यपि धूमत्वादेरिन्द्रियप्रतियोगिकत्वाभावात् संनिकर्षत्वमयुक्तम्, तथापि संयोगस्येन्द्रियप्रतियोगिकत्वात् तद्घटितस्येन्द्रियसंयुक्तविशेष्यकज्ञानप्रकारी-भूतधूमत्वादेः प्रत्यासत्तितानिर्वाहः। ननु यत्र चक्षुःसंनिकर्षेण धूम इति ज्ञानं जनितं, तत्र चक्षुःसंयोगविगमेऽपि तादृशज्ञानमादायेन्द्रियसम्बद्ध-विशेष्यकज्ञानप्रकारीभूतधूमत्वादेर्धूमान्तरे सत्त्वाद् धूमान्तराणां सामान्य-लक्षणया ज्ञानापत्तिः, न च तदा धूमो नेन्द्रियसम्बद्धः, ज्ञानलक्षणात्मक-संनिकर्षस्य धूमे सत्त्वात्। न च तत्र सामान्यलक्षणाजन्यज्ञानस्वीकारे क्षतिविरह इति वाच्यम्, तन्मूलकज्ञानधारापत्तेर्दुर्वारत्वादिति चेन्न; इन्द्रियसम्बन्धस्य लौकिकस्यैव विवक्षितत्वात्, ज्ञानलक्षणात्मसन्निकर्षस्य चालौकिकत्वात्। इन्द्रियसम्बन्धश्चात्र विशेषणत्वेन वर्तमान एवापेक्ष्यते, न तु यथाकथञ्चिद् व्यावर्तकः, अन्यथा धूमप्रत्यक्षानन्तरं चक्षुः-संयोगविगमेऽपि धूमे पूर्वकालीनचक्षुःसंयोगमादाय सामान्यलक्षणया धूमा इति ज्ञानापत्तेः, तदिन्द्रियेण सामान्यलक्षणया ज्ञाने जननीये तदिन्द्रिय-जन्यतदिन्द्रियलौकिकसन्निकर्षवद्विशेष्यकज्ञानप्रकारीभूतं सामान्यं प्रत्या-

---

(१) प्रमेयत्वेनेत्यादिः।

सत्तिर्विवक्षिता। अन्यथा यत्र चक्षुःसयोगे विद्यमानेऽपि करणादिदोषवशान्न धूमचाक्षुषं किन्तु धूमत्वप्रकारकं स्मरणम्, तत्र धूमत्वसामान्यलक्षणाजन्यज्ञानापत्तिः। नचैवमणुत्वेन यत्किञ्चिदणूपस्थितौ अणुत्वसामान्यलक्षणया सकलाणुगोचरो मानसो बोधो न स्यात्, तदाऽणौ मनसो लौकिकसम्बन्धस्य ज्ञाने मनोजन्यत्वस्य चाभावादिति वाच्यम्; बहिरिन्द्रियस्थले तादृशसामालक्षणाप्रत्यासत्तिस्वरूपस्वीकारात्। मानसस्थले तु ज्ञानप्रकारीभूतं सामान्यं प्रत्यासत्तिः, न च बहिरिन्द्रियस्थले लाघवात् इन्द्रियसंबद्धप्रकारीभूतं सामान्यमेव प्रत्यासत्तिरित्युच्यताम् किमिन्द्रियसंबद्धविशेष्यकज्ञानप्रकारीभूतसामान्यस्य प्रत्यासत्तित्वस्वीकारेणेति वाच्यम्; धूलीपटले धूमत्वभ्रमानन्तरं सकलधूमविषयकज्ञानाभावप्रसङ्गात्। तत्र धूमेन सहेन्द्रियसंबन्धाभावात्। इन्द्रियसंबद्धविशेष्यकज्ञानप्रकारीभूतसामान्यस्य प्रत्यासत्तित्वस्वीकारे तु इन्द्रियसंबद्धं धूलीपटलं तद्विशेष्यकं धूम इति ज्ञानं तत्प्रकारीभूतं धूमत्वं प्रत्यासत्तिरिति न सकलधूमविषयकज्ञानानुपपत्तिः। परन्तु समानानां भावः सामान्यं, तच्च क्वचिन्नित्यं धूमत्वादि, क्वचिच्चानित्यं घटादि। तत्रैवं सति यत्र तद्घटनाशानन्तरं तद्घटवतः स्मरणं जातं तत्र सामान्यलक्षणया सर्वेषां तद्घटवतां मानसं न स्यात्, सामान्यस्य तदानीमभावात्। किञ्चाद्य घट इति ज्ञाने परदिने घटा इति ज्ञानापत्तिरपि, तादृशज्ञानप्रकारीभूतसामान्यस्य परदिनेऽपि सत्त्वात्। तस्मात् सामान्यविषयकं ज्ञानं प्रत्यासत्तिर्न तु तादृशं सामान्यम्; तथा च सामान्यलक्षणमित्यत्र लक्षणशब्दस्य विषयोऽर्थः, लक्ष्यते इति कर्मव्युत्पत्त्या बाहुलकात् कर्मणि ल्युटः स्वीकारात्। तेन सामान्यविषयकं ज्ञानं प्रत्यासत्तिः। एतन्मते च निर्विकल्पकसाधारणं स्मरणसाधारणं च सामान्यज्ञानमात्रं प्रत्यासत्तिः कारणम्। घटत्वादिप्रकारकसकलघटविशेष्यकप्रत्यक्षञ्च कार्यम्। सामान्यस्य प्रत्यासत्तित्ववादिपूर्वमते तु प्रत्यक्षज्ञानप्रकारीभूतं सामान्यं प्रत्यासत्तिः। ननु ज्ञानलक्षणा प्रत्यासत्तिर्यदि ज्ञानरूपा, सामान्यलक्षणाऽपि ज्ञानरूपा तदा तयोर्भेदो न स्यादिति चेन्न; सामान्यलक्षणाप्रत्यासत्तिर्हि सामान्याश्रयस्य ज्ञानं जनयति, ज्ञानलक्षणाप्रत्यासत्तिस्तु यद्विषयकं ज्ञानं तस्यैव प्रत्यासत्तिरिति भेदात्। अत्रायमर्थः—प्रत्यक्षे संनिकर्षं विना भानं न संभवति। तथा च सामन्यलक्षणां विना धूमत्वेन सकलधूमानां वह्नित्वेन सकलवह्नीनाञ्च भानं कथं भवेत्तदर्थं सामान्यलक्षणा स्वीक्रियते। नच सकलवह्निधूमभानाभावे का क्षतिरिति वाच्यम्। प्रत्यक्षधूमे वह्निसंबन्धस्य गृहीतत्वात् अन्यधूमस्य चानुपस्थितत्वाद् धूमो वह्निव्याप्यो न वेति संशयानुपपत्तेः। सामान्यलक्षणावादिमते तु सामान्यलक्षणया सकल-

धूमोपस्थितौ कालान्तरीयदेशान्तरीयधूमे वह्निव्याप्यत्वसन्देहः सम्भवति। सामान्यलक्षणावद् ज्ञानलक्षणाऽपि स्वीकार्यैव। अन्यथा सुरभि चन्दनमिति चाक्षुषप्रत्यक्षे सौरभस्य भानं न स्यात्, सौरभांशे चक्षुःसंनिकर्षाभावात् सौरभविषयकलौकिकप्रत्यक्षसामग्र्याः सहकारिण्या विरहेण च सौरभत्व-सामान्यलक्षणयाऽपि अत्र सौरभभानं न सम्भवति, अत एव तदिन्द्रियजतद्धर्मबोधसामग्र्यपेक्ष्यते इत्युक्तं कारिकावलीग्रन्थे। यद्यपि सौरभाश्रयविषयकलौकिकप्रत्यक्षसामग्र्या अपि सौरभविषयकप्रत्यक्ष-लौकिकसहकारित्वोपगमेन सौरभत्वसामान्यलक्षणयाऽपि सुरभि चन्दन-खण्डमिति चाक्षुषं संभवति, तथापि अत्र स्वरूपतः सौरभत्वस्य भानं ज्ञानलक्षणयैव। तदानीं सौरभत्वांशे धर्मान्तरस्यागृहीततया सामान्य-लक्षणया स्वरूपतः सौरभत्वस्य भानासंभवात्। न च सौरभत्वसामान्य-लक्षणयैव स्वाश्रयभानवत् स्वस्यापि भानमस्तु, तुल्यवित्तिवेद्यत्वात् सौरभ-त्वाविषयकसौरभप्रत्यक्षस्यादृष्टत्वात् इति वाच्यम्, सामान्यलक्षणायाः सर्वत्राश्रयग्राहकत्वस्यैव दृष्टत्वेनात्रादृष्टचरकल्पनाया असंभवात्। ननु तथापि विशिष्टबुद्धिं प्रति विशेषणज्ञानं कारणमिति क्लृप्तकार्यकारणभावेनैव सुरभि चन्दनखण्डमिति प्रत्यक्षं सौरभस्मरणेनैवोपपद्यते इति ज्ञानलक्षणायाः प्रत्यक्षं प्रति कारणत्वान्तरकल्पनं वृथेति चेन्न; विशेषणज्ञानस्य विशिष्टबुद्धिं प्रति कारणत्वेऽपि विशिष्टप्रत्यक्षं प्रत्यकारणत्वात्। किञ्च, यत्र धूमत्वेन धूलीपटलं ज्ञातं तत्र धूमत्वेन धूलीपटलस्यानुव्यवसाये भानं ज्ञानलक्षणयैव, तत्र धूमत्वज्ञानरूपसामान्यलक्षणायाः स्वविषयधूमत्वाश्रयत्वसंबन्धेन धूली-पटलेऽभावेन सामान्यलक्षणयाऽनुव्यवसाये धूलीपटलभानासंभवात्। किञ्चा-न्यथाख्यातिवादिनये इदं रजतमित्यादिभ्रमस्थले सर्वत्रैवान्यधर्मस्यान्यत्र प्रत्यक्षं न स्यात्, रजतत्वादिधर्मस्य तदानीमिन्द्रियसंनिकृष्टत्वाभावादतो भ्रमनिर्वाहार्थं ज्ञानलक्षणाप्रत्यासत्तिः स्वीकार्यैव।

योगजधर्मविशेषो योगाभ्यासजनितः श्रुतिस्मृतिपुराणादिप्रतिपाद्यो योगिनामतीतानागतव्यवहितविप्रकृष्टादिप्रत्यक्षहेतुः। परन्तु मीमांसकै-र्योगज्ञानस्यास्मदादिप्रातिभज्ञानवल्लिङ्गाद्याभासजन्यत्वेन प्रामाण्यं नैव स्वीक्रियते।

तदुक्तं श्लोकवार्त्तिके प्रत्यक्षसूत्रे—

> लौकिकी प्रतिभा यद्वत्प्रत्यक्षाद्यनपेक्षिणी।
> न निश्चयाय पर्याप्ता तथा स्याद् योगिनामपि ॥ ३२ ॥

बौद्धास्तु सर्वज्ञं बुद्धं कल्पयन्तो योगजञ्च प्रत्यक्षं स्वीकुर्वन्त्येव। अतएव—

अतीतानागतेऽप्यर्थे सूक्ष्मे व्यवहितेऽपि च।
प्रत्यक्षं योगिनामिष्टं कैश्चिन्मुक्तात्मनामपि॥

इति प्रत्यक्षसूत्रस्थश्लोकवार्त्तिकं व्याचक्षाणेन न्यायरत्नाकरकृता—योगिनां हि भावनाबलजप्रत्यक्षं सकलातीतानागतसूक्ष्मादिविषयं धर्माधर्मावपि गोचरयतीति शाक्यादयो मन्यन्ते। स्वभावत एवात्मानः सर्वज्ञाः, ते देहावरणेनावृतज्ञानाः किञ्चिदेवेन्द्रियादिवशेन जानन्ति। निर्मुक्तदेहावरणास्तु मुक्ताः सर्वमनागतादि जानन्तीत्यार्हताः—इत्युक्तम्।

युक्तस्य योगजधर्मसहायेन मनसाऽऽकाशपरमाण्वादिनिखिलपदार्थगोचरं ज्ञानं सर्वदैव भवति। युञ्जानस्य तु ध्यानविशेषोऽपि योगजधर्मस्य सहकारीति ध्यानकाले एव तादृशं ज्ञानं नान्यदेति भेदः। इदं तु विज्ञेयम्—द्रव्यग्राहकाणीन्द्रियाणि चक्षुस्त्वङ्मनांसि त्रीण्येव। अन्यानि तु घ्राणरसनश्रवणानि गुणग्राहकाणि इति।

वेदान्तिनस्तु समवायानङ्गीकारेण संयोग-संयुक्ततादात्म्य-संयुक्ततादात्म्यवत्तादात्म्येत्यादिसंबन्धपञ्चकं स्वीकुर्वन्ति। विशेषणविशेष्यभावस्तु षष्ठो न स्वीक्रियते। तथा हि—अभावप्रत्यक्षमनुपलब्धिरूपमानान्तरजन्यं न तु चक्षुरादिप्रमाणजन्यम्, अभावस्य द्रव्याद्यनात्मकस्य चक्षुरादिना सह संयोगसंयुक्ततादात्म्यादिरूपसंबन्धपञ्चकासंभवात्। नच तथापि चक्षुःसंयुक्तविशेषणत्वादिरूपः संबन्धः संभवत्येवेति वाच्यम्। तस्य प्रत्यक्षनियामकसंबन्धरूपत्वासंभवात्। अन्यथाऽनुमानोच्छेदप्रसङ्गात्। पर्वतो वह्निमानित्यनुमितावपि चक्षुःसंयुक्तपर्वतविशेषणतयैव वह्नेः प्रत्यक्षसंभवात्। तथा च घटाभाववद् भूतलमित्यादि प्रत्यक्षं न घटाभावांशे चाक्षुषं किन्त्वनुपलब्धिरूपमानान्तरजन्यमेव। मानन्तरस्य चाभावप्रत्यक्षं प्रति कारणत्वं पृथगेव तृणारणिमणिन्यायेन। चक्षुराद्यन्वयव्यतिरेकानुविधानं तु अधिष्ठानप्रत्यक्ष एवोपक्षीणम्, तथा सामान्यलक्षणाऽपि नेन्द्रियप्रत्यासत्तिः, मानाभावात्। न च महानसीयधूमे इन्द्रियसंयोगेन तत्रैव व्याप्तिग्रहे पर्वतीयधूमादनुमितिर्न स्यात्, सामान्यस्य च धूमत्वादेः प्रत्यासत्तित्वे पर्वतीयधूमस्यापि प्रत्यासन्नत्वात्तत्र व्याप्तिग्रहे ततोऽनुमितिरिति वाच्यम्। पर्वतीयधूमे इन्द्रियसंनिकर्षदशायां धूमत्वेन प्रकारेण गृहीतस्मृतव्याप्तेस्तत्रानुमितिरूपवैशिष्ट्यग्रहसंभवात्। सुरभि चन्दनमितिवत् विशेष्येन्द्रियसंनिकर्षविशेषणज्ञानासंसर्गाग्रहरूपाया विशिष्टज्ञानसामग्र्याः पूर्णत्वात्।

व्याप्तिस्मृतिप्रकारेण वा पक्षधर्मताज्ञानस्य हेतुता। तथा हि—महानसीय एव धूमो धूमत्वेन व्याप्तिस्मृतिविषयो भवति, धूमत्वेन पर्वतीयधूमज्ञानं चापि जातम्, तच्च सामान्यलक्षणां विनैव तावतैवानुमितिसिद्धेः। न च सामान्यप्रत्यासत्तिं विना धूमो वह्निव्यभिचारी न वेति अनुभूयमानसंशयो न स्यात्, प्रसिद्धधूमे वह्निसंबन्धावगमात्, अप्रसिद्धस्य चाज्ञानात् इति वाच्यम्। प्रसिद्धधूम एव तत्तद्धूमत्वादिना व्याप्तिनिश्चयेऽपि धूमत्वेन तत्संशयोपपत्तेः। तथा चोक्तं मणिकृताऽपि—"घटत्वेनेतरभेदनिश्चयेऽपि पृथिवीत्वादिना तत्र संशयसिषाधयिषे भवत एवेति"। ननु सिद्धे नेच्छा; किन्तु असिद्धे, सा च स्वसमानविषयकज्ञानजन्या, तच्च ज्ञानं न सामान्यप्रत्यासत्तिं विना, समानविषयकज्ञानञ्च समानप्रकारकत्वे सति समानविशेष्यकं ग्राह्यम्। अन्यथा रजतत्वेन प्रकारेण रजतेऽनुभूयमाने घटादौ रजतत्वप्रकारकेच्छाप्रसङ्गात् इति चेन्न—ज्ञाननिष्ठस्य समानप्रकारकत्वमात्रस्येच्छानियामकत्वेन सिद्धविषयकसुखत्वप्रकारकज्ञानादेव अज्ञाते सुखे इच्छोपपत्तेः। इच्छाविषयनिष्ठज्ञानप्रकाराश्रयत्वस्यापि इच्छानियामकत्वस्वीकारेण रजतत्वेन प्रकारेण रजतेऽनुभूयमाने सति घटादौ रजतत्वप्रकारकेच्छाया अभावः। इदं रजतमिति भ्रमस्थले तु अनिर्वचनीये रजते रजतार्थिनः इच्छाधीना प्रवृत्तिरिति प्रकाराश्रयत्वमव्याहतमेव।

ननु अभावज्ञानस्य प्रतियोगिज्ञानजन्यत्वात् प्रौढप्रकाशकयावत्तेजोऽभावरूपस्य तमसः प्रत्यक्षं न स्यात्, सामान्यप्रत्यासत्तिं विना यावत्तेजोज्ञानासंभवादिति चेन्न। अस्मन्मते तमसो भावान्तरत्वात्। तादृशतेजःसामान्याभावस्य तमोव्यञ्जकत्वमपि स्वरूपसत एव, न तु ज्ञातस्येति न तत्रापि सामान्यप्रत्यासत्त्यपेक्षा। न च गोत्वाभावज्ञानं गोत्वत्वप्रकारकज्ञानजन्यं तच्च गवेतरावृत्तित्वे सति सकलगोवृत्तित्वरूपं सामान्यप्रत्यासत्तिमन्तरेण न शक्यमवगन्तुमिति वाच्यम्, यत्किञ्चिद्गोव्यक्तेरेव गोत्वत्वरूपत्वात्। तथा हि—गोत्वं नास्ति इत्यभावे समवेतत्वसम्बन्धेन यत्किञ्चिद्गोव्यक्तिरेव प्रतियोगितावच्छेदिका, तथा च यथा घटो नास्ति इति ज्ञाने घटसामान्याभावस्य सर्वघटप्रतियोगिकस्यापि विशेषणतया कश्चिदेव[1] घटो भाति तथा गोत्वं नास्ति इति ज्ञाने सकलगोव्यक्त्य-

---

(१) प्रतियोगित्वेन भानं सर्वघटानां विशेषणत्वेन भानं तु कस्यचिदेव घटस्येति अनुभवमाश्रित्योच्यते। प्रतियोगित्वं निरूपकत्वरूपः स्वरूपसंबन्धविशेषः, विशेषणत्वं तु विद्यमानत्वे सति व्यावर्तकत्वमिति विशेषः।

वच्छिन्नप्रतियोगिताकेऽपि गोत्वाभावे प्रतियोगितावच्छेदकतया भासमानेन केनचिद् गवा विशिष्टं गोत्वं विशेषणम्, न तु सर्वैर्गोभिः। ननु अनुमितेर्विशिष्टबुद्धित्वाद्विशेषणज्ञानजन्यत्वेन सामान्यप्रत्यासत्तिसिद्धिः, तया विना पर्वतीयवह्निरूपविशेषणस्य ज्ञानासम्भवात्। न चानुमानान्तराद् विशेषणज्ञानसिद्धिः, अनवस्थानादिति चेन्न; विशेषणतावच्छेदकप्रकारकज्ञानादेव वह्नित्वप्रकारकयत्किञ्चिद्वह्निविशेष्यकज्ञानरूपात्—साध्यविशेषणकपक्षविशेष्यकानुमितिसम्भवात्। किञ्च धूमत्वादिसामान्यं न स्वरूपतः प्रत्यासत्तिः, धूलीपटले धूमभ्रमानन्तरं धूमत्वेन सकलधूमनिष्ठवह्निव्याप्तिग्रहानुदयप्रसङ्गात्, तत्र स्वरूपतो धूमत्वाभावात्। न चेष्टापत्तिः, तदुत्तरकालमनुमित्यनुदयापत्तेः, तथा च धूमत्वज्ञानं प्रत्यासत्तिरिति वाच्यम्, तच्च धूमेन्द्रियसंनिकर्षदशायां धूमज्ञानात्प्राङ् नास्त्येव, निर्विकल्पके मानाभावात्। विशिष्टज्ञानत्वेन विशेषणज्ञानत्वेन च कार्यकारणभावानभ्युपगमात्, अवश्यक्लृप्तकार्यकारणभावविशेषेणैव सर्वव्यवहारोपपत्तेः। न च धूमत्वेन संनिकृष्टधूमव्यक्तिज्ञानानन्तरं तत्समानाकारकमसंनिकृष्टधूमविषयकं ज्ञानान्तरमुत्पद्यते इत्यत्र मानमस्ति। धूमत्वेन पुरोवर्तिनं धूमं साक्षात्करोमि न व्यवहितमित्यनुभवाच्च। अन्यथा जगतीगतसकलधूमव्यक्तीरहं साक्षात्करोमीत्यनुव्यवसीयेत। नचैवमनुभवमात्रशरणैरभ्युपेयते। किञ्च सामान्यप्रत्यासत्त्यङ्गीकारे 'यत्प्रमेयं तदभिधेयम्, यत्प्रमेयवत्तदभिधेयवत्' इत्यादिव्याप्तिपरिच्छेदे सार्वज्ञ्यापत्तिः। न चेष्टैव सा, परज्ञानविषयो घटो न वेत्यादिसंशयानुपपत्तेः। न च घटत्वप्रकारकघटविषयकनिश्चयो घटसंशयविरोधी प्रमेयमिति निश्चयस्तु घटविषयकोऽपि न घटत्वप्रकारक इति वाच्यम्। भासमानवैशिष्ट्यप्रतियोगिन एव प्रकारत्वात्। घटत्वस्यापि प्रमेयमिति ज्ञाने भासमाने वैशिष्ट्यप्रतियोगित्वात्।

ज्ञानलक्षणप्रत्यासत्तिरपि वेदान्तिभिर्नाद्रियते। तथा हि—सुरभिचन्दनखण्डमिति ज्ञानं चन्दनखण्डांशे चाक्षुषप्रत्यक्षरूपं, सौरभांशे तु अनुमितिरूपं परोक्षम्। तत्र चन्दनत्वमेव हेतुः। अन्यथा साध्यविशिष्टपक्षप्रत्यक्षोपपत्तेः प्रत्यक्षपक्षकानुमानमात्रोच्छेदप्रसङ्गः। परोक्षापरोक्षवृत्तिद्वये प्रतिबिम्बितं चैतन्यमेकमेवेति ज्ञानैकत्वोपपत्तिः। नचैकस्मिन् ज्ञाने परोक्षत्वापरोक्षत्वोभयसत्त्वे परोक्षत्वापरोक्षत्वरूपजातिबाधकः संकरः प्राप्नोतीति वाच्यम्। जातित्वोपाधित्वपरिभाषायाः सकलप्रमाणागोचरतयाऽस्माभिरनभ्युपगमात्। नापि इदं रजतमित्यादिभ्रमसिद्ध्यर्थं ज्ञानलक्षणाप्रत्यासत्तिरभ्युपेया। रजतप्रत्यक्षमात्रे रजतसंयोगत्वेन कारणत्वावधारणात्, सन्निकर्षान्तर-

सत्त्वेऽपि रजतसंयोगाभावे रजतप्रत्यक्षोत्पत्तेर्वक्तुमशक्यत्वात् । न च लौकिकप्रमारूपप्रत्यक्ष एव तस्य कारणत्वमिति वाच्यम् । अस्य विभागस्य स्वशिष्यानेव प्रत्युचितत्वात्, गौरवकरत्वात्, निर्विकल्पकसाधारण्याभावाच्च ज्ञानरूपसन्निकर्षस्य । रजतेन्द्रियसन्निकर्षजस्य च रजते रजतत्वप्रकारकज्ञानस्य भ्रमत्वानुपपत्तेश्च । तस्माद् इदमिति इन्द्रियसन्निकर्षजन्यम्, रजतमिति तु [1]स्मृतिरूपमविद्यावृत्त्यात्मकं ज्ञानमनिर्वचनीयत्वात् । इत्थञ्चात्रापि वृत्तिद्वयम्, चैतन्यन्तूभयत्रापि एकमेवेति नाख्यातिवादिमतप्रवेशः । तथा च भ्रमस्थले रजतमाविद्यकं साक्षिभास्यं नैन्द्रियकमिति नेन्द्रियसन्निकर्षापेक्षा तत्प्रत्यक्षत्वाय । योगजप्रत्यक्षन्तु वेदान्तिभिरपि स्वीक्रियते एव ।

बौद्धा अपि सामान्यानङ्गीकारात्सामान्यलक्षणामपि नाद्रियन्ते । चार्वाकमतेऽपि न सामान्यलक्षणाप्रत्यासत्तिः । तथा हि--अनुमानप्रमाणखण्डनावसरे उक्तं तैः 'व्याप्तिः सत्तया चक्षुरादिवन्नाङ्गभावं भजते, किन्तु ज्ञाततया, कः खलु ज्ञानोपायो भवेत् ? न तावत्प्रत्यक्षं तच्च बाह्यमाभ्यन्तरं वाऽभिमतम् । न प्रथमः; तस्य संप्रयुक्तमात्रविषयकज्ञानजनकत्वेन भवतिप्रसरसम्भवेऽपि भूतभविष्यतोस्तदसम्भवेन सर्वोपसंहारवत्या व्याप्तेर्दुर्ज्ञानत्वात् । न च व्याप्तिज्ञानं सामान्यगोचरमिति वाच्यम्—व्यक्त्योरविनाभावाभावप्रसङ्गात् । नापि चरमः अन्तःकरणस्य बहिरिन्द्रियतन्त्रत्वेन बाह्येऽर्थे स्वातन्त्र्येण प्रवृत्त्यनुपपत्तेरिति । वैशेषिकमतं तु समानतन्त्रत्वान्नैयायिकमतवत्, इति पृथङ् न विवेचितम् । मीमांसकमते तु सामान्यलक्षणाप्रत्यासत्तिविषये 'व्यवहारे भट्टनय' इति प्रवादानुसारेण वेदान्तिवदेव । भ्रमस्थले तु अनिर्वचनीयख्यात्यनभ्युपगमेन नैयायिकवदेवान्यथाख्यात्यभ्युपगमेन च ज्ञानस्य संस्कारस्य वा प्रत्यासत्तित्वमावश्यकम्, इन्द्रियाणां प्राप्यकारित्वस्वीकारात् ।

इति प्रत्यक्षोपयोगिसन्निकर्षविषये संक्षेपतो मतानि प्रदर्शितानि । वस्तुतस्तु अद्वैतिमते सर्वसामञ्जस्याल्लाघवाच्च सन्निकर्षपञ्चकमेवाभ्युपेयमिति भाति ।

---

(१) स्मृते रूपमिवासंनिहितविषयकत्वं रूपमस्येत्यर्थः, न तु वस्तुतः स्मृत्यात्मकमेवेत्यर्थः; प्रत्यक्षाभासत्वाभ्युपगमात् ।

( ६ )

# ख्यातिविमर्शः

अथ ख्यातिपदार्थो विचार्यते। तत्र धातूनामनेकार्थत्वात् ख्यातिरिति भ्रमज्ञानमभिप्रेयते सर्वेषु दर्शनेषु। स्वस्वदर्शनानुसारेण च भ्रमविषय-पदार्थान् व्यवस्थापयितुं सर्वेऽपि ख्यातिवादाः प्रवृत्ताः। तत्र ख्यातिभेदा बहवस्तत्तच्छास्त्रकृत्परिकल्पिताः।

तथाहि–नैयायिकवैशेषिका-इदं रजतमित्यादिभ्रममन्यथाख्यातिं मन्वते। शुक्तिकाया रजतत्वेन भानमिति यावत्। अन्यत्र सतो रजतस्य तादात्म्य-सम्बन्धेन ज्ञानलक्षणप्रत्यासत्त्या शुक्तिकायामलौकिकचाक्षुषप्रत्यक्षमभिमतं तेषाम्।

सांख्या योगिनो भाट्टा जैनाश्च शुक्तिरूप्यादिभ्रमं सदसत्ख्यातिं स्वीकुर्वन्ति। तथा हि 'सदसत्ख्यातिर्बाधाबाधाद्' इति सांख्यसूत्रम्। तदनुसारिभिर्विज्ञानभिक्ष्वादिभिरुक्तम्—'स्वरूपेणाबाधः सर्ववस्तूनां नित्यत्वात् संसर्गतस्तु बाधः' इति। "रजतं वणिग्वीथीस्थरूपेण सत् शुक्त्यध्यस्तरूपेण चासत्" इति च। योगिनामप्येतदेव मतम्। भट्टपादैरप्युक्तम्—

भावान्तरमभावोऽन्यो न कश्चिदनिरूपणात्।
स्वरूपपररूपाभ्यां सर्वं सदसदात्मकम्॥ इति

भाट्टमते एवासत्संसर्गख्यातिरपि। तदुक्तं तैः—

तस्माद् यदन्यथा सन्तमन्यथा प्रतिपद्यते।
तन्निरालम्बनं ज्ञानमभावालम्बनं च तत्॥ इति

अभावालम्बनम्, असदालम्बनम्, असत्संसर्गावलम्बनम्, इति यावत्। जैनानामपि भट्टपादसाम्यमेव। भावाभावात्मकत्वाद् वस्तुनो निर्विषयो ह्यभाव इति स्वीकारात्। प्राभाकराणान्तु अख्यातिरभिप्रेता। तथा हि इदं रजतम् इति ज्ञानद्वयम्। तत्राद्यं प्रत्यक्षं द्वितीयं तु स्मरणम्, तयोस्तद्-विषययोश्च विवेकाख्यातिबलाद् भ्रमत्वव्यवहारः प्रवृत्त्यादिश्च, नतु संसर्ग-ज्ञानं भ्रमात्मकमस्ति, तथा सति सर्वविज्ञानानामनाश्वासप्रसङ्गात्।

मध्वमतेऽलीकख्यातिरसत्ख्यातिरेव, तन्मतेऽधिष्ठानरूपसदुपरागेणालीकस्य रजतादेर्भानस्वीकारात्।

निम्बार्कमते हट्टस्थरजतमेव शुक्तितादात्म्येनैव भासते। तत्र च शुक्तिरजतयोर्भेदाभेदस्वीकारत्तस्य च ज्ञानस्याभेदमात्रावगाहित्वाद् भेदानवगाहित्वेन भ्रमत्वम् इत्यन्यथाख्यातिरेव।

वल्लभमते सर्वस्य ब्रह्मपरिणामत्वाद् भ्रमस्थले शुक्तिः कारणविकृतिहेतुर्ब्रह्मपरिणामः, रजतन्तु कारणाविकृतिहेतुर्ब्रह्मपरिणाम इति रजतं सदेवेति सत्ख्यातिः।

अचिन्त्यभेदाभेदवादिनामपि मते सत्ख्यातिरेव। तथा हि तेषां श्लोकौ—

शुक्त्यादौ रजतादेश्च भावः श्रुत्यैव चोदितः।
रूप्यशुक्त्यादिनिर्देशभेदो भूयस्त्वहेतुकः॥
रूप्यादिसदृशश्चायं शुक्त्यादिरुपलभ्यते।
अतस्तस्यात्र सद्भावः प्रतीतेरपि निश्चितः॥

आत्मख्यातिस्तु विज्ञानवादिनो बौद्धस्य, सौत्रान्तिकवैभाषिकयोरपि। तथा हि—विमतं रजतं बुद्धिरूपं संप्रयोगमन्तरेणापरोक्षत्वाद् बुद्धिवत्। संस्कारसामर्थ्याच्च विज्ञानस्य रजताकारः। ततश्चान्तरं विज्ञानमेव रजताकारेण पुरोवर्तित्वेन गृह्यते। अतएव' नेदं रजतम्' इति बाधकप्रत्ययेन पुरोवर्तित्वस्यैव निषेधो न तु रजतस्य। धर्मधर्म्युभयनिषेधकल्पनापेक्षया पुरोवर्तित्वस्य धर्ममात्रस्यैव निषेधे लाघवाच्च।

असत्ख्यातिस्तु सर्वशून्यतावादिनो बौद्धस्य माध्यमिकस्य। तेन विज्ञानस्यासद्भासकत्वेनासत्पक्षपातित्वनियमस्वीकारात्। सत्ख्यातिवादिनो हि सर्वेऽपि प्रकाशमानत्वमात्रमेव हि वस्तूनां सत्त्वं स्वीकुर्वन्ति, ततश्च भासमानस्य सर्वस्यैव सत्त्वप्रसङ्ग इत्यसत्ख्यात्यवतारः।

अनिर्वचनीयख्यातिस्तु अद्वैतिनाम्। असच्चेत् शुक्तिरूप्यं शशशृङ्गादिवत् न प्रतीयेत, सच्चेदात्मवन्न बाध्येत, सदसत्वं त्वेकस्य व्याहतमिति सर्वथाऽनिर्वचनीयमेव रूप्यं शुक्त्यवच्छिन्नचैतन्ये विवर्तत इति।

सतीष्वपि प्राङ्निरूपितासु विविधासु ख्यातिषु श्रीशंकरभगवत्पादैः प्रधानमल्लनिर्वहणन्यायेन चतस्र एव ख्यातयो निराकृताः, इतरख्यातीनां निराकर्तव्यख्यातिवादिभिरेव निराकृतत्वात् इति। अतएव सम्प्रदायविद्भिः ख्यातिपञ्चकमेवोक्तम्—

आत्मख्यातिरसत्ख्यातिरख्यातिः ख्यातिरन्यथा ।
तथाऽनिर्वचनख्यातिरित्येतत्ख्यातिपञ्चकम् ॥

ख्यातिपञ्चकस्य स्वरूपं प्रागेवोपवर्णितम् । अनिर्वचनीयख्यातिरेव चाध्यासपदेन व्यवह्रियतेऽद्वैतवादिभिः । अध्यासलक्षणं तूक्तं शारीरकीये शाङ्करभाष्ये—"स्मृतिरूपः परत्र पूर्वदृष्टावभासः" इति । अस्यार्थः—"स्मृते रूपमिव रूपं यस्य सोऽयं स्मृतिरूपः । असन्निहितविषयकत्वं च स्मृतिरूपत्वम् । सोऽयं देवदत्त इत्यादि प्रत्यभिज्ञानन्तु संनिहितविषयमिति न तत्राध्यासता । अवसन्न उच्छिन्नो भासोऽवभासः । अवमतो युक्त्या तिरस्कृतो वा भासोऽवभासपदार्थः । यदि च परत्र पूर्वदृष्टावभास इत्येतावन्मात्रं लक्षणमुच्येत तदा पाटलिपुत्रे पूर्वं दृष्टस्य देवदत्तस्य परत्र माहिष्मत्यामवभासे समीचीनेऽतिव्याप्तिः । अवभासपदस्य समीचीनेऽपि प्रसिद्धत्वात्, अतः स्मृतिरूप इत्युक्तम्, तदर्थस्तु उक्त एव ।

अथवाऽसन्निधानेन सत्ख्यातिरिह वारिता ।
अवभासादसत्ख्यातिर्नृश्रृङ्गे तददर्शनात् ॥

अख्यात्यन्यथाख्यातिमतयोर्देशान्तरस्थमधिष्ठानम्, आत्मख्यातिमते ज्ञानम्, सत्ख्यातिमते पुरोवर्ति शुक्त्यादिकम्, अस्मिन् मतचतुष्टयेऽपि सदेव रजतादिकं तत्तदधिष्ठानसमसत्ताकमित्यसन्निधानविशेषणेन चतुर्विधाप्येषा सत्ख्यातिर्वार्यते । यतोऽसन्निहितत्वं स्वाधिष्ठानेन समसत्ताकत्वाभावः । असन्निहितत्वविशेषणेनैव शून्यवाद्यभिमतनिरधिष्ठानासत्ख्यातेरपि निरासः । असति स्वाधिष्ठानाप्रसिद्ध्या तेन समसत्ताकत्वाभावरूपासन्निहितत्वस्य तत्र निरूपयितुमशक्यत्वात् । अवभासपदेनापरोक्षज्ञानवाचिना-शुक्तौ असद्रजतं भासते इति मध्वाभिप्रेतासत्ख्यातेर्वारणम् । आरोपे च पूर्वदृष्टत्वमात्रमुपयुज्यते, न तु आरोप्यस्य वास्तवत्वं प्रमितत्वं वा मानाभावाद् गौरवाच्च ।

एवमपि यद्यपि परस्पराश्रयदोषः समापतत्येव, तथा हि—आरोप्यस्य प्रतीतौ सत्यां पूर्वदृष्टस्यारोपः, आरोपनिबन्धना च प्रतीतिरिति, तथापि व्यवहारानादित्वादध्यासानादित्वमुपेत्य न दोषः । तदुक्तं भाष्ये—'नैसर्गिकोऽयं लोकव्यवहारः" इति । एवंलक्षणकश्चाध्यासः सर्वेषां परीक्षकाणां सम्मतः । किन्तु तद्भेदे विप्रतिपत्तिः, तथा हि "तं केचिदन्यत्रान्यधर्माध्यास इति वदन्ति" । अयमर्थः—वस्तुतो ज्ञानधर्मस्य ज्ञानाकारस्य रजतस्यान्यत्र बाह्ये शुक्तिकादौ अध्यास इति । इयञ्च विज्ञानवादिनां बौद्धानां सौत्रा-

न्तिकवैभाषिकयोश्चात्मख्यातिरुक्ता, तैः क्षणिकविज्ञानस्यैवात्मत्वस्वीकारात्। शुक्तिरूप्यादेश्च विज्ञानाकारत्वाभ्युपगमात्। अन्ये तु "यत्र यदध्यासस्तद्विवेकाग्रहनिबन्धनो भ्रमः" इति। इदन्तु अख्यातिवादिनां प्राभाकराणां मतम्। अस्यार्थः—यस्मिन् शुक्त्यादौ यस्य रजतादेरध्यासस्तयोस्तज्ज्ञानयोश्च यो विवेको भेदस्तदग्रहनिबन्धनस्तज्ज्ञानाभावप्रयुक्तो भ्रमस्तद्व्यवहारः इति। प्रयोगाश्च तेषाम्। विमताः प्रत्ययाः यथार्थाः प्रत्ययत्वात् सम्प्रतिपन्नवत्। संसर्गज्ञानपूर्वकत्वञ्च भ्रमस्थले प्रवृत्त्यादेर्न स्वीकुर्वन्ति, किन्तु भेदाग्रहपूर्वकत्वमेव। अन्यथाख्यातिवादिनस्तु "यत्र यदध्यासस्तस्यैव विपरीतधर्मत्वकल्पनामाचक्षते।" अयमर्थः—यत्र शुक्तिकादौ यस्य रजतादेरध्यासस्तस्यैव शुक्तिकादेर्विपरीतधर्मत्वकल्पनां रजतत्वधर्मकल्पनामाचक्षते इति। अयं भावः—पुरोवर्तिनि रजतमिदमिति सामानाधिकरण्येन व्यवहारः, तथा प्रवृत्तिरपि अस्तीति तावदसन्दिग्धम्, तथा चैतद्द्वयं संसर्गग्रहं विना भेदाग्रहमात्रान्न भवितुमर्हति, सर्वोऽपि हि चेतनस्य व्यवहारो ज्ञानपूर्वक एव दृष्टो न त्वज्ञानपूर्वक इति। चेतनव्यवहारत्वादेव भ्रमस्थलीयचेतनव्यवहारोऽपि संसर्गज्ञानपूर्वक एव युक्तो न त्वख्यातिपूर्वकः।

इत्थं ख्यातिचतुष्टयलक्षणानि प्रदर्श्य भाष्यकृताऽनिर्वचनीयख्यातिरेवाग्रे समर्थिता, "सर्वथापि तु अन्यस्यान्यधर्मकल्पनां न व्यभिचरतीति।" व्याख्यातञ्च श्रीवाचस्पतिमिश्रैः—"अन्यस्यान्यधर्मकल्पनाऽनृतता सा चानिर्वचनीयतेत्यधस्तादुपपादितम्। तेन सर्वेषामेव परीक्षकाणां मतेऽन्यस्यान्यधर्मकल्पनाऽनिर्वचनीयताऽवश्यंभाविनीत्यनिर्वचनीयतासर्वतन्त्राविरुद्धार्थः इत्यर्थः" इति।

इयञ्च भ्रमविषयाणामनिर्वचनीयता न केवलं युक्त्यैव सिद्ध्यति, किन्तु लोकानुभवादपि। तथा हि—बाधोत्तरमनुभवः, शुक्तिका हि रजतवद् अवभासते, न पुनारजतमिदमिति। एकश्चन्द्रः स द्वितीयवद्भाति न पुनः सद्वितीयोऽयमिति। तथा च भ्रमस्थले सर्वत्रारोप्यस्यानिर्वचनीयस्योत्पत्तिरेव युक्ता, तथा चारोप्याकारेण तज्ज्ञानाभासाकारेण च दोषसंस्कारादिसहकृताया अविद्याया युगपत् परिणामः स्वीकृतोऽद्वैतवादिभिः। शुक्तिरजतादेर्मिथ्यात्वेन व्यवहारोऽपि अनिर्वचनीयत्वाभिप्रायेणैव। तदुक्तं भामतीकृता—'मिथ्याशब्दोऽयमनिर्वचनीयतावचनः' इति। किन्तु यत्र विषयस्यारोप्यस्य सन्निधानं तत्र मिथ्यात्ववादिभिरपि अन्यथाख्यातिरेव लाघवात् स्वीक्रियते। यथा 'लोहितः स्फटिकः' इत्यत्र जपाकुसुमलौहित्यस्यैव

सन्निहितस्य स्फटिके भानम्, न तु अनिर्वचनीयलौहित्योत्पत्तिर्मानाभावात्। एवमेव सन् घट इत्यादावपि अधिष्ठानचैतन्यसत्ताया एव सन्निहिताया घटे भानम्, न तु तत्र प्रातिभासिकसत्तान्तरोत्पत्तिरिति।

अद्वैतिनोऽनिर्वचनीयख्यातिञ्च श्रुत्युक्तस्य ब्रह्मणि द्वैताभावस्योपपादनार्थमेव समर्थयन्ते। जगतोऽनिर्वचनीयत्वञ्चानुमानेभ्योऽपि व्यवस्थापयन्ति—विमतं मिथ्या, दृश्यत्वात्, जडत्वात्, परिच्छिन्नत्वाच्च, शुक्तिरूप्यवदिति। अनिर्वचनीयख्यातिसमर्थनार्थमेव चान्यथाख्यातिवादिभिः शुक्तिरूप्यादिप्रत्यक्षार्थमभ्युपगतां ज्ञानलक्षणाप्रत्यासत्तिं दूषयन्ति। साक्षात् सम्बन्धस्यैव प्रत्यक्षनियामकत्वं न तु सामान्यलक्षणाया ज्ञानलक्षणाया वा परम्परासम्बन्धरूपायाः, अनुमानाद्युच्छेदापत्तेरिति वदन्ति। 'सुरभि चन्दनखण्डम्' इत्यादिस्थले च चैतन्यरूपस्य ज्ञानस्य वृत्तिद्वयप्रतिबिम्बितस्यैक्येऽपि सन्निहितासन्निहितविषयभेदेन सौरभांशे परोक्षा चन्दनखण्डांशे चापरोक्षा वृत्तिरित्येवं वृत्तिद्वयं स्वीकुर्वन्ति। सर्वस्यानिर्वचनीयत्वस्वीकारादेव च स्वप्रक्रियामपि आत्मज्ञानसम्पत्त्यै कल्पितां नानाविधां न सतीं मन्यन्ते। तदुक्तं वेदान्तवार्त्तिककृद्भिः—

> यया यया भवेत्पुंसां व्युत्पत्तिः प्रत्यगात्मनि।
> सा सेह प्रक्रिया साध्वी विपरीता ततोऽन्यथा॥

खण्डनखण्डखाद्येऽपि—

> अभीष्टसिद्धावपि खण्डनानामखण्डि राज्ञामिव नैवमाज्ञा।
> तत्किं न चैतानि यथाभिलाषं सैद्धान्तिकेऽप्यध्वनि योजयध्वम्॥
>
> बाधे दृढेऽन्यसाम्यात् किं दृढेऽन्यदपि बाध्यताम्।
> क्व ममत्वं मुमुक्षूणामनिर्वचनवादिनाम्॥
> आहेदं मिथिलानाथो मुमुक्षुर्निर्ममः पुरा।
> मिथिलायां प्रदीप्तायां न मे किञ्चन दह्यते॥ इति।

अनिर्वचनीयतावादश्च समादृतो बौद्धनिराकरणे बद्धपरिकरैः श्रीमदुदयनाचार्यैरपि आत्मतत्त्वविवेके—

> न ग्राह्यभेदमवधूय धियोऽस्ति वृत्ति-
> स्तद्बाधने बलिनि वेदनये जयश्रीः।
> नो चेदनिन्द्यमिदमीदृशमेव विश्वं,
> तथ्यं तथागतमतस्य तु कोऽवकाशः॥

इति वेदनयस्य बलवत्त्वं वदद्भिः। अनिर्वचनीयतावाद एव च 'एकमेवाद्वितीयं ब्रह्म नेह नानास्ति किंचन' इत्यादि श्रुतयोऽपि अनुगृहीता भविष्यन्ति। उपक्रमोपसंहारादिभिः षड्भिस्तात्पर्यलिङ्गैरपि अद्वैत एव तात्पर्यमुपपादितं श्रुतीनां शारीरकभाष्यादिषु। उपपद्यते चाद्वैतविधावेव श्रुतीनां तात्पर्यम्। अद्वैतस्य प्रमाणान्तरादप्राप्तत्वात्। न तु तत्र तत्र सृष्ट्यादिप्रतिपादनेऽपि तासां द्वैते तात्पर्यम्, द्वैतस्य पांसुलपादेन हालिकेनापि प्रत्यक्षतो निर्धारितत्वात्। श्रुतिषु सृष्ट्यादिप्रतिपादनन्तु अद्वैतविधानार्थमेव 'अध्यारोपापवादाभ्यां निष्प्रपञ्चं प्रपञ्च्यते' इति न्यायात्। अद्वैतरक्षार्थं सर्वस्य मिथ्यात्वस्वीकारे वेदस्यापि तत्त्वापत्तौ कथं तद्बोधितस्याद्वैतस्य वास्तवत्वमिति तु न शङ्क्यम्, स्वप्नदर्शनस्य मिथ्यात्वेऽपि सत्यारिष्टादिबोधकत्वस्य दृष्टत्वेनात्रापि तथा सम्भवात्। तदुक्तं स्वप्नाध्यायमुदाहरद्भिर्वेदान्तसूत्रभाष्यकृद्भिः, "यदा पुरुषं कृष्णं कृष्णदन्तं पश्यति स एवैनं हन्तीति"।

यदा काम्येषु कर्मसु स्त्रियं स्वप्नेसु पश्यति।
समृद्धिं तत्र जानीयात्तस्मिन् स्वप्ननिदर्शने॥ इति च।

वेदस्य मिथ्यात्वे तत्प्रतिपादितैः श्रवणादिभिरुपायैरपि मिथ्याभूतैः कथं संसारहेतुभूताया मायाया निवृत्तिरित्यपि न वाच्यम्, स्वाप्नव्याधीनां स्वाप्नौषधैः प्रतीकारस्येव तैस्तस्या अपि संभवात्। तथा चानिर्वचनीयख्यातिस्वीकार एव श्रुतिर्भिर्विधित्सितमद्वैतं द्वैतसाक्षि स्वप्रकाशं ब्रह्म सिद्ध्यति, नान्यथेत्यनिर्वचनीयतैव प्रपञ्चस्य हृद्या निरवद्या चेति शम्।

# साङ्ख्यमतविमर्शः

अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपाः।
अजा ये तां जुषमाणां भजन्ते जहत्येनां मुक्तभोगां नुमस्तान् ॥
कपिलाय महामुनये मुनये शिष्याय तस्य चासुरये।
पञ्चशिखाय तथेश्वरकृष्णायैते नमस्यामः ॥

अथातः साङ्ख्यमतविमर्शः। यतः साङ्ख्यमेव दर्शनं निःश्रेयस-नाम्ना प्रथितस्य परमपुरुषार्थस्य द्वारमित्यामनन्ति। तथाहि—

तत्कारणं साङ्ख्ययोगाधिगम्यं ज्ञात्वा देवं मुच्यते सर्वपाशैः।
(श्वेताश्वतर ६।१३)

"यदि योन्याः प्रमुच्येहं तत्साङ्ख्यं योगमभ्यसे।
अशुभक्षयकर्तारं फलमुक्तिप्रदायकम् ॥"
(गर्भोपनिषद्–४)

इत्याद्या श्रुतयः।

"साङ्ख्यं विशालं परमं पुराणं महार्णवं विमलमुदारकान्तम्।
कृत्स्नञ्च[1] साङ्ख्यं नृपते महात्मा नारायणो धारयतेऽप्रमेयम् ॥".
(महाभा० शान्ति० ३१६।११४)

"नास्ति साङ्ख्यसमं ज्ञानं नास्ति योगसमं बलम्।
तावुभावेकचर्यौ तावुभावनिधनौ स्मृतौ ॥"
(महाभा० शान्ति० ३१६।२)

इत्याद्याः स्मृतयश्च साङ्ख्याधिगमेन मोक्षं दर्शयन्ति।
"ऋषिं प्रसूतं कपिलं यस्तमग्रे ज्ञानैर्बिभर्ति जायमानञ्च पश्येत् ॥"
(श्वेताश्वतर० ५।२)

---

१. 'कृत्स्नं साङ्ख्यं यो धारयते स नारायणः परं ब्रह्मैव' इति नीलकण्ठी।

इयं च श्रुतिरीश्वरप्रदत्तज्ञानोक्त्या कापिलं दर्शनं प्रशंसति। तत्र साङ्ख्यमतसमीक्षातः प्रागावश्यकत्वेन साङ्ख्यपदव्युत्पत्तिरेव विचार्यते। तथा हि—

संङ्ख्यां प्रकुर्वते चैव प्रकृतिञ्च प्रचक्षते।
तत्त्वानि च चतुर्विंशत्तेन साङ्ख्याः प्रकीर्तिताः॥

इति महाभारतवाक्यत्वेन विज्ञानभिक्षुप्रभृतिसमादृतवाक्यानुसारेण प्रकृतिपुरुषसम्यग्विवेकज्ञानरूपसङ्ख्यायाः प्रकृत्यादिपञ्चविंशतितत्त्व-सङ्ख्यायाश्च प्रतिपादनाच्छास्त्रं साङ्ख्यम्। तत्राद्ये सम्यक् ख्यानं सङ्ख्या, सम्पदादित्वाद् भावे क्विप्। सम्यग् ज्ञानं तदर्थः; तत्र मानम्—

साङ्ख्या राजन् महाप्राज्ञास्त्यक्त्वा स्नेहं प्रजाकृतम्।
ज्ञानयोगेन साङ्ख्येन व्यापिना महता नृप॥
(महाभा० शान्ति० ३०१।६२)

अत्र ते संशयो मा भूज्ज्ञानं साङ्ख्यं [१]परं मतम्।
अक्षरं ध्रुवमेवोक्तं पूर्णं ब्रह्म सनातनम्॥
(महाभा० शान्ति० ३०१।१०१)

सङ्ख्यैव साङ्ख्यम्। प्रज्ञादित्वात् स्वार्थेऽण्, दैवतवत्। तच्च सम्य-ग्दर्शनं जीवेश्वरयोरभेददर्शनमित्यद्वैतवादिनः। प्रकृतिपुरुषयोर्भेददर्शनमिति साङ्ख्याः। अत एव 'आत्मा वा अरे द्रष्टव्यः' इति श्रुतिवाक्यं प्रकृतितो विवेक्तव्य इत्यर्थकं व्याख्यातं साङ्ख्यकारिकाव्याख्यावसरे श्रीवाच-स्पतिमिश्रैः। एवमन्येषामपि सम्यग्दर्शनानि भेददर्शनान्येव यथागमं यथामति।

सम्यग्दर्शनादेव कैवल्यमित्यत्र तु न कस्यापि विमतिः। अत एव पुरुषस्यास्मितयाऽविविक्तस्य कैवल्यदर्शनादेव कैवल्यमित्यभिप्रेत्य कैवल्य-पदेन मोक्षो व्यवह्रियते।

केचित्तु तत्त्वसंख्यामधिकृत्येदं दर्शनं प्रवृत्तमिति साङ्ख्यनाम्ना व्यपदिश्यते। साङ्ख्यदर्शनात् प्राक् तत्त्वानां सङ्ख्यानियमो नासीदिति वदन्ति।

भवति चात्र भागवतं प्रमाणम्—

---

१. 'परं योगापेक्षया श्रेष्ठम्' इति नीलकण्ठी।

"[1]तत्त्वसंख्यानविज्ञप्त्यै जातो विद्वानजः स्वराट् ।"
(भाग० ३।२४।१०)

"कपिलस्तत्त्वसङ्ख्याता[2] भगवानात्ममायया ।
जातस्स्वयमजः साक्षादात्मप्रज्ञप्तये नृणाम् ॥"
(भाग० ३।२५।१)

तत्त्वानां सङ्ख्यामधिकृत्य कृतं शास्त्रमित्यर्थेऽण् । अत एवाद्यव्युत्पत्त्यनुसारेण साङ्ख्यदर्शनमिति सम्यग्दर्शनप्राधान्याद्व्यपदेशः । स्मर्यते हि—

"प्रबोधनकरं ज्ञानं साङ्ख्यानामवनीपते ।"
(महाभा० शान्ति० ६०७।४५)

योगप्राधान्याच्च योगदर्शनव्यपदेश उभयोः शास्त्रयोस्तत्त्वसङ्ख्यासाम्येऽपि संगच्छते । योगसाङ्ख्ययोस्तत्त्वसङ्ख्यासाम्ये प्रमाणन्तु—

"पञ्चविंशतितत्त्वानि तुल्यान्युभयतः समम् ।
योगे साङ्ख्येऽपि च तथा विशेषं तत्र मे शृणु ॥
विषयात्प्रतिसंहारः[3] साङ्ख्यानां विद्धि लक्षणम् ।
योगैश्वर्यमतिक्रान्तो[4] यो निष्क्रामति मुच्यते ॥"

द्वितीयव्युत्पत्त्यनुसारेण तु सेश्वरसाङ्ख्यं, निरीश्वरसाङ्ख्यमिति भेदेन व्यपदेशः । तत्र योगस्य फलं कर्मबन्धनिवृत्तिः ।

दह्यन्ते ध्मायमानानां धातूनां हि यथा मलाः ।
तथेन्द्रियाणां दह्यन्ते दोषाः प्राणस्य निग्रहात् ।
प्राणायामैर्दहेद्दोषान् धारणाभिश्च किल्विषम् ॥
(मनु० ६।७१–७२)

---

१. तत्त्वानां सङ्ख्यानं यस्मिंस्तस्य साङ्ख्यस्य विज्ञप्त्यै विशेषेण ज्ञापनाय इति श्रीधरः ।

२. 'तत्त्वानां सङ्ख्याता गणकः साङ्ख्यशास्त्रप्रवर्तक इत्यर्थः' इति श्रीधरः ।

३. 'विषयाद् घटादिविषयमारभ्य प्रतिसंहार उत्पत्तिक्रमवैपरीत्येन प्रविलापनं ज्ञानेन' इति नीलकण्ठी ।

४. योगैश्वर्यमणिमादि परमार्थभूतं सदतिक्रान्तस्तदुल्लङ्घ्यगतः परवैराग्यबलेन न तु तत्त्वज्ञानबलेन' इति नीलकण्ठी ।

तदुक्तं भगवताऽपि—

एषा तेऽभिहिता साङ्ख्ये बुद्धिर्योगे त्विमां शृणु।
बुद्ध्या युक्तो यया पार्थ कर्मबन्धं प्रहास्यसि ॥'' इति।

साङ्ख्यस्य तु फलं स्वरूपावाप्तिरूपो मोक्षः। तथा च योगः साधनं साङ्ख्यस्य सम्यग्दर्शनरूपस्येति साङ्ख्यस्यैव प्राधान्यं योगमपेक्ष्य। तथा हि—

योगकृत्यन्तु योगानां ध्यानमेव परं बलम् ॥''
( महाभा० शान्ति० ३०६।७ )

ध्यानफलञ्चानित्यम्। यथोक्तम्—

भावनाजं फलं यच्च यच्च स्यात् कर्मणः फलम्।
न तत् स्थास्न्विति विज्ञेयं पण्यस्त्रीसङ्गमं (मो) यथा ॥''
( तत्रैव नीलकण्ठी )

साङ्ख्यस्य तु सम्यग्दर्शनरूपस्य फलं मोक्षाख्यं नित्यम्। तदुक्तम्—

साङ्ख्यं ज्ञानं प्रवक्ष्यामि परिसङ्ख्यानदर्शनम्।''
( महाभा० शान्ति० ३०६।२६ )

"परिसङ्ख्यानं परिवर्जनम्, रज्जूरगवदुत्तरोत्तरस्य कार्यस्य पूर्वस्मिन् पूर्वस्मिन् कारणे प्रविलापनम्। तेन दर्शनं साक्षात्कारो यस्मिस्तत्तथा इति नीलकण्ठी। अत्र रज्जूरगवदिति दृष्टान्तः कार्यस्य कारणात्मना दर्शनरूपप्रविलापनमात्रे, न तु रज्जूरगवत्कार्यासत्त्वे।

"अस्मिश्च शास्त्रे योगानां पुनर्वेदे पुरस्सरः।''
( महाभा० शान्ति० ६०७।४६ )

अत्र योगानां साङ्ख्ये वेदे च पुरःसरत्वोपवर्णनन्तु साधनसमादरार्थम्। तयोः साध्यसाधनभावे भगवद्वाक्यमपि—

साङ्ख्ययोगौ पृथग्बालाः प्रवदन्ति न पण्डिताः।
एकमप्यास्थितः सम्यगुभयोर्विन्दते फलम् ॥ इति ॥

यद्यपि द्वयोरेव साध्यसाधनयोः समाश्रयणं युक्तं तथाप्यविवेकादेकमपि साङ्ख्यं योगं वा सम्यगास्थितः परमपुरुषार्थहेतुतया समाश्रयन् द्वयोः परस्परापेक्षत्वेन तदन्याक्षेपस्यावश्यम्भावित्वेन द्वयोः फलं विन्दत इति तदर्थः। साङ्ख्ययोगयोः साध्यसाधनभावः 'इमं विवस्वते योगम्' इत्यत्रापि

गीतायां सूचितः। तथा च तद्व्याख्या नीलकण्ठी—'इमं सन्ध्योपासनादि-निर्विकल्पकसमाध्यनुष्ठानान्तं कर्मयोगं ज्ञाननिष्ठोपसर्जनम्' इति।

उपायः कर्मयोगोऽत्र प्राधान्येनोपसंहृतः।
उपेया ज्ञाननिष्ठा तु तद्गुणत्वेन कीर्तिता॥

अत्र वर्णनीयत्वेन कर्मयोगस्य प्राधान्येऽप्युपेयत्वेन वास्तवं साङ्ख्यस्य प्राधान्यमव्याहतमेव। यद्यपि—

"लोकेऽस्मिन् द्विविधा निष्ठा पुरा प्रोक्ता मयानघ।
ज्ञानयोगेन साङ्ख्यानां कर्मयोगेन योगिनाम्॥"

इत्यत्र समप्राधान्यं साङ्ख्ययोगयोः प्रतीयते तथापि 'रुचीनां वैचित्र्या-दृजुकुटिलनानापथजुषाम्' इति न्यायेन समाधेयम्।

"यत्साङ्ख्यैः प्राप्यते स्थानं तद्योगैरपि गम्यते।
एकं साङ्ख्यञ्च योगञ्च यः पश्यति स पश्यति॥"

इति भगवद्वाक्यन्तु साक्षात्परम्परया वा फलैक्याभिप्रायेण।

"यदेव योगाः पश्यन्ति तत्साङ्ख्यैरपि दृश्यते।
एकं साङ्ख्यञ्च योगञ्च यः पश्यति स तत्त्ववित्॥"

(महाभा० शान्ति० ३१६।३)

एतदपि तयोः फलैक्याभिप्रायेणैव।

यदेव शास्त्रं साङ्ख्योक्तं योगदर्शनमेव तत्॥

(महाभा० शान्ति० ६०७।४४)

इत्यपि तथैव। तथा चैतादृशस्थलेषु प्रयुज्यमानं साङ्ख्यपदं दर्शनान्तर-रीत्या यौगिकम्, सांख्यदर्शने तु योगरूढम्।

तत्र साङ्ख्यमतविमर्शात् पूर्वं भारतीयदर्शनानां विकाशविभागयोः क्रमस्य प्रदर्शनमावश्यकं येष्वन्यतमं साङ्ख्यदर्शनम्। तस्मिन् क्रमे प्रदर्शिते हि साङ्ख्यमतसमीक्षा साङ्ख्ययोगाद्वैतवेदान्तानामतिनैकट्यञ्च सम्यक् स्फुटं भविष्यति। तत्र पूर्वं तावज्जगतः सोपादानत्वनिरुपादानत्वाभ्यां भारतीयदर्शनानां द्विधा विभागः। तत्र जगतो निरुपादानत्वं वदन्ति नैरात्म्यवादिनो माध्यमिकाः। ते हि सत्त्वासत्त्वाभ्यां विचारासहत्वा-च्छून्यं सर्वं वदन्तो विश्वं निरधिष्ठानकमेवोररीकुर्वन्ति। अन्ये तु सर्वे वैदिका अवैदिकाश्च यथादर्शनं जगतः सोपादानत्वमेव स्वीकुर्वते, सत्त्वेऽसत्त्वे वा निरधिष्ठानस्य भानासम्भवात्। जगतः सोपादानकत्वेऽप्यान्तरोपादानकत्व-

बाह्योपादानकत्वाभ्यां द्विधा विभागः। तत्रान्तरोपादानकत्ववादिनोऽवैदिकेषु विज्ञानवादिनः। ते ह्यालयविज्ञानप्रवृत्तिविज्ञानरूपाभ्यां भिन्नस्य विज्ञानस्याकारमेव विषयं वदन्तो विषयाणां विज्ञानोपादानकत्वं समाद्रियन्ते। वैदिकेषु चाद्वैतदर्शिनः साङ्ख्या योगिनश्च। अद्वैतिनस्तु चिदात्मनो विवर्त्तो मायायास्तु परिणामो जगदिति वदन्ति। उभयथाप्यान्तरोपादानकत्वं न विरुद्ध्यते; मायायाश्चिदाश्रितत्वेनान्तरत्वात्।

तदुक्तं संक्षेपशारीरके—

"आश्रयत्वविषयत्वभागिनी निर्विभागचितिरेव केवला।
पूर्वसिद्धतमसो हि पश्चिमो नाश्रयो भवति नापि गोचरः॥" इति।

साङ्ख्या योगाश्च प्रकृतिविकारस्य महत्तत्त्वस्याहङ्कारादिक्रमेण परिणामभूतं सर्वं जगदिति प्राहुः। तच्च महत्तत्त्वमन्तःकरणं बुद्धिरिति च शास्त्रेष्वाख्यायमानमान्तरमेव। स्पष्टीकृतञ्चैतत् साङ्ख्यप्रतिक्षेपावसर आत्मनिरूपणप्रकणे न्यायमुक्तावल्याम्। अन्यत्रापि च 'मनो मतिर्महान् ब्रह्मा धीरीश्वर' इत्यादिरूपेण सर्वविदितचरमाख्यायते।

हिरण्यगर्भो भगवानेष बुद्धिरिति स्मृतः।
महानिति च योगेषु विरिञ्चिरिति चाप्यजः॥
साङ्ख्ये च पठ्यते शास्त्रे नामभिर्बहुधात्मकः।
विचित्ररूपो विश्वात्मा एकाक्षर इति स्मृतः॥
(महाभा० शान्ति० ३०२।१८।१९)

तथा च साङ्ख्यसूत्रमपि—

'महदाख्यमाद्यं कार्यं तन्मनः' इति।

मनसस्तु समुद्भूता महाभूता नराधिप।
चतुर्थं सर्गमित्येतन्मानसं विद्धि मे मतम्॥
(महाभा० शान्ति० ३११।१९)

सम्यग् उद्भूताः क्रमशः परिणामभूता, न तु विवर्तरूपाः कल्पिताः इत्यर्थः। इदं तावदत्रावधेयम्—साङ्ख्यं द्विविधं योगिवत्प्रकृतिदर्शि, अद्वैतिवत्प्रकृतिदर्शि च।

तथा तयोः प्रवर्त्तकौ कपिलावपि द्वौ। तत्राद्यं निरीश्वरसाङ्ख्यं द्वितीयन्तु सेश्वरसाङ्ख्यम्। कपिलद्वये प्रमाणन्तु श्रीशङ्कराचार्यभगवत्पादवाक्यम्—

"या तु श्रुतिः कपिलस्य ज्ञानातिशयं प्रदर्शयन्ती प्रदर्शिता न तया श्रुतिविरुद्धमपि कापिलं मतं श्रद्धातुं शक्यम्। कपिलमिति श्रुतिसामान्य-

मात्रत्वात्, अन्यस्य च कपिलस्य सगरपुत्राणां प्रतप्तुर्वासुदेवनाम्नः स्मरणात् ।" ( ब्र० शां० २।१।१०।१ )

तथा चाधुना सूत्रद्वयं समुपलभ्यते । एकं तत्त्वसमाससूत्रम्, यस्य कापिलसूत्रवृत्त्यादयो बह्व्यो व्याख्याः समुपलभ्यन्ते ।

अस्य कापिलत्वञ्च—

समाससूत्रमालम्ब्य व्याख्यां पञ्चशिखस्य च ।
भावागणेशः कुरुते तत्त्वयाथार्थ्यदीपनम् ॥

इति । महर्षिप्रवरकपिलप्रशिष्यपञ्चशिखानुसृतत्वादपि प्रतीयते । तत्त्वसमाससूत्रस्य सर्वोपकारिण्यां टीकायामपि 'तत्त्वसमाससूत्रं नारायणावतारकपिलप्रणीतम्, षडध्यायी तु वैश्वानरावतारकपिलप्रणीता' इति भेदो दर्शितः । यत्तु "अग्निः स कपिलो नाम साङ्ख्यशास्त्रप्रवर्त्तक इति वैश्वानरावतारकपिलदर्शनपरे स्मृतिग्रन्थेऽग्निशब्दोऽग्न्याख्यशक्त्यावेशादेव विष्णौ प्रयुक्त इत्येक एव विष्ण्ववतारः कपिलः" इति विज्ञानभिक्षुणोक्तं तन्न, सूत्रद्वयस्य लोकप्रवादस्य च कपिलद्वयसाधकत्वात् । मुख्यार्थबाधाभावेऽग्निशब्दस्याग्निशक्त्यावेशवति लक्षणाया अनौचित्याच्च । कालशब्दस्य भगवत्परत्वं तत्र तत्र कण्ठोक्तमिति कालशब्दस्य कालशक्त्यावेशवति लक्षणा युज्यते ।

षडध्यायीसूत्राणि तु भोजराजेन वार्त्तिकरूपेण व्याख्यातानीति प्रवादः । भवतु तत्रान्यस्मिन् वा सूत्रे भाष्ये वा तद् वार्त्तिकम्, अत्र नास्माकमभिनिवेशः । सेश्वरसाङ्ख्यसत्त्वादेव भागवते मात्रे साङ्ख्योपदेशो भगवतः कपिलस्य वर्तमानसाङ्ख्याद् विलक्षणः सङ्गच्छते । सङ्गच्छते च सर्वेषु पुराणेषु भारतादीतिहासेषु मानवादिधर्मशास्त्रेषु चरकादौ चायुर्वेदे सेश्वरसाङ्ख्यसमादरः । श्रीशङ्कराचार्यपादैरपि निरीश्वरत्वेन श्रुतिविरुद्धत्वात् षडध्यायी साङ्ख्यमेव प्रत्याख्यातम् । 'अन्यस्य च कपिलस्य स्मरणात्' इत्येतावन्मात्रं ब्रुवद्भिस्तैस्सेश्वरसाङ्ख्यस्याविरुद्धत्वेन तत्प्रत्याख्याने मौनमालम्बितम् । तेन 'अप्रतिषिद्धञ्चानुमतं भवति' इति न्यायेन तेषामपि तत्र पक्षपातः प्रतीयते । वासुदेवः कपिलो न साङ्ख्यशास्त्रप्रवर्तक इति तु न वाच्यम्, 'कपिलस्तत्त्वसंङ्ख्याता' इति भागवतविरुद्धत्वात् । वस्तुतस्तु योगे सेश्वरसाङ्ख्यशब्दप्रयोगो गौणः । योगाभिमतेश्वरस्यासङ्गत्वेनेशनकर्तृत्वासम्भवात् । आभासद्वारा तत्त्वे त्वाभासस्यैव तत्त्वं युक्तम् । शुद्धचैतन्यं तु षड्विंशं तत्त्वम् ।

प्रतिपादितमेतद् भारते शान्तिपर्वणि ३१८ अध्याये।

तत्राद्ये निरीश्वरसाङ्ख्ये योगिवत्प्रकृतिदर्शिनि प्रकृतिर्जडा परमार्थभूता सत्त्वरजस्तमोगुणात्मिका पुरुषस्य भोगापवर्गौ सम्पादयितुं प्रवर्तते चेतनानधिष्ठितैवेति। दृष्टा चाचेतनानामपि परार्था प्रवृत्तिः। यथा पयसो वत्सविवृद्धयर्था प्रवृत्तिः। यथा वा नद्यादिजलादीनामचेतनानां चेतनानधिष्ठितानां सर्वभूतोपकाराय प्रवृत्तिः। एतत्साङ्ख्यखण्डनमेव 'ईक्षतेर्नाशब्दम्' इत्याद्यधिकरणे श्रीशङ्कराचार्यैः कृतम्। अचेतनस्य चेतनानधिष्ठितस्य प्रवृत्त्यसम्भवं मत्त्वैवाद्वैतमतानुसारि सेश्वरसाङ्ख्यं प्रवृत्तम्। तथा च गौडपादाचार्यैः साङ्ख्यकारिकाभाष्ये षष्टितन्त्रस्यैकं वाक्यमुद्धृतम् 'पुरुषाधिष्ठितं प्रधानं प्रवर्तते' इति। पुरुषेण भगवताधिष्ठितं स्वाभासद्वारा प्रवर्तितं प्रधानं प्रवर्त्तत इति तदर्थः। अत एवात्र प्रधानपदं प्रयुक्तम्। निर्वक्ष्यते चेदं प्रधीयतेऽस्मिन् चितिच्छायेति व्युत्पत्त्याग्रे। तथा च प्राक्प्रतिपादितरूपा प्रकृतिरेवेश्वरः। एवं चाद्वैतिनामीश्वरस्साङ्ख्यानां च प्रकृतिरेकैव केवलं भाषाभेदः। अद्वैतिनो हि चिदाभाससमन्वितां मायामेव त्रिगुणात्मिकामीश्वरपदेन व्यवहरन्ति। "जीवेशावाभासेन करोति माया चाविद्या च स्वयमेव भवति" इत्यादिश्रुतेः। साङ्ख्यास्तु साभासा प्रकृतिरेवेश्वर इति मन्यन्ते। स्मर्यते च—

"अव्यक्तं क्षेत्रमित्युक्तं तथा सत्त्वं तथेश्वरः।
अनीश्वरमतत्त्वं च तत्त्वं तत्पञ्चविंशकम्॥"
(महाभा० शान्ति० ३१६।४१)

"सत्त्वं बुद्धिः। अव्यक्तं योगमते जडं सत्यं च साङ्ख्यमते चित्प्रतिबिम्बगर्भमीश्वराख्यं शुद्धब्रह्मज्ञानबाध्यं च" इति भारतव्याख्या नीलकण्ठी। शुद्धब्रह्मज्ञानबाध्यत्वं चाभासस्य तदीशत्वव्यपदेशस्य वा विशेषणधर्मस्य विशिष्टे आरोपेण व्यपदेशात्। प्रकृतेस्तु साङ्ख्यमते सत्यत्वमेव। तथा चाद्वैतिनामिव साङ्ख्यानामपि प्रकृतिरीश्वरः, महत्तत्त्वं हिरण्यगर्भः, महाभूतानि विराडिति संज्ञाः, प्रपञ्चितं चेदं साङ्ख्यतत्त्वालोके। इदमप्युक्तं तत्रैव 'विराजः पुरुषस्यान्तःकरणमेव जगदात्मकमिति सिद्धम्' इति, 'पुरुषस्येच्छासम्भूतमिदं जगदित्युपगमेऽपि जगतोऽभिमानात्मकत्वं स्यात्। इच्छाया अन्तःकरणवृत्तिता प्राग् व्याख्याता' इति च। तथा चोक्तमनुगीतायाम्—

"महानात्मा मतिर्विष्णुः शम्भुर्जिष्णुश्च वीर्यवान्।
बुद्धिः प्रज्ञोपलब्धिश्च तथा ब्रह्म धृतिः स्मृतिः॥

पर्य्यायवाचकैरेतैर्महानात्मा निगद्यते ।''

सर्वत्र च सत्त्वगुणे चिदाभाससम्भवः। अत एव 'प्रधीयतेऽस्मिन् चितिच्छायेति व्युत्पत्त्या प्रकृतेः प्रधानपदेन व्यपदेशः'' इति नीलकण्ठी ।

अनेन प्रतिबोधेन प्रधानं प्रवदन्ति तत् ।
साङ्ख्या योगाश्च तत्त्वज्ञा यथाश्रुतिनिदर्शनात् ॥
( महाभा० शान्ति० ३१८।७१ )

अतएव भागवते तृतीयस्कन्धपञ्चमाध्यायेऽप्युक्तम्—

कालवृत्त्या तु मायायां गुणमय्यामधोक्षजः ।
पुरुषेणात्मभूतेन वीर्यमाधत्त वीर्यवान् ॥
ततोऽभवन्महत्तत्त्वम्..........विज्ञानात्मा ॥ इति ।

व्याख्यातं च श्रीधरमिश्रैः 'आत्मांशभूतेन पुरुषेण प्रकृत्यधिष्ठातृरूपेण वीर्यं चिदाभासमाधत्त' इति ।

तदित्थं यदा गुणसाम्यं तदाऽप्रकाशाभ्यां रजस्तमोभ्यां प्रकाशात्मकस्य सत्त्वस्य कलुषीकृतत्वान्न चिदाभाससम्भवः। यदा तु कालशक्त्या गुणक्षोभस्तदा सत्त्वोत्कर्षे प्रकृतौ चिदाभाससम्भवस्ततो महत्तत्त्वजन्म । चिदाभासादेव महदादित्रयोविंशतिगणस्यात्रैव भागवते देवत्वमुक्तम् ।

किन्त्वद्वैतिनां माया सदसत्त्वाभ्यामनिर्वाच्या, सांख्यानान्तु प्रकृतितत्कार्याणि सत्त्वेन निर्वाच्यानीति भेदः। न च 'निःसत्तासत्तं निःसदसद् निरसद् अव्यक्तं प्रधानम्' इति समानतन्त्रे योगभाष्य उक्तत्वान्न प्रधानं सदिति वाच्यम्; निरसदित्यनेन परिशेषतः सत्त्वस्य लाभात् । पारमार्थिकं सत्त्वं प्रधाने नास्ति, महदादिरूपैः प्रतिक्षणं परिणामात् प्रलयेष्वसत्त्वाच्च । पारमार्थिकमसत्त्वमपि नास्ति, नित्यत्वादर्थक्रियाकारित्वाच्च । सत्त्वं पुरुषार्थक्रियाक्षमत्वम् । असत्वं तुच्छता प्रधानस्य पारमार्थिकसदसत्वाभावोपपत्तये तद्विकाराणामपि पारमार्थिक्यौ सदसत्ते न स्त इति प्रतिपादयितुं प्रधानस्य विशेषणं निःसदसदिति । निर्गते सदसती यस्मादिति विग्रहः ।

तुच्छरूपात् कार्याद् व्यावृत्तमतो निरसदित्युच्यते । तथा च साङ्ख्याद्वैतयोर्भेदः सुदुर्लक्षः । तदुक्तं पञ्चदश्याम्—

आत्मभेदो जगत् सत्यमीशोऽन्य इति चेत् त्रयम् ।
त्यज्यते तैस्तदा साङ्ख्ययोगवेदान्तसङ्गतिः ॥
[ चित्रदीपे २२८ ]

अत एवाद्वैतिनोऽपि गीतादिगतं साङ्ख्यपदं स्वमते प्रकरणाविरोधेन योगवृत्त्या योजयन्ति। महाभारते शान्तिपर्वणि ३१८ अध्याये शुद्धां चितिमादाय षड्विंशतितत्त्वप्रदर्शनमुखेन साङ्ख्ययोगाद्वैतदर्शनानां निष्ठायामैक्यं प्रदर्शितम्—

"अन्यश्च शाश्वतोऽव्यक्तस्तथान्यः पञ्चविंशकः।
तस्य द्वावनुपश्येतां तमेकमिति साधवः॥ ५६॥
तेनैतन्नाभिनन्दन्ति पञ्चविंशकमच्युतम्।
जन्ममृत्युभयाद् योगाः साङ्ख्याश्च परमैषिणः॥ ५७॥

इति पद्यद्वयसम्बद्धे प्रकरणे।

अन्यश्च राजन्यवरस्तथाऽन्यः पञ्चविंशकः।
तत्स्थानाच्चानुपश्यन्ति एक एवेति साधवः॥ ७८॥

इति पद्यसम्बद्धे प्रकरणे च। तत्स्थानात्। वरे षड्विंशेऽवरस्य पञ्चविंशकस्य स्थितत्वादद्वैतमतानुसारेणाध्यस्तत्वात् साङ्ख्यमतानुसारेणाश्रितत्वादित्यर्थः। प्रागुक्तदर्शनत्रयस्य परस्परोपयोगित्वात् परस्परसम्बद्धत्वात् फलत ऐक्यादेव चाद्वैतनिष्ठावतापि याज्ञवल्क्येन साङ्ख्यशास्त्रं योगशास्त्रञ्च विशेषरूपेण सूर्यादधीतमिति स्मर्यते—

"साङ्ख्यं ज्ञानं त्वया ब्रह्मन्नवाप्तं कृत्स्नमेव च।
तथैव योगशास्त्रञ्च याज्ञवल्क्य विशेषतः॥"

[ महाभा० शान्ति० ३१८।६७ ]

अत्र योगिनोऽसङ्गेश्वराधिष्ठितप्रकृतिकर्तृत्ववादिनो नैयायिकादिमतमनुरुन्धाना भ्रान्ता अनौपनिषदाः, असङ्गस्याधिष्ठातृत्वानुपपत्तेः। अद्वैतमतमनुकुर्वन्तश्चिदाभासवत्प्रकृतिकर्तृत्ववादिनः साङ्ख्यास्तु सम्यग्दर्शिन औपनिषदाः। स्मर्यते च—

"प्रार्थयन्तश्च तं विप्रा वदन्ति गुणबुद्धयः।
सम्यग्युक्तास्तथा योगाः साङ्ख्याश्चामितदर्शनाः॥

साङ्ख्या योगाश्च वदन्ति स्तुवन्ति जगत्कर्तृत्वेनादिगुरुत्वेन चेति शेषः। जगत्कर्तृत्वं साभासप्रकृतिरूपेणादिगुरुत्वञ्च कपिलरूपेण। दुर्गासप्तशतीप्रथमाध्याये ब्रह्मस्तुतावपि श्रीदुर्गायाः साभासप्रकृतिरूपेण जगत्कर्तृत्वं साङ्ख्यमतानुसारेण, साभासमहामायारूपेण तत्त्वञ्चाद्वैतवेदान्तानुसारेण पृथक् पृथक् प्रतिपादितमिति मन्ये। अन्यथैकतत्त्वस्यैव द्विरुपादाने पौनरुक्त्यं स्यात्।

विवादो विरोधो वेत्यस्य युक्तत्वात् । तत्रैव चाद्वयं ब्रह्म गृह्यत इत्यस्पर्श-योगशब्देन ब्रह्मोक्तं भाष्यकृता ।

ब्रह्मणोऽद्वयत्वं जात्यभावे सिद्धयतीत्यजातिसमर्थनाय जातौ वादिनां परस्परविवादं प्रदर्शयति तृतीयकारिकया ( ४।३ ) । कथं वादिनां परस्पर-विवादेनाजातिसिद्धिरिति दर्शयितुं च विद्यते चतुर्थी कारिका ( ४।४ ) । अत्र वृत्तिकारो 'अद्वया' इति पाठमाद्रियते, भाष्यकारस्तु 'द्वया' इति । तत्र वृत्तिकारव्याख्यानम्—भूतं किञ्चिन्न जायते सत्त्वादेव । अभूतमपि किञ्चिन्न जायतेऽसत्त्वादेवेत्येवं रीत्या सत्कार्यवादिभिरसत्कार्यवादिभिश्च सह विव-दन्तस्ते प्रसिद्धा अद्वया विज्ञानाद्वयवादिनो बौद्धा अजातिं ख्यापयन्तीति । भाष्यकृतस्तु—"भूतं किञ्चिन्न जायते, अभूतं किञ्चिन्न जायते" इत्येवं परस्परं प्रतिविरुद्धं वदन्तस्ते प्रागुक्ता द्वयाः सत्कार्यवादिनोऽसत्कार्यवादिन-श्चाजातिमेव ख्यापयन्ति । परस्परपराहतत्वादजातिः सिद्धयतीति ।

किमत्र न्याय्यमिति विमर्शे भाष्यमतमेव युक्तं भाति । वृत्तिकारव्याख्याने हि—"अस्पर्शयोगो वै नाम" इति कारिकाया अस्पर्शयोगसमाधिपरत्वे "भूतस्य जातिमिच्छन्ति" इति कारिकाया उत्थानासंभवः, तादृशसमाधे-र्जात्याऽजात्या वा साकं संबन्धासंभवात् । भाष्यकृद्रीत्याऽद्वयात्मपरत्वे त्वद्वयत्वोपपादनार्थं जातिप्रत्याख्यानमावश्यकमिति संगतिसंभवः । तथा च चतुर्थकारिकायामद्वया इतिच्छेदे सत्कार्यवादिभिरसत्कार्यवादिभिश्च सह विज्ञानाद्वयवादिनां विवादपरतया व्याख्याने—"अविवादोऽविरुद्धश्च" इति प्रागुक्तं व्याहन्येत । न च ममाप्यस्पर्शयोग इत्यत्र विज्ञानाद्वयवाद एव विषय इति तदुपपत्तये जातिप्रत्याख्यानाय कारिकाद्वयोत्पत्तिरिति वाच्यम्; तथा सति—"अविवादोऽविरुद्धश्च" इत्यत्र विज्ञानवादिभिः सहाद्वैतवादिनो-ऽविवादोऽविरोधश्चेति प्रतीयेत । तथा चात्र विवादसामान्याभावं परि-त्यज्य विशेषलक्षणाया अनौचित्यम् । भाष्यकृद्व्याख्याने त्वद्वैतवादिनो न केनापि साकं विवादः, द्वैतिनां द्वयानां परस्परं विवादादेवाजातिसिद्धया तदभिप्रेताद्वैतसिद्धेः । नापि विज्ञानवादिना सह विवादः, तेनाप्यजातिस्वी-कारादिति विवादसामान्याभावः सिद्धः । तथा चायमेवार्थः—

> "ख्याप्यमानामजातिं तैरनुमोदामहे वयम् ।
> विवदामो न तैः सार्धमविवादं निबोधत ॥" [ ४।५ ]

इति कारिकया विवृत इति साधूत्पश्यामः ।

यत्तु ४।८८, ८९ कारिकयोः—"सर्वज्ञता च बुद्धत्वमेव" इत्युक्तम्; तत् किं व्याकरणसमाश्रयणेन ? आहोस्विदद्वैतिनां ब्रह्मसाक्षात्कारे सति सर्वज्ञत्वासंभवेन ? उभयस्मिन्नपि विचार्यमाणेऽसंगतमेवेदं वचनम्, एकाद्वयब्रह्मविज्ञानेन सर्वविज्ञानस्य श्रुतिसूत्रसिद्धत्वात् ।

यद्यपि गौडपादीयकारिकास्वजातिवादो बहुधा विवृतस्तथापि मायावादोऽपि न बहुत्रोपदर्शित इति न शक्यते वक्तुम् । तथा चोभयोक्तिसामञ्जस्याय मायया जातिः परमार्थतोऽजातिरिति द्वयमभिप्रेतं श्रीगौडपादस्य । सर्वथाऽलीका निरधिष्ठाना च कल्पनेति मध्यमकमतं तु श्रीगौडपादैर्नाद्रियते, अद्वयात्मसत्तास्वीकारात् ।

तदेवं गौडपादानां भाषासाम्यप्रयोगेऽपि न बौद्धत्वं बौद्धश्राद्धत्वं बौद्धानुगामित्वं वा न वा कारिकोक्तसिद्धान्तानां बौद्धसिद्धान्ताभेदः । किन्तु भाषासाम्यमेव विभ्रान्तिकारणमिति श्रद्धया मनः समाधीय विमृश्यतामित्यभ्यर्थ्योपरम्यते ।



# वेदान्तदर्शनविमर्शः[1]

यतः समुद्भूतमिदं स्थितं यत्र ततः परम् ।
यस्मिन्नन्ते लयं याति तस्मै मे सततं नमः ॥ १ ॥
द्वैतमद्वैतमद्वैतद्वैतं यद् गौरभीप्सितम् ।
दुग्धा दुग्धं सुगोपालैस्तस्मै व्यासाय मे नमः ॥ २ ॥
वंशीवाचौ सदा वक्रे रागवैराग्यसम्भृते ।
यद्वक्त्रे संप्रभासेते तस्मै कृष्णाय मे नमः ॥ ३ ॥

अयि चतुर्विभागवत्या दर्शनपरिषदश्चतुराध्यक्षाः श्रीसम्पूर्णानन्दमहाभागाः, समेषु संस्कृतविश्वविद्यालयाधिकृतेषु आप्रस्तोतृप्राध्यापकम् आप्रेष्यं च समदृष्टयः, शमदमश्रद्धातितिक्षासम्पन्नाः, अर्थोपरतिसर्वजनवित्तसर्वविषयविरागाः, विद्याधिकारसम्पन्नाः, श्रद्धेयाः, उपकुलपतिमहाभागाः, सकलदुरवगाहदर्शनाम्भोधिमज्जनसमुन्नीततत्त्वरत्ना विदुषां शिखामणयः, अन्ये च दर्शनतत्त्वदर्शनबद्धश्रद्धाः श्रावकाः दर्शनेषु विनेयाश्च विद्यार्थाः !

अद्य आधिभौतिकविविधविज्ञानवादभूतवादविमोहिते लोके अज्ञाननिविडतमश्छन्ने चाध्यात्मिकविज्ञाने परीक्षणायापि समुपेक्षितेषु आर्षदृष्टिप्रभवेषु अवितथेषु पुराणेषु, दर्शनेषु, सर्वतः प्रचरत्सु पाश्चात्त्यविविधवादानुप्राणितेषु अनागमतर्कमात्रनिबन्धनेषु स्वेच्छादर्शनेषु, भवतां वेदान्तदर्शनपरिषदि समवेतानाम् अभिरुचिम् उपस्थितिं च समवेक्ष्य मोमुह्यमानमानस आयत्यामपि आध्यात्मिकविज्ञानस्य तत् प्रसुवानानां वेदान्तदर्शनानां चाभ्युदयं भाविनं समवेक्षे । अहं चाशैशवाद् वार्द्धकं यावद् दर्शनतत्त्वानि पर्येषमाणो विषीदंश्च, लोकवृत्तेषु असंस्तुतोऽस्मिन् वेदान्तदर्शनसमुत्थानसमीक्षाकर्मणि वेदान्तदर्शनपरिषद आध्यक्ष्यं कर्तुं यन्नियुक्तस्तं दुर्विषहं भारं वोढुमक्षमोऽपि भवतामादेशाद् उद्विवक्षुरस्मि ।

भवतश्च महान्तं क्लेशमुरीकृत्य अहातव्यं च कर्तव्यजातमवधीर्य वेदान्तदर्शनपरिषदि महतोत्साहेन सङ्गतान् भूयो भूयो भूयोभिः सहार्दैः साधुवादैः सम्प्रार्थ्य किञ्चिद् निविवेदयिषामि ।

---

१. वेदान्तदर्शनपरिषदोऽध्यक्षभाषणम् ( १९६२ इसवीये वर्षे )

अस्या वेदान्तदर्शनपरिषदो लक्ष्यं वेदान्तसिद्धान्तानां लोके प्रचारप्रसाराभ्यां सर्वप्राणिषु समत्वदृष्ट्या सहजस्नेहसमुद्भावनद्वारा एककुटुम्बीकरणेन रागद्वेषतन्मूलकहिंसास्तेयपराभिद्रोहकलहादीनां जगद्दुःखबीजानां निवृत्तिसम्पादनम्। साम्प्रतं प्रतिदिशं दरीदृश्यमानस्य लोभमूलकस्य निरवधेरर्थासन्तोषस्य तत्परिणामभूतस्य च महतो दारिद्र्यस्य महतोऽन्नवस्त्रसङ्कटस्य कृत्रिमस्य समाधानसम्पादनम्, तत्र को मोहः कः शोक एकत्वमनुपश्यत इत्यादिश्रुतिभ्यः। यत एकत्वदृष्टौ सत्यां न कस्यापि शोकमोहौ सम्भवतः।

इयमेव च श्रुतिप्रतिपादिता तत्तद्वेदान्तैर्विविधरूपेण व्याख्याता सर्वप्राणिषु एकत्वदृष्टिः, समत्वदृष्टिः, अविभक्तत्वदृष्टिः, सर्वप्राणिषु समवस्थितसर्वेश्वरदृष्टिः, एतद्दृष्टिप्रचयमूलिका च सर्वप्राणिषु विषयसंविभागदृष्टिश्च वेदान्ताध्ययनस्य परमं प्रयोजनं शान्तिसौख्यस्य, सन्तोषसौख्यस्य अनुत्तमस्य, परसौख्यस्य च नित्यस्य स्वरूपभूतस्य परमं प्राप्तिसाधनम्। साम्प्रतं च जगति महान् कोलाहलः श्रूयते भीष्मो हृदयदारणः। तथा हि—क्वचिद् देशसीमानो भज्यन्ते, क्वचित्परायत्तदेशेषु स्वातन्त्र्यमभिलष्यन्तो निर्दयं रहसि अविज्ञातं हन्यन्ते, क्वचित् शासनाधिकृता राष्ट्रसमितिश्छद्मना विघट्यते, क्वचिद् भीषणानि क्षेप्यास्त्रगोलकानि भूयांसि भूमियोजनानि महागर्तयितुं तत्रत्यांश्च प्राणिनश्चराचरान् महाप्रलयं साक्षात्कारयितुं महाब्धिमपि महाकाशे तरङ्गयितुं क्षमाणि परस्परं विजिगीषया निर्मीयन्ते, क्वचिद् दूरतोऽपि शत्रुदेशं भस्मसात्कर्तुं राकेटसृष्टिः, क्वचिदुपग्रहाणां रचना, क्वचिन्महतां विमानानां संहारसम्भारसम्भृतानां नभसि मनोरंहसा प्रसर्पणम्, क्वचिन्महाम्भोधेरन्तस्तलेऽपि जलपोतानां महामत्स्यवत्प्रधावनम्, भूमावपि रयलमोटत्तरद्राक्तरादीनां यानानां श्लाघ्येन रंहसा प्रद्रवणम्, रेडियोटेलीवीजनयन्त्रादीनां परदेशवृत्तानामनुकूलप्रतिकूलानां द्राक्परिज्ञानायाविष्करणम्, नवनवानां च सौख्यसाधनानां निर्माणेऽप्यसंतोषोऽवितृप्तता चेति। एवमीदृशस्य जगद्व्यसनस्य समुपस्थितस्य किं मूलम्, कश्च परिहारोपाय इति चिन्तायां सत्यां विषयेषु रागः, अभीष्टविषयप्राप्तिप्रतिबन्धकेषु च प्रद्वेष इति निश्चीयते। तथा हि—विषयेषु स्रक्चन्दनवनितादिषु साधुत्वरूपसम्यक्त्वकल्पनया विषयान् ध्यायतो विषयेषु राग आसक्तिरूपोऽभिनिवेशो जायते, सङ्गाच्च तेषु कामो जायते, कामाच्च प्रतिहतात् तत्प्रतिबन्धकेषु प्रद्वेषो जायत इति क्रमः। तदुक्तं गीतासु—

ध्यायतो विषयान् पुंसः संगस्तेषूपजायते ।
सङ्गात्सञ्जायते कामः कामात्क्रोधोऽभिजायते ॥
क्रोधाद्भवति संमोहः संमोहात्स्मृतिविभ्रमः ।
स्मृतिभ्रंशाद् बुद्धिनाशो बुद्धिनाशात्प्रणश्यति ॥ इति ।

न चैतस्य विषयेषु सङ्गरूपस्य रागस्य तेषूत्कटाभिलाषरूपस्य च कामस्य प्रक्षयः काम्यमानविषयाणामुपभोगेन संभवति । तदुक्तम्—

"न जातु कामः कामानामुपभोगेन शाम्यति ।
हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते ॥" इति ।

भागवते ययातिगीतञ्च—

"यत्पृथिव्यां व्रीहियवं हिरण्यं पशवः स्त्रियः ।
एकस्यापि न पर्याप्तं तस्मात्सर्वं परित्यजेत् ॥" इति ।

किन्तु विषयेषु क्षयित्वानित्यत्वादिदृष्ट्या तदुपभोगे च व्याध्याद्यनर्थहेतुत्वदृष्ट्या इन्द्रियाणां तेभ्यः प्रत्याहरणरूपेण निरोधेनैव विषयेषु कामस्य सर्वानर्थबीजस्य प्रक्षयः । तदुक्तं गीतासु—

"तस्मात्त्वमिन्द्रियाण्यादौ नियम्य भरतर्षभ ।
पाप्मानं प्रजहि ह्येनं ज्ञानविज्ञाननाशनम् ॥" इति ।

अभ्यासवैराग्ये चेन्द्रियनिरोधोपायत्वेन प्रसिद्धे । एवमस्मिन् कराले काले सहजस्नेहसद्भावभावनया रागद्वेषनिवृत्तिसाधनानां शमदमतितिक्षोपरतिसंतोषादीनां विषयदोषाणाञ्च सर्वत्र साम्यदृष्टेश्चाविरतमुपदेशपरस्य वेदान्तशास्त्रस्याध्ययनमत्यन्तमुपयुक्तम् ।

किञ्च प्राचीनभारतीयसंस्कृतेरविरोधेन सर्वसंस्कृतिसमन्वयपुरस्सरं निर्मित्सितायां साम्प्रतिक्यां भारतीयसंस्कृतौ विविधवेदान्तदर्शनानामन्यतममद्वैतदर्शनं सुमहदुपयुक्तम् । तत्र हि न संप्रदायवादः; अनुसरन्ति हि अद्वैतवादं सन्यासिनः, उदासीनाः, निर्मलाः, दादूसंप्रदायिनः, तुलसीदासप्रभृतयो रामानन्दसम्प्रदायमनुगताः, कबीरसंप्रदायमनुसरन्तश्च । अन्येऽपि च बहवो ज्ञाताज्ञाताः । यवनेषु अपि सूफीपदव्यपदेश्या मन्सूरप्रभृतयः प्रसिद्धाः ।

सर्वेषां च वेदान्तदर्शनानां व्याख्याभेदभिन्नानां प्रस्थानत्रयं वर्तते परमनिश्श्रेयसप्राप्तौ साधनम् । उपनिषदः, सूत्राणि, गीताशास्त्रं चेति । तत्रोपनिषदः श्रवणरूपाणि स्वतः प्रमाणानि, सूत्राणि तु उपनिषद्वाक्यार्थविचार-

पराणि मननरूपाणि, गीताशास्त्रन्तु उपनिषदः सांख्ययोगौ पुराणानि चानुगतम्। तत्र—गीताशास्त्रस्योपनिषदनुसारित्वे "सर्वोपनिषदो गावः" इत्यादीनि वचनानि, "सांख्ये कृतान्ते प्रोक्तानि सिद्धये सर्वकर्मणाम्", इत्येवं-विधानि सांख्यशास्त्रपराणि, "समं कायशिरोग्रीवं धारयन्नचलं स्थिरः" इत्यादीनि योगपराणि, "न मे भक्तः प्रणश्यति", "भक्त्या त्वनन्यया शक्यः" "भक्त्या मामभिजानाति" इत्यादीनि भक्तिमाहात्म्यप्रख्यापकाणि वचनानि पुराणमनुसृतानि। तत्र प्रतिष्ठते लक्ष्यं प्राप्तुमनेन पथा इति प्रस्थानं मार्ग उच्यते। तत्र उपनिषत्प्रस्थाने छान्दोग्योपनिषदमाश्रित्य लक्ष्यप्राप्तिपद्धतिः प्रदर्श्यते—तत्रोपनिषत्सु परापराविद्याभेदेन द्वे मुख्यतः प्रस्थाने। तत्र परा यया तदक्षरमधिगम्यते निर्गुणब्रह्मविद्या। सा तु एकैवाध्यारोपापवादन्यायेन सर्वोपनिषत्सु प्रपञ्चिता। तत्रापरा विद्या यद्यपि ऋग्यजुःसामादिलक्षणा कर्मज्ञापिका तथापि सगुणब्रह्मविद्याऽपि गुणप्रहाणेन निर्गुणब्रह्मविद्याप्राप-कत्वाद् अपरैव। तस्याश्च बह्वचो विधा बहवो भेदा बहूनि आलम्बनानि बह्वयश्च वंशपरम्पराः श्रूयन्ते। बहूनि च नामानि शास्त्रकृद्भिः कल्पितानि। तद्यथा—छान्दोग्योपनिषदि प्रथमाध्यायमारभ्य पञ्चमाध्यायं यावद् नाना-विधानि उपासनानि उक्तानि। षष्ठाध्याये तु निर्गुणब्रह्मविद्योपदेश आरुणेः श्वेतकेतुं प्रति, तत्र च षोडशकलपुरुषोपदेशपुरःसरं निष्कलपुरुषोपदेशः। सप्तमेऽध्याये तु नारदं प्रति वागादिरूपभूयोवस्तूपदेशपरम्परया निरतिशय-ब्रह्मस्वरूपोपदेशः। अष्टमेऽध्याये तु निर्गुणब्रह्मप्राप्तिसाधननानाविधोपास-नोपदेशानन्तरम् इन्द्रविरोचनौ प्रति ब्रह्मण उदशरावादिदृष्टान्तेन निर्गुण-ब्रह्मोपदेशो विपरीतग्रहेण संशयालुं प्रतिनिवृत्तम् इन्द्रं प्रति च पुनरुपदेशः, तदनन्तरं च 'श्यामाच्छबलं प्रपद्ये' इत्यादिमन्त्रस्य जपार्थस्य ध्यानार्थस्य च अपरब्रह्मप्राप्तये उपदेशः १३, १४ खण्डाभ्याम्। ततः परं एतस्या ब्रह्म-विद्याया वंशपरम्परोपदेशो ब्रह्मा प्रजापतये उवाच, प्रजापतिर्मनवे, मनुः प्रजाभ्य इति। विद्यानां च मधुविद्या, पञ्चाग्निविद्या, संवर्गविद्या, दहरविद्यादीनि नामानि, किञ्च अत्रोपनिषदि त्रिविधानि उपासनानि उक्तानि। कानिचिद् अभ्युदयफलानि, कानिचित् क्रममुक्तिफलानि, कानि-चित् कर्मफलगतातिशयफलानि। तत्राद्यानि "स यो वै वायुं दिशां वत्सं वेद न पुत्ररोदं रोदिति" इत्यादीनि। द्वितीयानि तु सगुणब्रह्मविषयाणि, तृतीयानि तु उद्गीथाद्युपासनानि कर्मसमृद्धिफलानि। तत्र आत्मविद्या-प्रकरणे विविधोपासनोपन्यासे कारणं त्रिविधोपासनानाम् आत्मज्ञानस्य च मनोवृत्तित्वरूपं रहस्यत्वरूपं च सामान्यमेव। किञ्च—उपासनानामीश्वरार्पण-

बुद्धयानुष्ठितनित्यादिकर्मवच्चित्तशुद्धिद्वारा ज्ञानकारणत्वात् कार्याच्च कारणस्य प्राथम्यप्रसिद्धेः साकारवस्तुविषयत्वेन सुसाधत्वाच्च मन्दानां सहसा तेषु प्रवृत्त्युपपत्तेरादावुपदेशः कृत इति। ब्रह्मसूत्ररूपे तु वेदान्तदर्शनानां प्रस्थाने उपनिषत्प्रस्थानैकरूप्यमेव उपनिषद्वाक्यार्थविचाररूपस्य अस्य उपनिषदर्थ-मननरूपत्वेन अतिरिक्तप्रस्थानत्वासम्भवात्।

ब्रह्मसूत्राणां च वेदान्तदर्शनेषु द्वैतपरत्वम्, द्वैताद्वैतपरत्वम्, विशिष्टाद्वैतपरत्वम्, शुद्धाद्वैतपरत्वम्, अद्वैतपरत्वं च बहुभिराचार्यैर्बहुधा व्याख्यातम् इत्यन्यदेतत्। गीताशास्त्रप्रस्थानन्तु प्रत्येकमध्यात्मविद्यानुक्तिद्वेन अध्यायषट्कत्रयेण यथाक्रमं कर्मभक्तिज्ञानानि अध्यात्मविद्याप्राप्तये उपदिशति। तत्र च यद्यपि कर्मभक्त्योर्ज्ञानाङ्गत्वम् ज्ञानस्य तु प्राधान्यं कैवल्ये साधनीये इति केचिदाचार्याः, अपरे तु ज्ञानकर्मणोः समुच्चितयोः समं प्राधान्यं मुक्तौ, भक्तेस्तु तयोरुपकारकत्वम् इति, अन्ये तु भक्तेरेव प्राधान्यम्, ज्ञानकर्मणोस्तु तदुपकारकत्वमिति बहुधा विप्रतिपन्नाः, तथापि कर्मादिरूपे मार्गत्रयेऽविप्रतिपन्नाः।

किञ्च वेदान्तदर्शनेषु उपनिषद्वाक्यसमाश्रयेण स्वस्वविकल्पजा बहवो वादाः प्रसृताः। तद्यथा दृष्टिसृष्टिवादः, सृष्टदृष्टिवादः, अजातवादः, वैतथ्यवादः, व्यावहारिकसत्त्ववादः सत्त्ववादः। तत्र दृष्टिसृष्टिः अद्वैतदर्शने, सृष्टदृष्टिस्तु व्यावहारिकसत्त्वमादाय अद्वैतदर्शने, अन्येषु च वेदान्तदर्शनेषु सर्वथा अबाध्यत्वरूपं सत्त्वमादाय। अजातवादस्तु माण्डूक्योपनिषत्कारिकासु गौडपादैरुपदिष्टः। वैतथ्यवादोऽपि तत्र अन्यत्र च अद्वैतदर्शने। जगतो व्यावहारिकसत्त्ववादोऽपि अद्वैतदर्शने एव। जगत्सत्यत्ववादस्तु षट्सु वैष्णववेदान्तदर्शनेष्वेवेति। एवं विज्ञानात्माद्वयवादोऽद्वैतदर्शने जगतो वैतथ्यवादव्यावहारिकसत्त्ववादाजातवादसमाश्रयेण, विशिष्टाद्वैतदर्शने श्री-रामानुजाचार्याणां चिद्विशिष्टाचिद्विशिष्टयोरद्वैताभ्युपगमेन। तथा हि—अस्मिन् मते चित्, अचित् ईश्वरश्चेति तत्त्वत्रयमस्ति। तत्र चित्पदेन जीवाः, अचित्पदेन जडजातं दृश्यम्। चिद्विशिष्टस्याचिद्विशिष्टेन सह परस्परमद्वैतमिति विशेषणांशमादाय भेदो विशेष्यांशमादाय त्वभेद इत्युभयं सिद्ध्यति।

शुद्धस्यैव ब्रह्मणोऽद्वैतदृष्ट्या श्रीवल्लभाचार्याणां शुद्धाद्वैतवादः। एषां मते जगदभिन्नमेवेश्वरात्। श्रीनिम्बार्काचार्याणान्तु द्वैताद्वैतवादः कार्य-कारणयोर्भेदाऽभ्युपगमात्। श्रीमध्वाचार्याणान्तु द्वैतवादो न्यायवै-शेषिकादिवत्।

सोऽयमद्वैतिनां विज्ञानाद्वयवादो योगाचाराणां विज्ञानाद्वयवादाद् विशिष्यते। यतो विज्ञानवादाद्वैतवादयोः प्रामाणिका भेदा इमे। तथा हि—

१. विज्ञानवादी विज्ञानस्य क्षणिकत्वं ब्रूते, यत्सत् तत् क्षणिकमिति स्थितेः। अद्वैती तु नित्यत्वम्। साधितञ्चैतत्पंचदश्यामारम्भ एव। उक्तं च तत्र तत्रोपनिषत्सु गीताभाष्यादिषु च।

२. प्रथमो विज्ञानस्यानेकत्वम्, क्षणिकत्वेन। अद्वयत्वं तु समानकालिकसजातीयानेकमूलविज्ञानसत्त्वाभावाभिप्रायेण। आलयविज्ञानानानि प्रवृत्तिविज्ञानानि च परस्परं भिद्यन्ते, तेषामुपादानभूतं मूलविज्ञानं त्वेकमेवेति सिद्धान्तात्। समाधिदशायां मोक्षदशायां च ग्राह्यग्राहकाकारद्वयशून्यत्वेन च। तदुक्तम्—

"द्वयग्राहविसंयुक्तं　　लोकोत्तरमनुत्तमम्।
निर्विकल्पं मलापेतं ज्ञानं स लभते पुनः॥ इति।
(महायानसूत्रालंकारे २८)।

द्वितीयः कूटस्थनित्यत्वेनैकत्वम्, एकमेवाद्वितीयम् इत्यादिश्रुतिभ्यः।

३. प्रथमो विज्ञानस्य विषयाकारेण परिणाममभ्युपैति। स च परिणामो न सांख्यानामिव सान्वयः, किन्तु निरन्वयः। तथा च विज्ञप्तिमात्रतासिद्धिप्रथमकारिकाव्याख्याने परिणामलक्षणम्—"कारणक्षणनिरोधसमकालः कारणक्षणविलक्षणः कार्यस्यात्मलाभः परिणामः एवञ्च सर्वं विज्ञेयं परिकल्पितस्वभावत्वाद् वस्तुनो न विद्यते। विज्ञानं पुनः प्रतीत्यसमुत्पन्नत्वाद् द्रव्यतोऽस्तीत्यभ्युपेयम्। प्रतीत्यसमुत्पन्नत्वं पुनर्विज्ञानस्य परिणामशब्देन ज्ञापितम्" इति। द्वितीयो विवर्तं विज्ञानस्य विषयं ब्रूते। अतात्त्विकोऽन्यथाभावो वस्तुनो विवर्तः प्रसिद्धो भामत्यादिषु शारीरकभाष्ये च सुबहुशः।

४. प्रथमो विज्ञानस्यार्थाकारः परिणाम इति ब्रूते, द्वितीयस्त्वन्तःकरणस्यार्थाकारः परिणामो वृत्तिरूप इति।

५. प्रथमो बाह्यार्थसत्तां न स्वीकुरुते। द्वितीयस्तु वृत्तिहेतुतया तत्सत्तामभ्युपैति। तदुक्तं पञ्चदश्यां द्वैतविवेकप्रकरणे—"विज्ञानवादो बाह्यार्थवैयर्थ्यात् स्यादिहेति चेत्। न ह्यद्याकारमाधातुं बाह्यस्यापेक्षितत्वतः॥ वैयर्थ्यमस्तु वा बाह्यं न वारयितुमीश्महे। प्रयोजनमपेक्षन्ते न मानानीति हि स्थितिः॥" इति।

६. प्रथमो विज्ञानपरिणामस्य ग्राह्यार्थस्य तत्त्वेन सतोऽपि क्षणिकत्वेन मायोपमत्वम्, तदुक्तं महायानसूत्रालङ्कारे—"मायोपमान् पश्यति लोकधातून्; मायोपमान् वीक्ष्य स सर्वधर्मान्" इति। द्वितीयो मायापरिणामत्वेन

मायामयत्वम् । "तद्धेदं तर्ह्यव्याकृतमासीत्तन्नामरूपाभ्यामेव व्याक्रियत" इत्यादिश्रुतीनां सुबहुशः समुल्लेखात् ।

७. प्रथम एकस्मिन् ग्राह्यग्राहकभावाभ्युपगमेन स्वप्रकाशत्वम् । द्वितीयः परप्रकाश्यत्वाभावेन प्रकाशरूपत्वेन च स्वप्रकाशत्वम् ।

८. विज्ञानवादे विज्ञानस्य ग्राह्यग्राहकाकारपरिणामनिवृत्तिर्मोक्षः । अद्वैतवादे नित्यनिवृत्तस्याविद्याप्राप्तस्य प्रपञ्चस्य निवृत्तिज्ञानमात्रम् ।

९. आद्यो बाह्यार्थस्य सांवृतं सत्त्वं मन्यते । संवृतिश्च भ्रान्तिधीरेवा-निर्वाच्या वक्ष्यमाणलङ्कावतारसूत्रोक्तरीत्या । द्वितीयस्तु व्यावहारिकं प्रातिभासिकञ्च सत्त्वम्, तत्प्रयोजकञ्चानिर्वाच्यमविद्याद्वितयम्, मूल-तूलभेदेन ।

१०. आद्यमते विज्ञानस्य वासनासहकारेण जगत्स्रष्टृत्वम्, द्वितीयमते मायासहकारेणाविद्यासहकारेण च ईशजीवयोः स्वातिरिक्तजगद्विवर्तो-पादानत्वम् । तत्रेशशक्तिर्माया व्यावहारिकजगदुपादानम्, अविद्या च जीवात्मशक्तिः । सा तु मनोमयप्रातिभासिकजगदुपादानम् ।

११. आद्यमते सर्वं विज्ञानं स्वलक्षणमात्रविषयकं निर्विकल्पकम्, अपोहादिविषयकं सविकल्पकं वा भ्रान्तम्, असदर्थावभासनात् । द्वितीयमते औपनिषदं तत्त्वमस्यादिवाक्योत्थमखण्डब्रह्मविषयकं निर्विकल्पकं विषया-बाधेन सर्वथा प्रमाणम् ।

१२. प्रथमो भ्रान्तिमेवाविद्यां भावत्वेनाभावत्वेन चानिर्वाच्यामनादि-परम्परासिद्धत्वेन नित्यां च मन्यते । तदुक्तं लङ्कावतारे—"नित्यशब्दः पुनर्भगवन् क अभिहितः ? भगवानाह—भ्रान्तौ महामते ! कथं पुनर्महामते ! भावाभावविवर्जिता भ्रान्तिः, एतस्मात्कारणात् शाश्वती भ्रान्तिः" इति ( द्वितीयपरिवर्ते ) । द्वितीयस्तु भ्रमात्संस्कारतोऽप्यन्या मण्डूकमृदुदाहृतेः । अविद्याऽनादिभावात्मा मता वाचस्पतेरिह ।। ( कल्पतरौ ) इति वदन् भ्रमसंस्कारोभयभिन्नाऽनिर्वाच्याऽऽत्मशक्तिरनादिभावरूपाऽविद्येति मन्यते ।

१३. योगाचारमतम्—'आत्मैवेदं सर्वम्' इत्यादिश्रुत्योपक्रान्तम् । अद्वैतमतन्तु—'अगन्धमरसम्' इत्यादिनोपसंहृतमिति सिद्धान्तभूतम् । तथा चात्मतत्त्वविवेकान्त उदयनाचार्यः—"अथार्थाकारः, यमाश्रित्य त्रैदण्डिक-मतोपसंहारः, योगाचारसमुत्थानञ्च, तत्प्रतिपादनार्थम्—'आत्मैवेदं सर्वम्' इत्यादि, तद्धानार्थम्—'अगन्धमरसम्' इत्यादि" इति ।

यदपि कैश्चिदुच्यते—शून्यवादमायावादयोर्वैलक्षण्याभाव इति, तदपि न युक्तिसहम्; भूयसां भेदानामुपलम्भात् । तथा हि—

१. शून्यवादे परमार्थतत्त्वं शून्यत्वम् । तच्च सत्त्वादिनाऽनिर्वाच्यं सर्वेषां भावानां परमार्थरूपम् । द्विविधं हि वस्तूनां तत्त्वम्, सत्त्वमसत्त्वञ्च । तदुक्तमध्यासभामत्याम् । "बाह्या अप्याहुः—

'स्वरूपपररूपाभ्यां नित्यं सदसदात्मके ।
वस्तुनि ज्ञायते किञ्चित् कैश्चिद्रूपं कदाचन ॥''' इति ।

तत्र सत्त्वं तेषां सांवृतं रूपम्, तच्चानिर्वाच्यं बाध्यञ्च, भावाभावविलक्षणभ्रान्तिरूपसंवृतिप्रयुक्तत्वेन तत्स्वभावत्वात्, शून्यत्वरूपमसत्त्वन्तु तेषां पारमार्थिकं रूपम् । यद्यपि शून्यत्वमनिर्वाच्यत्वेन नासत्त्वरूपं तथापि सत्त्वाभावरूपतयाऽसत्त्वं व्यवह्रियते । तदुक्तम्—

"न सन्नासन्न सदसन्न चाप्यनुभयात्मकम् ।
चतुष्कोटिविनिर्मुक्तं तत्त्वं माध्यमिका विदुः ॥" इति ।

तच्च शून्यत्वरूपं भावानामसत्त्वमनिर्वाच्यत्वेऽपि न बाध्यम्, किन्तु परमार्थभूतम् । नैरात्म्यभावनापर्यन्तायाः सर्वशून्यत्वभावनाया गोचरीभूतस्य शून्यत्वस्य बाधकाभावेनाबाधात् । शून्यत्वदृष्टिस्तु विषयस्य पारमार्थिकत्वेऽपि स्वरूपतोऽपरमार्थभूता । अद्वैतवादे परमार्थतत्त्वं सच्चिदानन्दरूपं ब्रह्म नित्यविज्ञानस्वरूपम् । निरधिष्ठानिकाया ग्राह्यकल्पनायाः शून्यत्वकल्पनाया वाऽसम्भवात् । एषां मते सर्वे विज्ञानातिरिक्ता भावा अनिर्वाच्यमायाकार्यत्वेनानिर्वाच्याः । विज्ञानं तु सद्रूपतया निर्वाच्यम् । एतन्मते भावानां सत्त्वमनिर्वाच्यं बाध्यञ्च । तदुक्तं खण्डने—एवं सति सौगतब्रह्मवादिनोरयं विशेषो यदादिमः सर्वमेवानिर्वचनीयं वर्णयति । तदुक्तं भगवता लङ्कावतारे—

"बुद्धया विविच्यमानानां स्वभावो नावधार्यते ।
अतो निरभिलप्यास्ते निःस्वभावाश्च देशिताः ॥" इति ।

"विज्ञानव्यतिरिक्तं पुनरिदं विश्वं सदसद्भ्यां विलक्षणं ब्रह्मवादिनः सङ्गिरन्ते" इति ।

२. शून्यवादे ग्राह्यग्राहकयोर्द्वयोरपि सांवृतं सत्त्वम् । अद्वैतवादे तु ग्राहकस्य पारमार्थिकं सत्त्वम्, ग्राह्यस्य तु व्यावहारिकं प्रातिभासिकञ्च ।

३. शून्यवादिमते शून्यत्वस्य सत्त्वादिनाऽनिर्वाच्यत्वेन निरधिष्ठानैव सर्वा कल्पना । यद्यपि सा न दृष्टचरी, तथापि युक्तिबलात् सर्वशून्यत्वसिद्धौ

स्वीकर्तव्या भवतीति। अद्वैतिमते सत्त्वेन निर्वाच्यस्य विज्ञानस्य कल्पना-ऽधिष्ठानत्वम्; कल्पनायाः सदधिष्ठानिकाया एव दृष्टत्वात्।

४. शून्यवादिमते प्रागुक्तानिर्वाच्यसर्वशून्यत्वरूप एव मोक्षः। अद्वैति-मते तु मोहनिवृत्त्युपलक्षितः प्रकाशमानानन्दरूपविज्ञानात्मरूपः।

५. सर्वशून्यत्ववादे नैरात्म्यभावना मोक्षोपायः। अद्वैतवादिमते तु ऐकात्म्यभावनेति भेदः।

६. सौगतयोरपि प्रागुक्तयोर्निरीश्वरवादः। अद्वैतवादे तु व्यावहारिक-मीश्वरसत्त्वम्।

७. शून्यवादोऽसत्कारणतावादत्वेन श्रुतौ श्रुतः—"तद्धैक आहुरसदे-वेदमग्र आसीदिति। कथं नु खलु सौम्यासतः सज्जायेत" इति। तथा चात्मतत्त्वविवेकान्त उदयनाचार्यः—"अथार्थाभावः यमाश्रित्य वेदान्त-द्वारमात्रोपसंहारः शून्यत्वनैरात्म्यसमुत्थानञ्च, तत्प्रतिपादनार्थम्—'असदेवे-दमग्र आसीत्' इत्यादि। तद्धानाय—'अन्धं तमः प्रविशन्ति ये के चात्महनो जनाः' इत्यादीति। अद्वैतवादस्तु सत्कारणतावादत्वेन 'सदेव सौम्येदमग्र आसीत् एकमेवाद्वितीयम्' इत्यादिश्रुतिषु श्रुत इति। किञ्चाद्वैतिनां दृष्टिसृष्टि-वादोऽपि विज्ञानवादिनां दृष्टिसृष्टिवादाद् भिद्यते। तथा हि—अद्वैतिनां दृष्टिसृष्टिवादे दृश्यस्य प्रातिभासिकस्य आविद्यकस्य अविद्यावृत्तिरूपात् चिद्रूपाद्वा विज्ञानात्पृथक् सत्त्वमङ्गीक्रियते, अविद्योपादानकत्वेऽपि अविद्या-वृत्तितद्विषययोर्भेदाऽभ्युपगमात्। विज्ञानवादिनां तु दृश्यस्य विज्ञानाकारतैव, न तु विज्ञानाद् भेद इति। सोऽयं दृष्टिसृष्टिवादः शब्दाद्वयवादिनां वैयाक-रणानामप्यभिप्रेतः। तदुक्तं भर्तृहरिणा आगमसमुच्चयापरनाम्नि ब्रह्मकाण्डे—

> शब्देष्वेवाश्रिता शक्तिर्विश्वस्यास्य निबन्धनी।
> यन्नेत्रः प्रतिभात्माऽयं भेदरूपः प्रतीयते॥ ११८॥

इति कारिकाव्याख्यावसरे—"यथाऽपरेषामिन्द्रियेषु विषयमात्राशक्तयः प्रतिलयं गच्छन्ति, तथेन्द्रियमात्राशक्तयो बुद्धिषु, बुद्धिमात्राशक्तयः प्रतिसंहृतक्रमे वागात्मनि। सा चेयं स्वप्नप्रबोधवृत्तिः प्रविभक्तपुरुषानुकारा महत्यपि वाक्तत्त्वे कारणे नित्यमवस्थिता इति। गीतास्वपि अयं दृष्टिसृष्टिवादः स्मर्यते—

> भूतग्रामः स एवायं भूत्वा भूत्वा प्रलीयते।
> रात्र्यागमेऽवशः पार्थ प्रभवत्यहरागमे॥ इति।

सृष्टदृष्टिवादस्तु अबाधितप्रत्यभिज्ञाबलात्स्वीक्रियते, दृष्टिसृष्टिवादिनान्तु सा प्रत्यभिज्ञा वस्तुसाजात्यनिबन्धना, न तु अर्थैक्यनिबन्धना ज्वालैकत्व-प्रत्यभिज्ञावत्। तत्राजातवादः, वैतथ्यवादः, व्यावहारिकसत्त्ववादः, अद्वैतात्मोपपत्तये स्वीक्रियते। अजातवादस्य साधिका श्रुतिस्तु—

न निरोधो न चोत्पत्तिर्न बद्धो न च साधकः।
न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थता॥ इत्यादिका।

अयमजातवादो माध्यमिकानामपि सर्वशून्यत्ववादिनां संमतः। अनिर्वचनीयत्वरूपवैतथ्यवादस्तु युक्तिसिद्धः। तथा हि—असत्त्वे प्रतीत्यनुपपत्तिः। सत्त्वे बाधानुपपत्तिरिति सत्त्वासत्त्वाभ्यामनिर्वाच्यमेव विश्वम्। व्यावहारिकसत्त्ववादोऽपि व्यवहारप्रवृत्त्यन्यथाऽनुपपत्तिमूलक एव। तत्र व्यावहारिकं सत्त्वं यावद् व्यवहारकालमबाध्यत्वरूपम्। प्रागुक्तस्य च जगतो वैतथ्यवादस्य युक्तिसिद्धस्योपपत्तय एव जगतो मूलकारणमपि कार्यानुरूपमेव भावाभावविलक्षणं त्रिगुणात्मकमविद्यारूपं स्वीक्रियते। किञ्चाद्वैतिनां मते सत आत्मनो जगद्विवर्तोपादानत्वरूपं कारणत्वं मायासहकारेण संभवति, मायायास्तु परिणाम्युपादानत्वम्। शून्यवादिनान्तु असत्कारणत्ववादे कार्यकारणभावो नोपपद्यते। तदुक्तं गौडपादकारिकासु शून्यवादिमत-प्रत्याख्यानावसरे—

सतो हि मायया जन्म युज्यते न तु तत्त्वतः।
तत्त्वतो जायते यस्य जातं तस्य हि जायते॥
असतो मायया जन्म तत्त्वतो नैव युज्यते।
वन्ध्यापुत्रो न तत्त्वेन मायया वाऽपि जायते॥

(अद्वैतप्रकरणे २७-२८)।

व्याख्यातञ्च भाष्यकृद्भिः—"असद्वादिनामसतो भावस्य मायया तत्त्वतो वा न कथञ्चन जन्म युज्यते, अदृष्टत्वात्। नहि वन्ध्यापुत्रो मायया तत्त्वतो वा जायते। तस्मादत्रासद्वादो दूरत एवानुपपन्न इत्यर्थः" इति। शून्यवादे कार्यकारणभावो नोपपद्यत इति विवर्तवाद एव सदधिष्ठानककल्पनारूप आश्रयणीय इति तत्तात्पर्यम्। अयञ्च विवर्तवादोऽजातवाद एव पर्यवस्यति। अतात्त्विकोऽन्यथाभावो विवर्तः, तात्त्विकोऽन्यथाभावः परिणाम इत्यभ्युपगमात्। किञ्चास्ति वेदान्तेषु भ्रमस्थले ख्यातिमुद्दिश्य विप्रतिपत्तिः। तथा हि—शुक्तिकायाम् "इदं रजतम्" इति भ्रमस्थलेऽद्वैतिनां मतेऽनिर्वचनीयख्यातिः, सत्त्वासत्त्वाभ्यामनिर्वाच्यस्य रजतस्याविद्योपादा-

नकस्याविद्यावृत्तौ रजताकारायां सत्यां साक्षिभास्यत्वाभ्युपगमात्। शुक्तिकायां हट्टस्थं रजतं ज्ञानलक्षणप्रत्यासत्त्या प्रत्यक्षीक्रियत इत्यन्यथाख्यातिवादिनो नैयायिकाः, तन्न; ज्ञानलक्षणप्रत्यासत्त्यङ्गीकारेऽनुमानोच्छेदप्रसङ्गात्, रजतस्येदंतया निर्देशासंभवाच्च। विवेकाख्यातिवादिनस्तु प्राभाकराः—इदं रजतमिति द्वे ज्ञाने, तत्र प्रथमं प्रत्यक्षम्, द्वितीयन्तु प्रमुष्टतत्ताकं स्मरणम्, ज्ञानयोर्विषययोश्च मिथो भेदाग्रहात् प्रवृत्तिव्यवहारौ भवतः। नास्ति कश्चन मिथ्याप्रत्ययः। कस्मिंश्चित् प्रत्यये स्वविषयव्यभिचारे हि सर्वत्रानाश्वासप्रसङ्गादिति। सर्वत्रैव हि चेतनस्य प्रवृत्तिव्यवहारयोःसंसर्गज्ञानपूर्वकत्वेनासंसर्गाग्रहमात्रतस्तदसंभवात्। विज्ञानवादिमते तु विज्ञानाकारमेवान्तरं रजतं तत्र प्रथते। नेदं रजतमिति निषेधोऽपि न रजतस्य किन्तु इदन्ताया इत्यात्मरूपस्य विज्ञानाकारस्य रजतस्य ख्यातिरित्यात्मख्यातिवादः। नैतदपि युज्यते, इदन्तया निर्दिश्यमानस्य रजतस्यान्तरत्वे मानाभावात्। शून्यवादिनामसत्ख्यातिरपि न संभवति, असतो वन्ध्यापुत्रादेः ख्यात्यदर्शनादिति। वैष्णववेदान्तिनान्तु सत्ख्यातिवादः, शुक्तिकायां सङ्क्षो रजतावयवेभ्यस्तदानीं सतो रजतस्य जन्माभ्युपगमात्। तदिदं मतं मनःप्रत्ययमासादयति न वेत्यत्रानुभवः प्रष्टव्यः। सदसत्ख्यातिस्तु सांख्यानाम्, इदञ्च मतं परस्परविरोधपराहतमिति। किञ्चाद्वैतिनां नित्यविज्ञानात्मवादिनां नित्यविज्ञानस्य स्वप्रकाशत्वम् सुषुप्तौ आत्मनः स्वयं ज्योतिष्ट्वश्रवणात्, अन्तःकरणवृत्तिरूपविज्ञानस्य तु साक्षिभास्यत्वमन्तःकरणपरिणामत्वेन जडत्वात्। तच्च स्वप्रकाशत्वं परप्रकाशत्वाभावरूपम्, ब्रह्मणो निर्धर्मकत्वात्, एकस्मिन् कर्तृकर्मभावविरोधाच्च। योगाचाराणान्तु क्षणिकविज्ञानस्य स्वप्रकाशत्वम्, एकस्मिन् कर्तृकर्मभावस्वीकारेण। तत्स्वीकारे चासन्देहाविपर्यासानुगृहीतानुभव एव शरणं तेषाम्। गुरूणां स्वप्रकाशत्वन्तु आश्रयत्वकर्मत्वयोर्विरोधाशङ्काया अभावादुपपन्नमेव। अद्वैतवादिनां मते नित्यविज्ञानस्य सत्यमिथ्याभेदभिन्नसर्ववस्त्ववभासकस्य न प्रामाण्यम्, किन्तु वृत्तिरूपज्ञानस्यैव प्रामाण्यमप्रामाण्यञ्च। तच्चोत्पत्तौ ज्ञप्तौ च स्वत एव। तस्योत्पत्तौ स्वतस्त्वं ज्ञानजनकसामग्रीमात्रजन्यत्वरूपम्, ज्ञप्तौ तु ज्ञानग्राहकसामग्रीमात्रग्राह्यत्वरूपम्। अप्रामाण्यन्तु उत्पत्तौ ज्ञप्तौ च परत एव। वृत्तिरूपं ज्ञानमेव चाविद्याविरोधि, नित्यविज्ञानन्तु अविद्यायाः साधकत्वान्न विरोधि।

अथाधुनाऽद्वैतवादमनुसृतः शैवागमसंमतः शिवाद्वयवादो निरूप्यते। तत्र "पत्युरसामञ्जस्यात्" (२-२-३७) इति वेदान्तसूत्रभाष्यीयभामतीरत्नप्रभा-

नन्दगिरीयेषु चत्वारो माहेश्वराः समुपलभ्यन्ते। ते च शैवाः पाशुपताः कारुणिकसिद्धान्तिनः कापालिकाश्चेति। सर्वेऽमी महेश्वरप्रणीतागमानुगामित्वान्माहेश्वराः। तेषां मते पञ्च पदार्थाः—कार्यं कारणं योगो विधिर्मोक्ष इति। तत्र कार्यं महदादिकं सांख्ययोगाभिमतम्। कारणं प्रधानमीश्वरश्च योगाभिमतम्। योगः समाधिः। विधिस्त्रिषवणस्नानादिः। दुखान्तो मोक्ष इति।

शैवदर्शनानि च त्रीणि सम्प्रति दृश्यन्ते—नकुलीशपाशुपतदर्शनं शैवदर्शनं प्रत्यभिज्ञादर्शनञ्चेति। तेषु प्रत्यभिज्ञावादिनो वस्तुतो जीवेश्वरयोरैक्यं मन्यन्त इति त्रिषु श्रेयांसः। नकुलीशपाशुपतास्तु ईश्वरस्य जगत्सृष्टौ कर्मापेक्षित्वं नानुमन्यन्त इति जघन्याः। शैवास्तु ईश्वरस्य वैषम्यनैर्घृण्यदोषपरिहाराय जगत्सृष्टौ कर्मापेक्षित्वमङ्गीकर्तव्यमिति वदन्तः पाशुपतापेक्षयाभ्यर्हिताः। पाशुपतमते ईशः कर्म चेति द्वयं जीवस्य सुखदुःखरूपं फलं ददाति। तत्र ईश्वरस्य फलदाने न कर्मापेक्षा। कर्मणस्तु फलदान ईश्वरापेक्षास्त्येव। तथा च कर्मणो न वैयर्थ्यं नापीश्वरस्य पूर्णस्वातन्त्र्यहानिः। दुःखान्ताय दुःखमूलं पारतन्त्र्यमवश्यं ज्ञेयम्। तथा च स्वतन्त्रास्वतन्त्रभेदेन तत्त्वज्ञानाद् दुःखान्तः। तच्च पाशुपातशास्त्रादेव जायत इति। शैवदर्शने तु प्रकारान्तरेण षट् पदार्थाः प्रदर्शिताः, तेषां तत्त्वज्ञानाद् दुःखान्तः। तथा हि—

पतिविद्ये तथाऽविद्या पशुः पाशश्च कारणम्।
तन्निवृत्ताविति प्रोक्ताः पदार्थाः षट् समासतः॥

प्रत्यभिज्ञादर्शने तु जगत्कारणत्वं न कर्मणोऽचेतनत्वात्। नापि कर्मसापेक्षस्येश्वरस्य जगत्कारणत्वम्, ईश्वरस्य जगदुपादाने कर्मावलम्बित्वे पूर्णस्वातन्त्र्यभङ्गापत्तेः। पूर्णस्वातन्त्र्यं ह्यन्यमुखप्रेक्षित्वाभावः। अतो निरपेक्ष एवेश्वरः स्वेच्छयैवाकाशादिभावान्वितं जगन्निर्मिमीत इति सिद्धम्। आकाशादीन् भावांश्च परमेश्वरः स्वात्मन्येवाभासयति, दर्पणे प्रतिबिम्बवत्। यतश्चेतनाचेतनात्मकं सर्वमिदं जगन्न परमेश्वरापेक्षया पृथग्भूतं, किन्तु तदन्तर्गतमेव। यद्यपि जीवा मिथो भिन्नाः, एवं नानाविधमानमेयादिभिन्नं जगदपि, तथापि परमेश्वरापेक्षया न किञ्चिद् भिन्नम्। अहमीश्वर एव नान्य इत्येवं यः साक्षात्कारः स प्रत्यभिज्ञेत्युच्यते। प्रत्यभिज्ञामात्रेणैव च परापरसिद्धिर्भवति। न तदर्थं बाह्याभ्यन्तरचर्याप्राणायामादिक्लेशः। परसिद्धिर्मुक्तिः। अपरसिद्धिरभ्युदयो देवलोकप्राप्त्यादिः। यथा यथा साक्षात्कारस्तथा

सिद्धिरिति साक्षात्कारानुरोधेन सिद्धितारतम्यमिति। माययान्धः सन्नी-श्वरस्वरूपाज्ञानात् कर्मणा बध्यते संसरति च। नूनमीश्वरोऽहं इत्याकारक-प्रत्यभिज्ञया साक्षात्कृतेश्वरस्वरूपस्तु दृक्क्रियाशक्तिपरिपूर्णो मुक्त इत्युच्यते इति। इदञ्च प्रत्यभिज्ञादर्शनमद्वैतदर्शनमेवानुगच्छति। तथा हि—संविद्रूपः परमशिव एवैषां परं तत्त्वम्। तदेव च मुक्तौ प्राप्यम्। तद्रूपतापत्तिरेव मोक्षः। दीक्षया शक्तिपातेन मलत्रयापगमे शुद्धाध्वप्राप्तिक्रमेण च मोक्षः। अविद्यया बन्धो विद्यया च मोक्ष इत्येभिरपि स्वीक्रियत एवेति। पुराणे-ष्वपि पृथिव्याद्यष्टकस्य शिवमूर्तित्वोपवर्णनेन शिवाद्वैतं सूच्यते। तथा हि—भूमिरापोऽनलो वायुः खमिति भूतपञ्चकम्, सूर्याचन्द्रमसौ द्वौ यजमान-श्चाष्टमः। आभिश्चाष्टाभिरर्चाभिः शिवस्य सर्वात्मकत्वं सर्वोपादानत्वं सर्व-कर्तृत्वं सर्वज्ञत्वञ्चाक्षिप्तं भवति। तथा हि—मायाशक्त्युपहितः शिवः काल-कर्मापेक्षया पञ्चभूतात्मकसर्वजगदाकारेण परिणमतीति स्थितिः। तदुक्तं वाक्यपदीये ब्रह्मकाण्डे—

> अध्याहितकलां यस्य कालशक्तिमुपाश्रिताः।
> जन्मादयो विकाराः षड् भावभेदस्य योनयः॥ इति।

अत्र शब्दब्रह्मणो जगत्सृष्टौ कालापेक्षा दर्शिता। 'वैषम्यनैर्घृण्ये न सापेक्षत्वात्तथाहि दर्शयति' इति वेदान्तसूत्रे च परमेश्वरस्य सृष्टौ कर्मापेक्षा प्रदर्शिता। तत्र परमेश्वरस्य स्वातिरिक्तकालकर्मापेक्षत्वे स्वातन्त्र्यमेव हीये-तेति कालकर्मणी अपि भगवत्कृते भगवद्रूपे एवेति च स्वीक्रियते। तथा हि यजमानरूपेण शिव एव कर्माणि करोति। रविचन्द्ररूपाभ्यां स एव काल-मपि विविधं विदधाति। तयोः सहकारेण च पञ्चभूतात्मकं सर्वं जगल्लीलया निर्मिमीते। तदुक्तम्—'लोकवत्तु लीलाकैवल्यम्' इति ब्रह्मसूत्रे। एतदेव पौराणिकपृथिव्यादिमूर्त्यष्टकोपासनारहस्यम्।

वाक्यपदीये आगमसमुच्चयापरनामधेये ब्रह्मकाण्डे प्रथमे महता संरम्भेण प्रत्यक्षपरोक्षाभ्यामभिधाव्यञ्जनाभ्यां समुपदिष्टः शब्दब्रह्माद्वयवादोऽपि वेदा-न्तिनामद्वैतवादान्न विशिष्यते। तथा हि—तत्र प्रथमं परस्य वाक्तत्त्वस्य ब्रह्मरूपत्वं कालशक्त्युपकृतानिर्वाच्यविविधशक्तिसमाश्रयेण जगद्विवर्तोपा-दानतया जगज्जन्मादिहेतुत्वञ्च सामान्येन प्रकाशितम्—

> शब्दस्य परिणामोऽयमित्याम्नायविदो विदुः।
> छन्दोभ्य एव प्रथममेतद् विश्वं व्यवर्तत॥

(वाक्य०, ब्रह्मका० १२०)

इति कारिकया च शब्दस्य विवर्तोपादानत्वं पूर्वार्धेन, उत्तरार्धेन तु छन्दःशब्दानां निमित्तकारणत्वं च विशेषरूपेणोक्तम् । अत्र कारिकायां पूर्वार्द्धेपरिणामशब्दो लक्षणया विवर्तपरः, शब्दस्य कूटस्थनित्यस्य परिणामासम्भवात् । शब्दस्य कूटस्थनित्यत्वञ्च बहुशो भाष्ये दर्शितम् । यद्वा मायारूपस्वशक्त्युपहितस्य शब्दब्रह्मण उपाधिभूतमायायां जगदाकारपरिणामसम्भवेन शब्दस्य परिणामोऽयमित्युक्तेः सम्भवः । व्याख्याता चेयं कारिका स्वयमेव हरिणा । तथा हि—"यथैवान्ये कार्यकारणभावमाचक्षाणाः कार्येषु कारणधर्मसमन्वयं दृष्ट्वा व्यावृत्तभेदं सूक्ष्ममसंवेद्यं सर्वविकारशक्त्यनुगतं प्रत्यस्तमितव्यक्तिशक्तिरूपमणुग्रामं प्रधानशक्तिसमूहं विद्याकारणं जन्मपरिणामासंसर्गं विवर्तं व्यवस्थापयन्ति तथैवाम्नाये संहृतभोग्यभोक्तृशक्तेर्वागात्मनो बहुधा कारणत्वमाम्नातम् । स उ एवैष ऋङ्मयो यजुर्मयः साममयो वैराजः पुरुषः । पुरुषो वै लोकः । पुरुषो यज्ञः । तस्यैता लोकम्पृणास्तिस्र आहुतयस्ता एव त्र्यालिखिता वै त्रयो लोकाः" इति । अत्र वैराजपुरुषस्य ब्रह्माण्डशरीरस्य ऋङ्मयादित्वोक्त्या शब्दपरिणामत्वमुक्तम् । तथा एष वै छन्दस्यः साममयः प्रथमोक्षन् वैराजः पुरुषो योऽन्नमसृजत । तस्मात्पशवोऽन्वजायन्त । पशुभ्यो वनस्पतयो वनस्पतिभ्योऽग्निः । तस्मादाहुर्न दारुपात्रेण दुह्यादग्निर्वा एव दारुपात्रम् । तस्मान्न दारुपात्रेण दुह्यते इति । अत्रापि वैराजपुरुषस्य सर्वलोकात्मकस्य ब्रह्माण्डशरीरस्य साममयत्वोक्त्य शब्दप्रभवत्वं प्रदर्श्य तस्माद् व्रीहियवादिरूपान्नसृष्टिक्रमेण पश्वादिसृष्टिपरम्परा प्रदर्शिता । तथा—"ऋग्वर्णः खल्वपि—इन्द्राच्छन्दः प्रथमं प्रास्यदन्नं तस्मादिमे नामरूपे विषूची । नाम प्राणाच्छन्दसो रूपमुत्पन्नमेकं छन्दो बहुधा चाकशीति ॥ इति । अत्र परमैश्वर्यसम्पन्नं परं वाक्तत्त्वम् इन्द्रशब्दार्थः । छन्दःपदेन च प्रथमं कार्यं महत्तत्त्वाख्यं समष्टिरूपं बुद्धितत्त्वम् । स्वस्मिन् अव्याकृतयोर्नामरूपयोश्छादकत्वात् । महत्तत्त्वाच्च नामरूपयोः सृष्टिरुक्ता मार्गभेदेन । तत्र प्राणं द्वारीकृत्य तत्तत्स्थानाभिघातपुरःसरं नामसृष्टिरुक्ता । इन्द्रियञ्च द्वारीकृत्य रूपसृष्टिरत्राभिप्रेता, अन्यत्र तथैवोक्तत्वात् । दर्शिता च ब्रह्मकाण्डे वाक्यपदीये हरिणा शब्देष्वेवाश्रिता शक्तिरिति ११८ कारिकाव्याख्यावसरे – "इन्द्रियं द्वारीकृत्य बुद्धितत्त्वाद् विषयाणामुत्पत्तिः' इति । अथापरोऽपि मन्त्र आह—वागेव विश्वा भुवनानि जज्ञे वाच इत् सर्वममृतं यच्च मर्त्यम् । अथेद् वाग् बुभुजे वागुवाच पुरुत्राः वाचो न परं यच्चनाह ॥ इति । अत्र परस्य वाक्तत्त्वस्यैव विश्वभुवनरूपेण जन्म, वाचो नित्यानित्यजगदात्मकत्वम् । वाच एवात्मरूपतया भोक्तृत्वं वक्तृत्वं च

सर्वस्यैव वक्तव्यस्यार्थस्य वाच्यन्तर्भावश्चोक्तः। वाचः सर्वोपादानत्वाद् वाच एव नित्यस्याप्यर्थस्य कल्पिताकारोपादानत्वाच्च। पुराकल्पोऽपि वाचः सर्वोपादानत्वं सर्वात्मकत्वं चाह। तद्यथा—

विभज्य बहुधाऽऽत्मानं स छन्दस्यः प्रजापतिः।
छन्दोमयीभिर्मात्राभिर्बहुधैव विवेश तम् ॥ १ ॥
साध्वी वाग् भूयसी येषु पुरुषेषु व्यवस्थिता।
अधिकं वर्तते तेषु पुण्यं रूपं प्रजापतेः ॥ २ ॥
प्राजापत्यं महत्तेजस्तत् पात्रैरिव संवृतम्।
शरीरभेदे विदुषां स्वां योनिमुपधावति ॥ ४ ॥
यदेतन्मण्डलं भास्वद् धाम चित्रस्य राधसः।
तद्भावमभिसम्भूय विद्यायां प्रविलीयते ॥ ४ ॥ इति।

शब्दस्य च द्वे रूपे अभिहिते वाक्यपदीये—एकं नित्यं निरवयवं संहृतक्रमं वाचकं स्फोटाख्यम्। यत् स्थानभेदेन चतुर्धाऽभिधीयते।

परा वाङ् मूलचक्रस्था पश्यन्ती नाभिसंस्थिता।
हृदिस्था मध्यमा ज्ञेया वैखरी कण्ठदेशगा ॥ इति।

तद्यथा—व्याकरणं तु पश्यन्त्यादित्रयस्यैव ज्ञापकम्, न तु परस्या वाचः। तस्या लोकबुद्ध्यगोचरत्वेन लोक-व्यवहारातीतत्वात्। तदुक्तम्—

वैखर्या मध्यमायाश्च पश्यन्त्याश्चैतदद्भुतम्।
अनेकतीर्थभेदायास्त्रय्या वाचः परं पदम् ॥
(वाक्य० ब्रह्म० १४४) इति।

अत्रैतत् पदेन व्याकरणमुच्यते। द्वितीयं तु प्राणवायोर्विवक्षाजनितप्रयत्नेनोर्ध्वं प्रेरितस्य तत्तत्स्थानकरणाभिघातेन जायमानं ध्वनिरूपं प्रथमस्य व्यञ्जकम्। तदुक्तम्—

द्वावुपादानशब्देषु शब्दौ शब्दविदो विदुः।
एको निमित्तं शब्दानामपरोऽर्थे प्रयुज्यते ॥
(वाक्य० ब्रह्म० ४४) इति।

नित्यं च वाक्तत्त्वं स्फोटाख्यं प्राकृतध्वनिभिर्व्यज्यमानं तद्धर्मैः कत्वादिभिर्ह्रस्वत्वदीर्घत्वादिभिश्च रूपितं जायमानमिव अक्रमञ्च सक्रममिव वैकृतध्वनिसंसर्गेण च कालानवच्छिन्नमपि द्रुतादिवृत्तिमदिव अवभासते। तदुक्तं संग्रहे—

स्फोटस्य ग्रहणे हेतुः प्राकृतो ध्वनिरिष्यते ।
वृत्तिभेदे निमित्तत्वं वैकृतः प्रतिपद्यते ॥

इदं च समुद्धृतं वाक्यपदीयटीकायां हरिणा ।

स्वभावभेदान्नित्यत्वे ह्रस्वदीर्घप्लुतादिषु ।
प्राकृतस्य ध्वनेः कालः शब्दस्येत्युपचर्यते ॥
(वाक्य० ब्रह्म० ७६) इति ।

इदञ्च शब्दतत्त्वमग्न्यादित्यचन्द्रादीनां ज्योतिषां तत्प्रकाशकस्य ज्ञानस्यापि च वृत्तिरूपस्य प्रकाशकम् । तदुक्तम्—

वाग्रूपता चेदुत्क्रामेदवबोधस्य शाश्वती ।
न प्रकाशः प्रकाशेत सा हि प्रत्यवमर्शिनी ॥
(वाक्य० ब्रह्म० १२४)

सर्वेषां बहिरन्तरवस्थितानां ज्योतिषामपि प्रकाशकत्वादिदं शब्दतत्त्वं परब्रह्मैव । तदुक्तम्—

सैषा संसारिणां संज्ञा बहिरन्तश्च वर्तते ।
तन्मात्रामप्यतिक्रान्तं चैतन्यं सर्वजन्तुषु ॥
(वाक्य० ब्रह्म० १२६) इति ।

व्याख्यातञ्च हरिणा—योऽयं चैतन्ये वाग्रूपताऽनुगमस्तेन लोके ससंज्ञो विसंज्ञ इति व्यपदेशः क्रियते ।

एवं ह्याह—

अर्थक्रियासु वाक् सर्वान् समीहयति देहिनः ।
तदुत्क्रान्तौ विसंज्ञोऽयं दृश्यते काष्ठकुड्यवत् ॥ इति ।

अन्तःसंज्ञानामपि सुखदुःखसंविन्मात्रा यावद् वाग्रूपताऽनुवृत्तिस्तावदेव भवति । बहिःसंज्ञेषु तन्निबन्धनो लोकव्यवहारस्तदभावान्नियतमुत्सीदेत् । नहि सा चैतन्येनानाविष्टा जातिरस्ति यस्यां स्वपरसंबोधो यो वाचा नानुगम्यते । तस्माच्चितिक्रियारूपमलब्धवाक्शक्तिपरिग्रहं न विद्यते । वाक्तत्त्वरूपमेव चितिक्रियारूपमित्यन्ये । तथा हि—

भेदोद्ग्राहविवर्तेन लब्धाकारपरिग्रहा ।
आम्नाता सर्वविद्यासु वागेव प्रकृतिः परा ॥ १ ॥
एकत्वमनतिक्रान्ता वाङ्नेत्रा वाङ्निबन्धनाः ।
पृथक्प्रत्यवभासन्ते वाग्विभागा गवादयः ॥ २ ॥

षड्द्वारां षडधिष्ठानां षट्प्रबोधां षडव्ययाम् ।
ते मृत्युमतिवर्तन्ते ये वै वाचमुपासते ॥ ३ ॥ इति ।

तदेवं शब्दाद्वयवादो नाद्वैतवेदान्तिनां ब्रह्माद्वयवादमतिशेते ।

वेदान्तदर्शनेषु ब्रह्मसूत्राणां व्याख्याविशेषमूलकं पूर्णप्रज्ञदर्शनमप्येकम् । तथा हि—"स आत्मा तत्त्वमसि श्वेतकेतो" इत्यादिवेदान्तवाक्यजातस्य भङ्ग्यन्तरेणार्थान्तरपरत्वमुपपाद्य ब्रह्ममीमांसाविवरणव्याजेनानन्दतीर्थः प्रस्थानान्तरमास्थिपत । तन्मते च द्विविधं तत्त्वं स्वतन्त्रास्वतन्त्रभेदात् । तदुक्तं तत्त्वविवेके—

स्वातन्त्र्यमस्वातन्त्र्यञ्च द्विविधं तत्त्वमिष्यते ।
स्वतन्त्रो भगवान् विष्णुर्निर्दोषोऽशेषसद्गुणः ॥ इति ।

अस्वतन्त्रञ्च तदितरच्चराचरम् । जीवेश्वरयोश्च भेद एव, नाभेदः । तत्त्वमस्यादिश्रुतयस्तु नैकत्वप्रतिपादनपराः, किन्तु तयोर्बुद्धिसारूप्यम्, शरीररूपैकस्थाननिवेशित्वं हृदयादिरूपाभिव्यक्तिस्थानैक्यमपेक्ष्य वा प्रवृत्ताः । तथा च परमा श्रुतिः—

जीवस्य परमैक्यञ्च बुद्धिसारूप्यमेव वा ।
एकस्थाननिवेशो वा व्यक्तिस्थानमपेक्ष्य वा ॥
न स्वरूपैकता तस्य मुक्तस्यापि विरूपतः ।
स्वातन्त्र्यपूर्णतेऽल्पत्वपारतन्त्र्ये विरूपता ॥ इति ।

किञ्च एकमेवाद्वितीयं ब्रह्मेत्यादयः श्रुतयस्तु अस्मिन् ग्रामेऽयमेक एवाद्वितीयः पुरुष इतिवत्सजातीयभेदं वारयन्ति । किञ्च प्रत्यक्षादिप्रमाणसिद्धो भेद इति तद्बलेन तत्त्वमस्यादिश्रुतेः 'आदित्यो यूपः' इत्यादिवदन्यार्थपरत्वमेव युक्तम् । तथा हि सर्वविधप्रत्यक्षसिद्धो भेद इति नापलपितुं शक्यते । अनुमानेनाऽपि भेदोऽवसीयते । परमेश्वरो जीवाद्भिन्नः, तं प्रति सेव्यत्वात्, यो यं प्रति सेव्यः स तस्माद् भिन्नः, यथा भृत्याद् राजा इति । नहि 'सुखं मे स्याद् दुःखं मे न मनागपि' इति पुरुषार्थमर्थयमानाः पुरुषाः स्वपतिपदं कामयमानाः सत्कारभाजो भवेयुः, प्रत्युत सर्वानर्थभाजनं भवन्ति । तदाह—

घातयन्ति हि राजानो राजाऽहमितिवादिनः ।
ददत्यखिलमिष्टञ्च स्वगुणोत्कर्षवादिनाम् ॥ इति ।

एवं ज्ञेयत्वादिनाऽपि भेदोऽनुमातव्यः । तथा श्रुत्यापि भेदोऽवगन्तव्यः । तथा च श्रुतिः—"सत्यमेतमनुविश्वे" इत्यादिकमुपक्रम्य "सत्य आत्मा

सत्यो जीवः सत्यं भिदा सत्यं भिदा मयि वारुण्यो मयि वारुण्यः'' इति। "इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः'' इति स्मृतिः। 'जगद्व्यापार-वर्जम्' इत्यादिसूत्राणि च भेदप्रख्यापकाणि। 'ब्रह्मविद् ब्रह्मैव भवति' इति श्रुतिस्तु—"संपूज्य ब्राह्मणं भक्त्या शूद्रोऽपि ब्राह्मणो भवेत्'' इतिवत्।

प्रपञ्चो यदि वर्तेत निवर्तेत न संशयः।
मायामात्रमिदं द्वैतमद्वैतं परमार्थतः॥

इति वचनन्तु यद्ययं प्रपञ्चो वर्तेत उत्पद्येत तर्हि निवर्तेत न संशयः। तस्मादनादिरेवायं प्रकृष्टः पञ्चविधो भेदप्रपञ्चः। इदं द्वैतं मायामात्रम्। मायेति भगवदिच्छा उच्यते प्रज्ञप्तिश्च। अद्वैतं समाभ्यधिकशून्यं विष्णु-तत्त्वमेव परमार्थतः, विष्णुसमाभ्यधिकल्पनारूपा द्वैतकल्पना तु अपरमार्था इति। तथा च परमा श्रुतिः—

जीवेश्वरभिदा चैव जडेश्वरभिदा तथा।
जीवभेदो मिथश्चैव जडजीवभिदा तथा॥
मिथश्च जडभेदो यः प्रपञ्चो भेदपञ्चकः।
सोऽयं सत्योऽप्यनादिश्च सादिश्चेन्नाशमाप्नुयात्॥
न च नाशं प्रयात्येष न चासौ भ्रान्तिकल्पितः।
कल्पितश्चेन्निवर्तेत न चासौ विनिवर्तते॥

द्वैतं न विद्यते इति तस्मादज्ञानिनां मतम्। एकविज्ञानेन सर्वविज्ञानञ्च विष्णोः प्रधानत्वकारणत्वादिना युज्यते न तु सर्वमिथ्यात्वेन। यथा प्रधान-पुरुषाणां ज्ञानाज्ञानाभ्यां ग्रामो ज्ञातोऽज्ञात इत्येवमादिव्यपदेशो दृष्टः। यथा च कारणे पितरि ज्ञाते जानात्यस्य पुत्रम्, एवं मृत्पिण्डेन ज्ञातेन सर्वं मृण्मयं जानाति। वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यमिति श्रुतेरप्ययमाशयः। यस्य नाम्नो वाचारम्भणं बहिः सदपि वाचा बुद्धौ प्रकल्पिताकारं मृदादिकं विकारस्तदविकृतं नित्यं नामधेयं मृत्तिकेत्यादिकमित्येतद् वचनं सत्यमिति। 'अथातो ब्रह्मजिज्ञासा' इति सूत्रार्थस्तु—अथशब्दो मङ्गलार्थः, ब्रह्मजिज्ञासा मङ्गलमिति। यद्वाऽधिकारार्थः। लक्षणया ब्रह्मविचाररूपाया जिज्ञासाया अधिक्रियमाणत्वसंभवात्। आनन्तर्यार्थो वा, श्रवणानन्तरं मननात्मिका ब्रह्मविचाररूपा ब्रह्मजिज्ञासा कर्तव्या इति। अतःशब्दो हेत्वर्थः। यतो नारायणप्रसादमन्तरेण न मोक्षो लभ्यते, प्रसादश्च न ज्ञानमन्तरेण, अतो ब्रह्मजिज्ञासा कर्तव्येति। जिज्ञास्यब्रह्मणो लक्षणमुक्तम्—जन्माद्यस्य यत इति। सृष्टिस्थित्यादि यतो भवति तद् ब्रह्मेति वाक्यार्थः।

तत्र प्रमाणमप्युक्तम्—"शास्त्रयोनित्वात्' इति। शास्त्रं योनिर्ज्ञापकं यस्येति बहुव्रीहिः। शास्त्रस्य तत्र प्रामाण्यमुपपादितम्—'तत्तु समन्वयात्' इति। शास्त्रस्वरूपन्तु स्कान्दे उक्तम्—

ऋग्यजुःसामाथर्वञ्च भारतं पाञ्चरात्रकम्।
मूलरामायणञ्चैव शास्त्रमित्यभिधीयते॥
यच्चानुकूलमेतस्य तच्च शास्त्रं प्रकीर्तितम्।
अतोऽन्यो ग्रन्थविस्तारो नैव शास्त्रं कुवर्त्म तत्॥ इति।

दिङ्मात्रमत्र प्रदर्शितं विस्तरस्तु आनन्दतीर्थभाष्यादौ द्रष्टव्यः।

गौडीयं वेदान्तदर्शनं तु सर्वेभ्यो वेदान्तदर्शनेभ्योऽर्वाचीनम्। अस्य च प्रस्थानस्य मूलभूतं व्याससूत्रेषु गोविन्दभाष्यम्। तन्मतन्तु—जीवस्य स्वज्ञानपूर्वकं यत् सर्वेश्वरस्य पुरुषोत्तमस्य स्वरूपतो गुणतश्च परिज्ञानं ततो मुक्तिः। तदुक्तम्—

"ज्ञात्वा देवं सर्वपाशापहानिः क्षीणैः क्लेशैर्जन्ममृत्युप्रहाणिः।
तस्याभिध्यानात्तृतीयं देहभेदे विश्वैश्वर्यं केवलमाप्तकामः॥" इति।
यदा तत्त्वेन तु ब्रह्मतत्त्वम्, दीपोपमेनेह युक्तः प्रपश्येत्।
अजं ध्रुवं सर्वतत्त्वैर्विशुद्धम्, ज्ञात्वा देवं मुच्यते सर्वपाशैः॥ इति च।

अत्र प्रथममन्त्रे—तस्य देवस्याभिध्यानात्संकल्पाद् भक्तस्य देहभेदे लिङ्गशरीरप्रध्वंसे सति स देवश्च आप्तकामश्चान्द्रब्राह्मपदापेक्षया तृतीयं भागवतं पदं विन्दतीति शेषपूरणेन तृतीयपादार्थः। द्वितीयमन्त्रे तु—दीपोपमेनात्मतत्त्वेन स्वज्ञानेन युक्तो मुमुक्षुर्यदा ब्रह्मतत्त्वं प्रपश्येत् तदा देवं ज्ञात्वा सर्वपाशैर्मुच्यते इति योजना। देवस्य च विशेषणानि—अजं ध्रुवं सर्वतत्त्वैर्विशुद्धमिति। अजं जन्मादिविकारशून्यम्, ध्रुवं कूटस्थनित्यम्। सर्वतत्त्वैर्विशुद्धम्, प्रधानादितत्त्वैरस्पृष्टम्। तत्र भगवतः स्वरूपं विग्रहश्च विज्ञानानन्दः। विज्ञानमानन्दं ब्रह्म, आनन्दो ब्रह्मेति व्यजानात्, रसो वै स इत्यादिश्रवणात्। तच्च भगवत्स्वरूपमैश्वर्यात्मिकं शक्त्यात्मकञ्च। मायाख्यया परया शक्त्या च बुद्धिमनोऽङ्गप्रत्यङ्गरहितोऽपि तद्वानिव लक्ष्यते। ज्ञानानन्दविग्रहत्वन्तु तस्य श्रुतिमात्रेण गम्यम्, न तु तर्केण, अचिन्त्यालौकिकवस्तुत्वात्। तदुक्तं भगवता सूत्रकृता—"अरूपवदेव हि तत्प्रधानत्वात्" (ब्र० सू० ३–२–१४) इत्यत्राधिकरणे गुणाश्च भगवतः सत्यकामत्वसत्यसंकल्पत्वादयो ज्ञानानन्दादयश्चानन्ताः, तेषां च भगवतोऽभिन्नानामपि

जलकल्लोलवद् भेदव्यपदेशः । तदुक्तं सूत्रकृता—"उभयव्यपदेशात्त्वहि-कुण्डलवत्" ( ब्र० सू० ३-२-२८ ) । तस्मिंश्च भगवति स्वगतसजातीयभेदौ न स्तः, विजातीयभेदस्त्वस्त्येव, द्वा सुपर्णा इत्यादिश्रुत्या द्वाविमौ पुरुषौ इत्यादिस्मृत्या च भेदस्य सिद्धत्वात् । यद्यपि ज्ञानं कर्म भक्तिश्चेति त्रयं निःश्रेयसोपायस्तथापि ज्ञानभक्त्योरेव समुच्चितयोः साक्षान्निःश्रेयसहेतुत्वम्, कर्मणस्तु चित्तशुद्धिद्वारा तद्धेतुत्वम् । ह्लादसंविदोरभिन्नयोः सारो रतिः प्रेमाख्या भक्तिरिति च तस्या लक्षणम् । एषा खलु भक्तिरहैतुक्येव मुक्तिं साधयति, नान्या । अहैतुकी निष्कामा । ऐश्वर्यमाधुर्यभेदेन च भगवतो रूपं द्विविधमिति तज्ज्ञानमपि द्विविधम्—तत्र श्रीयशोदाया ऐश्वर्यज्ञानम्; तद्यथा—

किं स्वप्न एतदुत देवमाया किं वा मदीयो ननु बुद्धिमोहः ।
अथो अमुष्यैव ममार्भकस्य यः कश्चनौत्पत्तिक आत्मयोगः ॥

इति मृद्भक्षणावसरे मुखव्यादाने । श्रीवसुदेवस्य वा—"युवां न नः सुतौ साक्षात्प्रधानपुरुषेश्वरौ" इति । अर्जुनस्य—"सखेति मत्वा प्रसभं यदुक्तम्"इति । माधुर्यज्ञानन्तु श्रीराधायाः, तद्यथा भागवते दशमे भ्रमर-मुद्दिश्य श्रीराधावाक्यम्—

मृगयुरिव कपीन्द्रं विव्यधे लुब्धधर्मा
स्त्रियमकृतविरूपां स्त्रीजितः कामयानाम् ।
बलिमपि बलिमत्त्वाऽवेष्टयद्ध्वाङ्क्षवद्य-
स्तदलमसितसख्यैर्दुस्त्यजस्तत्कथार्थः ॥ इति ।

सर्वासाञ्च व्रजगोपिकानाम्—

धन्या अहो अमी आल्यो गोविन्दाङ्घ्र्यब्जरेणवः ।
यान् ब्रह्मेशो रमा देवी दधुर्मूर्ध्नाऽघनुत्तये ॥ इति ।

( भाग० दशम० )

ये च लोके महादोषत्वेन कीर्तिताः संमुग्धत्वादयोऽष्टादश; यथाहि—

मोहस्तन्द्रा भ्रमो रूक्षरसता काम उल्वणः ।
लोलता मदमात्सर्ये हिंसाखेदपरिश्रमाः ॥
असत्यं क्रोध आकाङ्क्षा आशङ्का विश्वविभ्रमः ।
विषमत्वं परापेक्षा दोषा अष्टादशोदिताः ॥ इति ।

ते भगवति महागुणत्वं गता लोकानुग्रहहेतुत्वात्। तथा हि—मुग्धताऽऽशङ्काभ्यामैश्वर्यसेविनां वितर्कविस्मयरसोदयः, माधुर्यसेविनान्तु तत्प्रबोधनादिरसः। लोलतामदाभ्यां सवयसां नियुद्धादिक्रीडा, सुभ्रुवां तु स्मराहववृद्धिः। तन्द्राखेदश्रमा भृत्यानां सेवानन्दविवर्धनाः, मात्सर्यक्रोधहिंसाभिरसतां विनाशात् ताः सद्रक्षा एव। भ्रमलोलताभ्यां पितृवर्गकौतुकाभिवृद्धिः। असत्येन क्वचित्सवयसां सुभ्रुवाञ्च कोपोदयेन तत्तद्रसाभिवृद्धिः। विश्वविभ्रमेण प्रकृतिलीनजीवमात्रानुग्रहः। विषमत्वपरापेक्षाऽऽकाङ्क्षाभिः सर्वभक्तानुग्रह इति। एतेषां भगवति गुणत्वादेव भगवान् निर्दोषपूर्णगुणः स्मर्यते। त एते मौग्ध्यादयो भगवति स्वरूपशक्तिसारभूतलीलानन्दात्मका एव स्वरूपानतिरेकिनखरकुन्तलादिवन्मन्तव्याः। तदेवमैश्वर्यमाधुर्यविषयत्वेन भगवतो ज्ञानं द्विविधम्। तद्द्वारिका भक्तिरपि द्विविधा। तत्राद्या विधिभक्तिः।

अत्र विधिर्भगवन्माहात्म्यप्रतिपादकं शास्त्रमुच्यते। तया सिद्धाः सनिष्ठा दम्राश्चार्ऽचिरादिमार्गेण परं पदं लभन्ते। ये तु आर्ता हरिं विना क्षणमात्रमपि स्थातुमशक्ता अत एव तदतिकृपार्द्रास्ते खलु भगवतैव तार्क्ष्यवाहनेन नीतास्तद्धाम विशन्ति इति। द्वितीया तु रुचिभक्तिः। तया सिद्धास्तु स्वयं भगवतैव तद्विशन्ति। यत एते तस्यातिप्रेष्ठाः। तदेवं विविधज्ञानभक्तिगोचरः कृष्णाभिधानः पुरुषोत्तमः कृत्स्नशक्तिव्यञ्जी स्वयं भगवान् उच्यते। अकृत्स्नतद्व्यञ्जी द्व्येकतद्व्यञ्जी च विलासोंऽशः कला चेति 'एते चांशकलाः पुंसः कृष्णस्तु भगवान् स्वयम्' इति पुराणवचनात्। गौतमीये तन्त्रे च श्रीकृष्णस्य भगवतस्तच्छक्तिभूतायाः श्रीराधायाश्च तत्त्वत्रयरूपत्वं कार्यत्वकारणत्वतदुभयपरत्वरूपैरुक्तं भगवता स्वयं श्रीबलदेवं प्रति—

> सत्त्वं तत्त्वं परत्वं च तत्त्वत्रयमहं किल।
> त्रितत्त्वरूपिणी सापि राधिका मम वल्लभा॥
> प्रकृतेः पर एवाहं सापि मच्छक्तिरूपिणी॥ इति।

भगवतस्तु बैकुण्ठाख्यं धाम नित्यम्, अप्राकृतत्वात्। तदुक्तं पाद्मे—'बैकुण्ठभुवने नित्ये निवसन्ति महोज्वला' इति। सूत्रकृता श्रीव्यासेनापि—'अन्तराभूतग्रामवत् स्वात्मनः, इत्यत्र बैकुण्ठाख्यं धाम ब्रह्मात्मकत्वेन वर्णितम्। तदुपरि द्वावंती पुरी, तदुपरि मधुपुरी, तदुपरि गोकुलमित्येवं भगवद्धामस्थितिक्रमव्यवस्था। भगवतो लीला तु द्विविधा—स्वरूपेण

चिच्छक्त्या च कृता लीला सनातनी। तेन प्रकृतिकालाभ्यां च कृता तु लीला कादाचित्की। सा च सर्गादौ दैत्यवधादिरूपैव स्यात्। तदेवमैश्वर्य-माधुर्यौदार्यादिगुणरत्नाकरस्य नित्यधामादेः पुरुषोत्तमस्य पूर्णाविर्भावे स्वयं भगवच्छब्दोदितस्यापूर्णाविर्भावे तु विलासांशादिशब्दबोध्यस्य तस्यैश्वर्य-माधुर्यविषयतया द्विविधेन ज्ञानेन जायमाना विधिप्रवृत्ता रुचिप्रवृत्ता चेति द्वेधा भक्तिः साधनरूपा साध्यरूपा च। सैवात्यन्तिकयोः सुखदुःख-परिहारयोः सिद्धौ हेतुः। तदिच्छयैव तस्यां ते ते जीवाः प्रवर्तन्ते, तेषूत्तरे श्रेष्ठा इति दर्शितं भगवता सूत्रकृता—"छन्दत उभयाविरोधात्, गते-रर्थवत्त्वमुभयथाऽन्यथा हि विरोधः" इत्यादिसूत्रेषु। व्याख्यातञ्चैतद् गोविन्दभाष्ये। सुबालोपनिषदि च तमःशब्दितसूक्ष्मशक्तिकात्पुरुषाद् ब्रह्माण्डं जातम्, तस्मिन् सहस्रशीर्षाख्यपुरुषवपुषा स एवाविर्भूतः, तस्माद् ब्रह्मरुद्रादिसृष्टिरभूदिति श्रूयते। तथा च परस्य भगवतः परमकारणत्वं सर्वान्तर्यामित्वं च। तस्माद् ब्रह्मरुद्रयोरुत्पत्तिः, रुद्राद् ब्रह्मणो भीतिः, रुद्र-स्यानपहतपाप्मत्वञ्च अवगम्यते। अनपहतपाप्मा वा अहमस्मि' इति सृष्टि-प्रकरणे शतपथे श्रवणात्। न चैवं विष्णोः श्रूयते। तस्मात्सर्वेश्वरो विष्णुश्चौरेषु मिलितो राजेव जगत्कार्याय देवेषु प्रविष्टः, तस्य स्वेच्छयाऽभिव्यक्तिर्जन्मेत्य-भिधीयते। तच्च दिव्यमिति ज्ञानाद् नृणां जन्मनिवृत्तिरिति श्रीभगवताऽभि-हितम्—जन्म कर्म च मे दिव्यमित्यादि। तस्मात् त्रिमूर्तिमध्येऽवतीर्णो विष्णुः साक्षात्सर्वेश्वर इति सिद्धम्। किञ्चाप्राकृतानन्तगुणरत्नाकरो हरिः साक्षा-त्परम्परया वा अपारोक्ष्येण वा सर्ववेदवाच्यः। यानि तु निर्गुणब्रह्मप्रति-पादकवाक्यानि तानि हरौ प्राकृतगुणनिषेधपराणि। किञ्च स वेदः कृष्णादिशब्दैः सर्वस्याश्रयभूतं शुद्धं विभु चैतन्यं प्रतिपादयति। जीवप्रकृति-कालादिशब्दैस्तु चिज्जडात्मकमाश्रितमिति। "यतो वाचो निवर्तन्ते, यद्वाचाऽनभ्युदितम्" इत्यादिवचनानि तु भगवतः साकल्येन वाच्यत्वं निषेधन्ति, न तु सर्वथैवावाच्यत्वं वदन्ति, 'सर्वे वेदा यत्पदमामनन्ति' इत्यादिश्रुतिविरोधात्। साकल्येनावाच्यत्वञ्चानन्तगुणत्वात्। तथा चायं गौडीयवेदान्तदर्शनकृतान्तसंग्रहः—ज्ञानस्वरूपो ज्ञाताऽहमर्थश्चात्मा कर्तृ-त्वादिमान्। स चेशो जीवश्चेति द्विविधः। तत्रेशो विभुः स्वद्वारा जगत्कर्ता, स्वायत्तवृत्तिकप्रकृतिद्वारा तु तदुपादानञ्चेति 'प्रकृतिश्च प्रतिज्ञादृष्टान्ता-नुपरोधात्' इत्यादिकात् सूत्रपञ्चकात् तद्भाष्यपञ्चकाच्चावसीयते। प्रकृतिजीवरूपात्प्रपञ्चात् तदाश्रयस्येशस्य भेदस्त्वानन्दमयाद्यधिकरणेभ्यः सिद्धः। जगज्जन्मादिहेतुत्वञ्च ब्रह्मणः स्वरूपलक्षणम्। तच्च दर्शितम्—

"जन्माद्यस्य यतः" इति सूत्रेण। जगच्च परमार्थतः सत्यम्। जीवस्त्वणुः।

बालाग्रशतभागस्य शतधा कल्पितस्य च।
भागो जीवः स विज्ञेयः स चानन्त्याय कल्पते॥

इत्यादिश्रुतिभ्यः। परमार्थतो बहुत्वञ्च जीवस्य।

ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः।
तेषामादित्यवज्ज्ञानं प्रकाशयति तत्परम्॥ इति।

'इदं ज्ञानमुपाश्रित्य' इत्यादिषु विध्वस्ततमसां भगवत्साम्यभाजां बहुत्वाभिधानात्। ज्ञानस्वरूपस्यापि तस्य ज्ञानगुणकत्वं स्वीकार्यम्। "यो विज्ञाने तिष्ठन् मन्ता बोद्धा कर्त्ता विज्ञानात्मा पुरुषः" इति श्रुतेः। अत्र प्रथमवाक्यस्य योऽन्तर्यामी विज्ञाने चिदेकधातौ जीवे तिष्ठन् तदन्तर्यमयतीत्यर्थः। द्वितीयवाक्ये तु विज्ञानात्मा इत्यनेन चिदेकधातुत्वम्, बोद्धा इत्यनेन तु विज्ञातृत्वमुक्तम्। किन्तु स ज्ञानरूपो गुणस्तस्य नित्यः, नहि विज्ञातुर्विज्ञातेर्लोपो विद्यत इत्यादिश्रुतेः। इत्थञ्चेशतुल्योऽपि स्वरूपसामर्थ्याभ्यामल्पीयस्त्वेनोपसर्जनत्वात् तादृशोऽसौ भण्यत इत्यंशाधिकरणे तद्भाष्ये च विवृतम्। तदेवं नित्यज्ञानादिगुणकमणु चैतन्यं जीवस्वरूपम्। तदेवं ब्रह्मवदनादिसिद्धोऽपि ज्ञानात्मा जीवस्तद्भिन्नोऽपि तच्छक्तिरूपत्वात्तदंशो निगद्यते। तस्य तदंशभूतस्य स्वांशिभगवद्वैमुख्यान्मायया परिभवस्तत्सांमुख्ये तु सा विलीयते। तत्स्वरूपसाक्षात्कारश्च सदा स्फुरति। तद्वैमुख्यञ्चानादिकालिकमपि सत्सङ्गाद् विनश्यति साम्मुख्यञ्चाविर्भवति। सत्सङ्गविशुद्धे जीवे ज्ञानानन्दात्मकभगवत्स्वरूपावरकाविद्याविशेषविनाशात्मा वेदान्तजन्यभगवद्विषयकमानसापरोक्षप्रागभावविनाशात्मा वा भगवत्सम्बन्धः। स एष सत्सङ्गहेतुकाद् भगवत्प्रसादशब्दितात् तत्साम्मुख्यादेव भवति। ततो विरतोऽनुवृत्त्या जीवं प्रति भगवद्गुणावरकोऽविद्याविशेषो विनश्यति। ततस्तम् असौ साक्षात्करोतीति द्वयोरविद्ययोर्ध्वंसो विमोक्षः। तद्ध्वंसश्च कार्योऽपि नित्यः, अभावरूपत्वात्। एवञ्च दुःखहानिसुखलाभरूपो मोक्षः। किंच दुःखाभावोऽपि आत्मनिष्ठः सन् पुरुषार्थः, न तु स्तम्भादिनिष्ठः। तदेवं सर्वेश्वरस्य भगवतः श्यामसुन्दरस्य जीवजडात्मकात् प्रपञ्चाद् भेदः, तज्ज्ञानभक्तिभ्यां जीवस्यात्यन्तिकदुःखहानिसुखप्राप्तिसम्भव इति कृत्स्नं वेदान्तशास्त्रं जीवेशभेदपरम्। तत्र यान्यभेदपराणीव वाक्यानि कानिचित्प्रतीयन्ते तानि क्वचित्तन्मात्रायत्तवृत्तिकतया तन्निष्ठतया तद्व्याप्यतया वा विश्वं तदात्मकमिति बोधयेयुः। क्वचिज्जीवेशयोः स्थाने-

क्यात्मत्यैक्याच्चाभेदं बोधयन्ति । क्वचिच्छक्तेर्जीवजडरूपायाः शक्तिमतः परेशादनन्यत्वादभेदमाहुः, क्वचिच्च भगवदाविर्भावेषु प्रतीतेः स्वगतभेदं निवारयन्तीति । एषु च स्थूलदृष्ट्या प्राङ्निरूपितेषु वेदान्तदर्शनेषु सप्तसु यद्यपि सन्त्यवान्तराणि बहूनि मतानि, तद्यथा—भर्तृप्रपञ्चमतम्, भट्ट-भास्करमतम्, अन्यानि च सिद्धान्तलेशे सङ्गृहीतानि; तथापि काल-सङ्कोचाद् बिभ्यता समुपेक्षितानीति ।

तदेवमद्वैतादिगौडीयान्तेषु सप्तस्वेषु वेदान्तदर्शनेषु उपनिषदो ब्रह्म-सूत्राणि गीताशास्त्रं चेति प्रस्थानत्रयं मूलम् । सर्वेष्वपि चैषु दर्शनेषु भक्ति-र्ज्ञानं कर्म चेति मुक्तिप्राप्त्यै प्रस्थानत्रयं निर्दिष्टम् । तत्रापि चाधिकारिभेदेन रुचिभेदेन च ज्ञानकर्मभक्तीनां समुच्चितानां समं प्राधान्यम् । सोऽयं वैष्णवानां ज्ञानकर्मसमुच्चयवादः, भक्तेरपि ज्ञानपर्यवसायित्वात्, तत्प्रयुक्तभगवत्सेवा-रूपव्यापारस्य च कर्मरूपत्वात् । अद्वैतवादिनां तु—अद्वितीयात्मविज्ञान-मेवैकं मुक्त्यै प्रभवति । भेदज्ञानसापेक्षस्य कर्मणस्तु न तदानीं सम्भवः, अद्वितीयात्मविज्ञानेन भेदज्ञानस्योपमर्दनात् । कर्म तु चित्तशुद्धिद्वारा ज्ञानस्य साधनम्, भक्तिरपि तथैव ।

भक्त्या मामभिजानाति यावन्यश्चास्मि तत्वतः ।
ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम् ॥

इति गीतास्मरणाच्च ।

तदेवम्—

द्वैतमद्वैतमद्वैतद्वैतं सर्वं पराहतम् ।
परस्परं ततः स्वात्मा ब्रह्माऽपि परिशिष्यते ॥ १ ॥
स्वरूपसाम्यं भेदश्चाप्यनयोरनुभूयते ।
मुक्तौ भेदोऽस्त्वभेदो वा तस्यां यत्नो विधीयताम् ॥ २ ॥

अथेदं किमपि सर्वामपि विधेयत्वविधामतिक्रान्तमवश्यं भावयितव्य-भावनं समाजशिरस्सु समुपसर्पद्द्वारं महत्याऽऽर्त्या विनिवेद्यते । तत्कर्णा-भ्यन्तरवर्त्मनाऽपेक्षाबुद्धिसञ्जतं सत्कृत्य बहिरर्थवद् विधेयमिति प्रार्थये ।

अद्य खलु भारतीयार्यसंस्कृतेः संस्कृतस्य च कालपर्ययेण समुपेक्षके लोके चतुर्दशानामपि विद्यानां ग्रन्थरत्नानि कालेन कीटैः क्रोधपरुषैः कापुरुषैश्च प्रागवधीरितानि सम्मार्जनीभिर्गेहाद् बहिर्हृतानि जलाग्न्यादि-सात्कृतान्यवधीर्यन्ते तथा क्रियन्ते च । अतो वानरकरपतितानर्घ्यरत्न-वत् कानरकरपतितानि समुपेक्षितानि वेदान्तदर्शनग्रन्थरत्नानि यावन्न

विनश्यन्ति तावदेव तानि मुद्रणप्रकाशनाभ्यां व्याख्याटिप्पण्यादिभिः समुपबृंहणेन यथायथं तत्तत्साम्प्रदायिकविशिष्टपुरुषैः, साम्प्रदायिकसंस्थाभिः, वाराणसेयसंस्कृतविश्वविद्यालयेन, विद्वद्भिश्च तत्तद्वेदान्तविद्यावंश्यैः संरक्षणीयानि संवर्धनीयानि संस्करणीयानि चेति। किञ्चैषां वेदान्तदर्शनानां सम्प्रदायः साम्प्रतमनवरतमहर्निशं प्रतिक्षणं प्रतिपलं च वार्धकमुपगतं वपुरिवोपनिधनं जिगमिषत् सम्प्रदायनियमाधीतविद्यानां विदुषां क्रमशोऽवसानेनान्येषाञ्च तादृशामनुत्पादेन अरमलञ्च ह्रसति, तद् यावदेव स्नेहवर्तिक्षयात् प्रदीप इव न निर्वाति तावदेव तद्रक्षाविधिर्विधीयताम् पूर्वक्रमप्राप्ताध्ययनाध्यापनपरम्परास्थापनेन राज्याधिकारिभिः, संस्कृतविश्वविद्यालयेन तत्तत्सम्प्रदायसंस्थाभिर्विद्वद्भिश्च। अस्य च विधेयस्यार्थस्य साम्प्रतं क्रिया केवलमुत्तरं न तु विधानोपायचिन्ता।

आदेयस्य प्रदेयस्य कर्त्तव्यस्य च कर्मणः।
क्षिप्रमक्रियमाणस्य कालः पिबति तद्रसम्॥"

इत्यभियुक्तवचनं न विस्मर्तव्यम्। तदलमनल्पजल्पनेन।

चैतन्यमिव यश्चायमविच्छेदेन वर्तते।
आगमस्तमुपासीनैस्तस्य रक्षा विधीयताम्॥

अन्ते च विश्वेश्वरं वाणीविनायकौ च वेदान्तदर्शनपरम्परारक्षायै प्रणत्या प्रार्थनया च प्रवणीकुर्वाण आशासे—

विद्यार्थाः परितः पठन्तु सुभृशं शास्त्राणि बद्धादरा
मोदन्तां परिपालिताश्च विभवैर्वेदान्तपारङ्गमाः।
ईतिग्राम उदन्वदन्तमयतां नीत्या हतः सर्वथा
विश्वेशो विदधातु विश्वमखिलं मोदप्रमोदास्पदम्॥



# शिवतत्त्वविमर्शः

अथेदं जगत् प्रतिपदार्थप्रतिनियतविशेषवदुपचयापचयविनाशधर्मकं मनसोऽप्यचिन्त्यरचनारूपं कार्यमुपलभ्यमानं सर्वज्ञं सर्वशक्तिकञ्च कर्तारमाक्षिपति। तथा हि—केचित् कर्तार एव भवन्ति न भोक्तारः, यथा सूदर्त्विगादयः। केचित्तु भोक्तार एव, यथा श्राद्धवैश्वानरीयेष्ट्यादिषु पितापुत्रादयः, न कर्तारः। केचित् खलु प्रतिनियतदेशोत्पादाः, यथा कृष्णमृगादयः। केचित् प्रतिनियतकालोत्पादाः, यथा कोकिलारावादयः। केचित् प्रतिनियतनिमित्ताः, यथा नवाम्बुदध्वानादिनिमित्ता बलाकागर्भादयः। केचित् प्रतिनियतक्रियाः, यथा ब्राह्मणानामेव याजनादयो नेतरेषाम्। एवं प्रतिनियतफला अपि दृश्यन्ते; यथा केचित् सुखिनः, केचिद् दुःखिनः, एवं य एव सुखिनस्त एव कदाचिद् दुःखिनः। सर्वमेतदाकस्मिकापरनाम्नि यादृच्छिकत्वे स्वाभाविकत्वे चाचेतनकर्तृकत्वेऽसर्वशक्तिकर्तृकत्वे च न घटते, परिमितज्ञानक्रियाशक्तिभिर्ग्रहलोकपालादिभिर्ज्ञातुं कर्तुं चाशक्यत्वात्। यत एकस्या अपि शरीररचनाया रूपं मनसा न शक्यं चिन्तयितुं कदाचित् प्रागेव जगद्रचनायाः, किमङ्ग! पुनः कर्तुम्। तथा च पुष्पदन्तवाक्यम्—

अजन्मानो लोकाः किमवयववन्तोऽपि जगता-
मधिष्ठातारं किं भवविधिरनादृत्य भवति।
अनीशो वा कुर्याद् भुवनजनने कः परिकरो
यतो मन्दास्त्वां प्रत्यमरवर संशेरत इमे॥

( महिम्नस्तोत्रे, ६ श्लो० )

एवमनुमिते च सर्वज्ञे सर्वशक्तिके च जगत्कर्तरि कोऽसौ सर्वज्ञः? का च तस्य सर्वजगद्रचनानुकूला शक्तिः? इति जिज्ञासा जायते। तत्रान्तर्यामिणमारभ्य स्थावरान्तेशवादिनः श्रुतियुक्तितदाभाससमाश्रया बहव ईश्वरे विप्रतिपन्नाः सन्तीति प्रदर्शितं पञ्चदश्याम्—"अन्तर्यामिणमारभ्य स्थावरान्तेशवादिनः" इत्यादिपद्यैः। तथा हि—अन्तर्यामिब्राह्मणं सर्वान्तर्यामिणः सर्वेश्वरत्वं ख्यापयति, रुद्राष्टाध्यायी रुद्रस्य तत्त्वं द्रढयति, पुरुषसूक्तं

विष्णोर्माहात्म्यं तस्यैव जगदीश्वरत्वं बोधयति। एवं गणपत्यादिदेवतास्वपि सर्वकर्तृत्वसर्वेश्वरत्वप्रतिपादकानि श्रुतिपुराणादिवाक्यप्रमाणानि दृश्यन्ते, उदाह्रियन्ते च तत्तद्देवतोपासकैः। वेदे शिवविष्णुगणपत्यादौ प्रयुक्ताः शब्दा अप्येकत्र रूढ्याऽन्यत्र योगेन च योजयितुं शक्यन्ते। शिवविष्ण्वादि-नामान्यपि परस्परं नामसहस्रे प्रयुज्यमानानि दृश्यन्ते। एवं विप्रतिपत्ता-वीश्वरविषयायां सत्यामयमेवेश्वर इति यद्यपि निर्णेतुं न शक्यते, तथाप्य-न्तर्यामी ईश्वर एक एव तत्तत्कार्याय गुणभेदेनावतारभेदेन तां तां तनुं धत्ते, गुणभेदाद् रुचिभेदेन च भक्तास्तास्वन्यतमामुपासते—

रुचीनां वैचित्र्यादृजुकुटिलनानापथजुषां
नृणामेको गम्यस्त्वमसि पयसामर्णव इव। ( महिम्नस्तोत्रे )

रजोजुषे जन्मनि सत्त्ववृत्तये स्थितौ प्रजानां प्रलये तमःस्पृशे।
अजाय सर्गस्थितिनाशहेतवे त्रयीमयाय त्रिगुणात्मने नमः॥
( कादम्बर्याम् )

यो यो यां यां तनुं भक्तः श्रद्धयार्चितुमिच्छति।
तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहम्॥
स तया श्रद्धया युक्तस्तस्याराधनमीहते।
लभते च ततः कामान् मयैव विहितान् हि तान्॥
( गीतायाम् )

उभयोरेका प्रकृतिः प्रत्ययमात्रेण केवलं भेदः।
हरिहरभेदं कलयति कश्चन मूढो विना शास्त्रम्॥
( प्रकीर्णकम् )

अवतारा ह्यसङ्ख्येया हरेः सत्त्वनिधेर्द्विजाः।
यथा विदासिनः कुल्याः शतशः स्युः सहस्रशः॥
( भागवते )

तथा च गुणभेदेन कार्यानुरोधेन च भगवतो विग्रहभेदस्वीकारे जगत् संहर्तुं तम उपादाय प्रादुर्भूतो भगवान् रुद्र इति स्थितम्। स एव सत्त्वमु-पादाय प्राणिनां कल्याणाय समवस्थितः शिवशम्भुपशुपत्यादिशब्दैर्व्यव-ह्रियते। तत्र शिवतत्त्वं किमिति प्रश्ने सगुणनिर्गुणभेदेन द्विविधं शिवस्व-रूपमिति शिवपुराणे वर्णितम्—

यच्चादौ हि समुत्पन्नं निर्गुणात्परमात्मनः।
तदेव शिवसंज्ञं हि वेदवेदान्तिनो विदुः॥

तस्मात्प्रकृतिरुत्पन्ना पुरुषेण समन्विता ।
ताभ्यां तपः कृतं तत्र मूलस्थे च जले सुधीः ॥
व्याप्तञ्च सकलं ह्येतत्तज्जलं विश्वतोगतम् ।
संभाव्य मायया युक्तस्तत्र सुप्तो हरिः स वै ॥
नारायणेति विख्यातः प्रकृतिर्नारायणी मता ।
तन्नाभिकमले यो वै जातः स च पितामहः ॥
तेनैव तपसा दृष्टः स वै विष्णुरुदाहृतः ।
उभयोर्वादशमने यद्रूपं दर्शितं बुधाः ॥
महादेवेति विख्यातं निर्गुणेन (त्रिगुणेन) शिवेन हि ।
तेन प्रोक्तमहं शम्भुर्भविष्यामि कभालतः ॥
रुद्रो नाम स विख्यातो लोकानुग्रहकारकः ।
ध्यानार्थंञ्चैव सर्वेषामरूपो रूपवानभूत् ॥
स एव च शिवः साक्षाद् भक्तवात्सल्यकारकः ।
शिवे त्रिगुणसंभिन्ने रुद्रे तु गुणधामनि ॥
वस्तुतो नहि भेदोऽस्ति स्वर्णे तद्भूषणे यथा ।
ब्रह्मादितृणपर्यन्तं यत्किञ्चिद् दृश्यते त्विह ॥
तत्सर्वं शिव एवास्ति मिथ्या नानात्वकल्पना ।
तस्माच्चतु(नि)र्गुणः प्रोक्तः शिव एव मुनीश्वराः ॥
स एव सगुणो ज्ञेयः शक्तिमत्त्वाद् द्विधापि सः ।
अन्येषां कालमानञ्च कालस्य कलना नहि ॥
महाकालः स्वयं साक्षान्महाकालीं समाश्रितः ।

( कोटिरुद्रसं० ४ ख० ४२ अ० )

त्रिगुणसंभिन्ने गुणत्रयसम्पन्ने । रुद्रे गुणधामनि तमोरूपैकगुणमात्राश्रये ।

अत्र च सर्वाप्यद्वैतवेदान्तप्रक्रियैव समाश्रिता । नारायणीप्रकृतिरेव सर्वदेवशक्त्यात्मिका स्तुता ११ अध्याये श्रीदुर्गासप्तशत्याम् । किन्तु प्रकृतिपुरुषयोर्नारायणयोः कर्ता यस्त्रिगुणात्मकः शिवः, तस्यापि शक्तिः परमप्रकृतिरूपाव्यक्ताख्या शिवा । तस्यास्तत्त्वमिदानीं विमृश्यते । दुर्गासप्तशत्यामपि—"परमा प्रकृतिस्त्वमाद्या" इति देवस्तुतौ परमा प्रकृतिराद्या चास्तीति विज्ञायते । या खलु चिदाभासविशिष्टा माया त्रिगुणात्मिका विशुद्धसत्त्वप्रधाना चिदाभाससमन्विता, सैव शिवस्य शक्तिः परमा प्रकृतिः । तदुक्तम्—

चिदानन्दमयब्रह्मप्रतिबिम्बसमन्विता ।
रजस्तमःसत्त्वगुणा प्रकृतिर्द्विविधा च सा ॥ ( पञ्चदशी )

तस्या अत्र मायाऽविद्याभेदेन द्विधात्वं प्रपञ्चितम् । इदमेव शक्तितत्त्वं देवीभागवतस्य परमं रहस्यम् । तदुक्तमुपक्रम एव तत्र—"सर्वचैतन्यरूपां तामाद्यां विद्यां च धीमहि बुद्धिं या नः प्रचोदयात्" इति ।

चिदाभासाभावे मायायाः सृष्ट्यादिशक्तिरूपत्वमेव दुर्घटम्, अचेतनत्वात् । ब्रह्मणश्चासङ्गत्वेन कर्तृत्वासंभवात् । तथा च ब्रह्मणो जगत्कारणस्य विद्याऽविद्योभयात्मकत्वात् क्वचिन्मायोपसर्जनब्रह्मण एवोपासनम् । तत्र शक्तिः सहायभूता । इदञ्च मतं शिवपुराणादिषु स्पष्टम्—

तस्मात् सह तया देवं हृदि पश्यन्ति ये शिवम् ।
तेषां शाश्वतिकी शान्तिर्नेतरेषां कदाचन ॥

इत्यादिवचनैः । क्वचिच्च ब्रह्मोपसर्जनमायाया उपासनम् । तत्र भगवतीविषये ब्रह्मोपसर्जनमायाया एवोपासनमिति दर्शयितुं मायाशक्त्यादिशब्दैः शास्त्रे भगवत्या व्यवहारः क्रियते । इदञ्च मतं सर्वतन्त्राभिमतं पुराणाभिमतञ्च । तथा हि—"शिवेन सहितां देवीं भावयेद् भुवनेश्वरीम्" इति भुवनेश्वरीपारिजाते । कूर्मे च—

अस्यास्त्वनादिसंसिद्धमैश्वर्यमतुलं महत् ।
तत्सम्बन्धादनन्तैषा रुद्रेण परमात्मना ॥ इति ।

एतदेव देवीभागवतादिसर्वपुराणेषु द्रष्टव्यम् ।

तथा च प्रागुक्तोभयपक्षेऽपि ब्रह्मणश्चिदंश उपासनायामागत एवेति न मुक्तावुपास्यस्वरूपानन्वयित्वरूपं दूषणं न वा कस्यचिन्मतस्याश्रद्धेयता । किञ्च गुणसाम्यावस्थारूपमायाया ब्रह्मणा अव्यवहितः सम्बन्धः, अन्येषां तु मायाद्वारकः स इत्यन्यदेवतापेक्षया शिवशक्तेरुपासनैव मुख्या सर्वोत्कृष्टा च । सूतसंहितादिषु रीतिरियमुक्ता—

परतत्त्वप्रकाशस्तु रुद्रस्यैव महत्तरः ।
ब्रह्मविष्ण्वादिदेवानां न तथा मुनिपुङ्गवाः ॥
रुद्रः कथञ्चित्कार्यार्थं मनुते रुद्ररूपताम् ।
न तथा देवताः सर्वाः परिस्फूर्त्यल्पताबलात् ॥ ( सूतगीता )
ब्रह्मविद्या जगद्धात्री सर्वेषां जननी तथा ।
यया सर्वमिदं व्याप्तं त्रैलोक्यं सचराचरम् ॥

सैव सेव्या च पूज्या च नान्यद् वै देवतान्तरम् ।

इति देवीभागवतमाहात्म्ये । तथा कालोत्तरेऽपि—

धिग् धिग् धिग् धिक् च तज्जन्म यो न पूजयते शिवाम् ।
जननीं सर्वजगतः करुणारससागराम् ॥

तथा च सन्ध्यावन्दनादिवन्नित्यत्वं शक्त्युपासनस्य, अकरणे प्रत्यवायश्रवणात् ।

शिवस्वरूपतत्सम्बद्धसर्वार्थप्रतिपादिकाश्च सन्ति बह्वच उपनिषदः, यथा—अक्षमालिकाथर्वशिखाथर्वशिरःकालाग्निरुद्रकैवल्यजाबालिदक्षिणामूर्तिपञ्चब्रह्मबृहज्जाबालभस्मजाबालरुद्रहृदयरुद्राक्षजाबालशरभश्वेताश्वतरोपनिषदः । एवं शैवागमा अपि सन्ति । पुराणेषु च सर्वेषु शिवो वर्णितः । एवं शक्तिविषयेऽपि सन्त्युपनिषदो बह्वृचत्रिपुरातापिन्यादयः । देवीभागवतं प्राधान्येन, अन्यानि च पुराणान्यनुषङ्गतः शक्तिं निरूपयन्ति । तन्त्राणि च बहूनि सन्ति शक्तिविषयाणि । प्रागुक्तमेव च शिवयोस्तत्त्वं सर्वत्रैकमत्येन निरूपितम् ।

"पत्युरसामञ्जस्यात्" ( २।२।३७ ) इति वेदान्तसूत्रभाष्यीयभामतीरत्नप्रभानन्दगिरीयेषु चत्वारो माहेश्वराः समुपलभ्यन्ते । ते च शैवाः, पाशुपताः, कारुणिकसिद्धान्तिनः, कापालिकाश्चेति । सर्वेऽप्यमी महेश्वरप्रणीतागमानुगामित्वान्माहेश्वराः । तेषां मते पञ्च पदार्थाः—कार्यम्, कारणम्, योगः, विधिः, मोक्ष इति । तत्र कार्यं महदादिकं सांख्ययोगाभिमतम् । कारणं प्रधानमीश्वरश्च योगाभिमतम् । योगः समाधिः । विधिस्त्रिषवणस्नानादिः । दुःखान्तो मोक्ष इति ।

शैवदर्शनानि च त्रीणि सम्प्रति दृश्यन्ते—नकुलीशपाशुपतदर्शनम्, शैवदर्शनम्, प्रत्यभिज्ञादर्शनञ्चेति । तेषु प्रत्यभिज्ञावादिनो वस्तुतो जीवेश्वरयोरैक्यं मन्यन्त इति त्रिषु श्रेयांसः । नकुलीशपाशुपतास्तु ईश्वरस्य जगत्सृष्टौ कर्मापेक्षितां नानुमन्यन्त इति जघन्याः । शैवास्तु ईश्वरस्य वैषम्यनैर्घृण्यदोषपरिहाराय जगत्सृष्टौ कर्मापेक्षित्वमङ्गीकर्तव्यमिति वदन्तः पाशुपतापेक्षयाभ्यर्हिताः ।

पाशुपतमते ईशः कर्म चेति द्वयं जीवस्य सुखदुःखरूपं फलं ददाति । तत्रेश्वरस्य फलदाने न कर्मापेक्षा । कर्मणस्तु फलदान ईश्वरापेक्षास्त्येव । तथा च कर्मणो न वैयर्थ्यं नापीश्वरस्य पूर्णस्वातन्त्र्यहानिः । दुःखान्ताय

दुःखमूलं पारतन्त्र्यमवश्यं ज्ञेयम् । तथा च स्वतन्त्रास्वतन्त्रभेदेन तत्त्वज्ञानाद् दुःखान्तः । तच्च पाशुपतशास्त्रादेव जायत इति ।

शैवदर्शने तु प्रकारान्तरेण षट् पदार्थाः प्रदर्शिताः । तेषां तत्त्वज्ञानाद् दुःखान्तः । तथा हि—

पतिविद्ये तथाऽविद्या पशुः पाशश्च कारणम् ।
तन्निवृत्ताविति प्रोक्ताः पदार्थाः षट् समासतः ॥

पतिः परमेश्वरः । विद्या तत्त्वज्ञानं जीवगुणः । अविद्या मिथ्याज्ञानम् । पशुर्जीवः । पाशो मलादिः, शक्तिर्वा । तदुक्तम्—

तासामहं वरा शक्तिः सर्वानुग्राहिका शिवा ।
धर्मानुवर्तनादेव पाश इत्युपचर्यते ॥

धर्मानुवर्तनात्, स्वाश्रयधर्मानुवर्तनादित्यर्थः ।

तथा च पाशगता रोधशक्तिः पाशमधिष्ठायात्मस्वरूपमाच्छादयतीत्यस्या औपचारिकं पाशत्वम् । पाशस्य निवृत्तौ कारणमुपाया जपचर्यादयः । इत्येवं षट् पदार्था इत्यर्थः ।

प्रत्यभिज्ञादर्शने तु जगत्कारणत्वं न कर्मणोऽचेतनत्वात् । नापि कर्मसापेक्षस्येश्वरस्य जगत्कारणत्वम्, ईश्वरस्य जगदुत्पादने कर्मावलम्बित्वे पूर्णस्वातन्त्र्यभङ्गापत्तेः । पूर्णस्वातन्त्र्यं ह्यन्यमुखप्रेक्षित्वाभावः । अतो निरपेक्ष एवेश्वरः स्वेच्छयैवाकाशादिभावान्वितं जगन्निर्मिमीत इति सिद्धम् । आकाशादीन् भावांश्च परमेश्वरः स्वात्मन्येवावभासयति, दर्पणे प्रतिबिम्बवत् । यतश्चेतनाचेतनात्मकं सर्वमिदं जगन्न परमेश्वरापेक्षया पृथग्भूतम्; किन्तु तदन्तर्गतमेव । यद्यपि जीवा मिथो भिन्नाः, एवं नानाविधमानमेयादिभिन्नं जगदपि, तथापि परमेश्वरापेक्षया न किञ्चिद् भिन्नम् । अहमीश्वर एव नान्य इत्येवं यः साक्षात्कारः स प्रत्यभिज्ञेत्युच्यते । प्रत्यभिज्ञामात्रेणैव च परापरसिद्धिर्भवति । न तदर्थं बाह्याभ्यन्तरचर्याप्राणायामादिक्लेशः । परसिद्धिर्मुक्तिः । अपरसिद्धिरभ्युदयो देवलोकप्राप्त्यादिः । यथा यथा साक्षात्कारस्तथा सिद्धिरिति साक्षात्कारानुरोधेन सिद्धितारतम्यमिति । माययान्धः सन्नीश्वरस्वरूपाज्ञानात् कर्मणा बध्यते संसरति च । नूनमीश्वरोऽहमित्याकारकप्रत्यभिज्ञया साक्षात्कृतेश्वरस्वरूपस्तु दृक्क्रियाशक्तिपरिपूर्णो मुक्त इत्युच्यत इति ।

इत्थं विचारिते शिवे तच्छक्तितत्त्वे च शिवः कथमाराधनीय इत्याराधनेतिकर्तव्यताजिज्ञासा जायते । तत्राधिकारिणामुत्तममध्यमाधमभावेन

गुणभेदप्रयुक्तरुचिभेदेन च त्रिविध आराधनमार्गः। अर्चायामर्चनम्, हृदि कल्पितरूपाणां ध्यानम्, प्रत्यभिज्ञाफलकमैक्यभावनं तृतीयम्। तत्राद्यो मार्गो मन्दानां स्थूलत्वात्। अर्चापि त्रिविधा शास्त्रेषु समुपलभ्यते। विग्रहवती, लिङ्गरूपा, पृथिव्याद्यष्टतत्त्वरूपा च। विग्रहवत्यपि वक्त्रपञ्चकनेत्रत्रयपरशु-मृगवराभयादिसमन्विता नानाविधा, अवतारभेदेन च बहुरूपा। लिङ्गं तु स्वस्वश्रेष्ठ्याय विवदमानयोर्विधिविष्ण्वोर्मोहोपशमनायादर्शि प्रणवात्मकम-कारोकारमकारार्धमात्रासमाश्रितम् ऋग्यजुःसामाथर्ववेदात्मकञ्च।

ततःप्रभृति शक्राद्याः सर्वे एव सुरासुराः।
ऋषयश्च नरा नागा नार्यश्चापि विधानतः॥
लिङ्गप्रतिष्ठां कुर्वन्ति लिङ्गे तं पूजयन्ति च।

(शिवपुराणे वायवीयसं० ३५ अ०)

लिङ्गानि च पार्थिवपाषाणसुवर्णरजतमणिमुक्तास्फटिकपारदादिनि-र्मितानि नार्मदान्यन्यानि च बहूनि प्रतिनियतफलानि शास्त्रेषु वर्णितानि। पृथिव्याद्यष्टकमपि शिवस्य मूर्तिः। भूमिरापोऽनलो वायुः खमिति भूतपञ्च-कम्, सूर्याचन्द्रमसौ द्वौ यजमानश्चाष्टमः। वर्णितं चैतत् पुराणेषु महाकवि-कालिदासादिकाव्येषु च तत्र तत्रेत्यतिरोहिततया न साधनमपेक्षते। आभि-श्चाष्टाभिरर्चाभिः शिवस्य सर्वात्मकत्वं सर्वोपादानत्वं सर्वकर्तृत्वं सर्वज्ञत्व-ञ्चाक्षिप्तं भवति। तथा हि मायाशक्त्युपहितः शिवः कालकर्मापेक्षया पञ्च-भूतात्मकसर्वजगदाकारेण परिणमत इति स्थितिः।

अव्याहताः कला यस्य कालशक्तिमुपाश्रिताः।
जन्मादयो विकाराः षड् भावभेदस्य योनयः॥

(वाक्यपदीये ब्रह्मकाण्डे)

"वैषम्यनैर्घृण्ये न सापेक्षत्वात्तथा हि दर्शयति" (ब्रह्मसूत्रम्)। तत्र पर-मेश्वरस्य स्वातिरिक्तकालकर्मापेक्षत्वे स्वात्न्त्र्यमेव हीयेतेति कालकर्मणी अपि भगवत्कृते भगवद्रूपे एवेति च स्वीक्रियते। तथा हि—यजमानरूपेण शिव-एव कर्माणि करोति। रविचन्द्ररूपाभ्यां स एव कालमपि विविधं विदधाति। तयोः सहकारेण च पञ्चभूतात्मकं सर्वं जगल्लीलया निर्मिमीते—"लोकवत्तु लीलाकैवल्यम्" (ब्रह्मसूत्रम्) इति पृथिव्यादिमूर्त्यष्टकोपासनारहस्यम्। सर्वास्वप्यर्चासु लिङ्गरूपार्चैव सर्वश्रेष्ठा—

सर्वा लिङ्गमयी भूमिः सर्वं लिङ्गमयं जगत्।
लिङ्गमयानि तीर्थानि सर्वं लिङ्गे प्रतिष्ठितम्॥

(शिव० ४।१।९-१०)

गङ्गातीरे सुप्रसिद्धा काशी खलु विमुक्तिदा।
सा हि लिङ्गमयी ज्ञेया शिववासस्थली स्मृता॥

(शिव० ४।२।१)

सुमहति काशीखण्डे सर्वा अपि लिङ्गरूपा अर्चा एव देवदानवमानवैरसुरोरगराक्षसैः प्रतिष्ठापिता दृश्यन्ते, नैकापि वक्त्रपाणिपादादिविग्रहवती। लिङ्गेष्वपि द्वादश ज्योतिर्लिङ्गानि विशेषमहिमशालीनि। तानि च संग्रहेण प्रदर्श्यन्ते—

सौराष्ट्रे सोमनाथञ्च श्रीशैले मल्लिकार्जुनम्।
उज्जयिन्यां महाकालमोङ्कारे परमेश्वरम्॥
केदारं हिमवत्पृष्ठे डाकिन्यां भीमशङ्करम्।
वाराणस्याञ्च विश्वेशं त्र्यम्बकं गोमतीतटे॥
वैद्यनाथं चिताभूमौ नागेशं दारुकावने।
सेतुबन्धे च रामेशं घुश्मेशञ्च शिवालये॥ इति।

(शिव० कोटिरुद्र० १ अ०)

द्वादशानां ज्योतिर्लिङ्गानां मध्ये केषाञ्चिदुपलिङ्गान्यपि तत्समानि वर्णितानि तत्रैव—

सोमेश्वरस्य यल्लिङ्गमन्तकेशमुदाहृतम्।
मह्याः सागरसंयोगे तल्लिङ्गमुपलिङ्गकम्॥
मल्लिकार्जुनसम्भूतमुपलिङ्गमुदाहृतम्।
रुद्रेश्वरमिति ख्यातं भृगुकक्षे सुखावहम्॥
महाकालभवं लिङ्गं दुग्धेशमिति विश्रुतम्।
नर्मदायां प्रसिद्धं तत्सर्वपापहरं स्मृतम्॥
ओङ्कारजञ्च यल्लिङ्गं कर्दमेशमिति स्मृतम्।
प्रसिद्धं बिन्दुसरसि सर्वकामफलप्रदम्॥
केदारेश्वरसञ्जातं भूतेशं यमुनातटे।
महापापहरं प्रोक्तं पश्यतामर्चतां तथा॥
भीमशङ्करसंभूतं भीमेश्वरमिति स्मृतम्।
सह्याचले प्रसिद्धं तन्महाबलविवर्धनम्॥
नागेश्वरसमुद्भूतं भूतेश्वरमुदाहृतम्।
मल्लिकासरस्वतीतीरे दर्शनात्पापहारकम्॥

रामेश्वराच्च यज्जातं गुप्तेश्वरमिति स्मृतम् ।
घुश्मेशाच्चैव यज्जातं व्याघ्रेश्वरमिति स्मृतम् ॥

द्वादशसु ज्योतिर्लिङ्गेष्वाद्यलिङ्गं तस्य पौराणिकमितिवृत्तं माहात्म्यञ्च श्रद्धायै संगृह्यते शिवपुराणकोटिरुद्रसंहितातः—दक्षेण २७ ( सप्तविंशतिः ) कन्याश्चन्द्रमसे दत्ता अश्विन्याद्याः । तासु रोहिणी सर्वप्रियासीत् । अन्याः पितृशरणं ययुः । दक्ष आगत्य चन्द्रं शान्त्यावोचत्—आश्रितेषु विषमत्वेन दर्शनं नरकप्रदं न कर्तव्यं कुलजातेन त्वया । चन्द्रस्तु दक्षे गते शिवमाया-मोहितस्तद्वचो न चकार । रोहिण्यां समासक्तो नान्या मेने । तच्छ्रुत्वा पुनरागत्य दक्षो दुःखी सुनीतिश्चन्द्रं प्रार्थयामास । प्रार्थनायां विफलीभूतायां शशाप—

श्रूयतां चन्द्र यत्पूर्वं प्रार्थितो बहुधा मया ।
न मानितं त्वया यस्मात् तस्मात्त्वञ्च क्षयी भव ॥

दक्षेणेत्युक्ते चन्द्रः क्षणादेव क्षयी जातः । तदेन्दौ क्षीणतां जाते हाहाकारो महानासीत् । देवता ऋषयश्च तदा विह्वला अभवन् चन्द्रामृतोपभोगिनः । तदा देवर्षयो ब्रह्माणं शरणं ययुः । तं नत्वा नुत्वा च निखिलं चन्द्रवृत्तं निवेदयामासुः । ब्रह्मापि तद्वचः श्रुत्वा विस्मयं परमं ययौ । ततः शिवमायां प्रशस्य ब्रह्मा ताराख्यवृहस्पतिभार्यापहरणं दैत्यपक्षसमाश्रयणं देवैः सह युद्धमित्यादिकं तस्य दुर्वृत्तं वर्णयामास । प्राक्तने दुर्वृत्ते कालेन तिरोहितेऽधुनापि स्वभावदोषादसाध्वेव कुरुते । भवतु, दक्षशापो लोकानामहितोऽपि शोभन एव जातो दुर्वृत्ते विधावित्यादिकमुक्त्वा "चन्द्रो दक्षशापापनोदाय प्रभासे देवैः सह गत्वा मृत्युञ्जयविधानेन शिवमाराधयतु, प्रसन्नः शिवस्तमक्षयं करिष्यति" इति ब्रह्मवाक्येन चन्द्रमसा प्रभासे षण्मासं निरन्तरं तपस्तप्तम्, दशकोटिसंख्यया मृत्युञ्जयमन्त्रः सम्यग् आवृत्तः । तदन्ते तुष्टो भगवान् भवो भक्तवत्सल आविर्भूय चन्द्रं वरेण छन्दयामास । तदा "मे शरीरस्य क्षयं वारय शङ्कर" इति चन्द्रेण प्रार्थितः शिवः—

"पक्षे च क्षीयतां चन्द्र कला ते च दिने दिने ।
पुनश्च वर्धतां पक्षे सा कला च निरन्तरम् ॥"

इति वरं ददौ ।

ततश्चन्द्रेण सद्भक्त्या संस्तुतः शङ्करः पुरा ।
निराकारश्च साकारः पुनश्चैवाभवत्प्रभुः ॥

प्रसन्नश्च स देवानां क्षेत्रमाहात्म्यहेतवे ।
चन्द्रस्य यशसे तत्र नाम्ना चन्द्रस्य शङ्करः ॥
सोमेश्वरश्च नाम्नासीद् विख्यातो भुवनत्रये ।
क्षयकुष्ठादिरोगाणां नाशकः पूजनाद् द्विजाः ॥
तत्कुण्डं तैश्च तत्रैव सर्वैर्देवैः प्रतिष्ठितम् ।
शिवेन ब्रह्मणा तत्र ह्यविभक्तं तु तत्पुनः ॥
चन्द्रकुण्डं प्रसिद्धञ्च पृथिव्यां पापनाशनम् ।
प्रभासञ्च परिक्रम्य पृथिवीक्रमसंभवम् ॥
फलं प्राप्नोति शुद्धात्मा मृतः स्वर्गे महीयते ।
सोमलिङ्गं नरो दृष्ट्वा सर्वपापात् प्रमुच्यते ॥

इति पौराणिकं सोमनाथेतिवृत्तम् ।

अथातः परं किञ्चित् सामयिकं प्रस्तूयते—पतितानां त्रैवर्णिकानां हीनजातीनाञ्च मन्दिरप्रवेशे वृद्धहारीतेन मन्दिरसंस्कारो विहितः । तथा हि—

प्रासाददेवहर्म्याणां चाण्डालपतितादिषु ।
अन्तःप्रविष्टेषु तथा शुद्धिः स्यात्केन कर्मणा ॥
गोभिः संक्रमणं कृत्वा गोमूत्रेणैव लेपयेत् । (९-४०९)
पुण्याहं वाचयित्वा तु तत्तोयैर्दर्भसंयुतैः ।
संप्रोक्ष्य सर्वतः पश्चाद् देवं समभिषेचयेत् ॥ (९-४१०)
पञ्चामृतैः पञ्चगव्यैः स्नापयित्वाथ वैष्णवः ।
प्रत्यृचं पावमान्यैश्च वैष्णवैश्चाभिषेचयेत् ॥ (९-४११)
चतुर्भिर्वैष्णवैर्मन्त्रैः स्नाप्य पुष्पाञ्जलिं तथा ।
श्रीसूक्तेन तदा दिव्यैर्दद्यान्नीराजनं द्विजः ॥ (९-४१२)

अन्यत्रापि देवलस्मृतौ भृगुसंहितायां कारणागमे प्रायश्चित्तकाण्डे च वचनानि द्रष्टव्यानि ।

अतः प्रतिमास्पर्शो मन्दिरगर्भगृहप्रवेशो वा त्रैवर्णिकानां तदितरेषां वा नियमेन निषेद्धव्यः । न ज्ञायते त्रैवर्णिकस्यापि कस्य प्रच्छन्नं पातकं भवेदिति । किञ्चैवं सति प्रजासु वैषम्यकलहोऽपि सुदूरमपसारितो भवति । सर्वेऽपि दूरादेव दर्शनं कुर्वन्तु पूताः पूतंमन्या अपूता वा । शास्त्रविरोधोऽपि

परिहृतो भवति । देवलस्तु शास्त्रतः परीक्षित एव सर्वगुणोपेतोऽनभिशस्तश्च प्रतिमार्चायां नियोक्तव्य इति ।

शैवो मार्गोऽत्र कात्स्न्र्येन विमृष्टो हितकृत्परः ।
नानागमविधानेन तेन तुष्यतु शङ्करः ॥
"यदा चर्मवदाकाशं वेष्टयिष्यन्ति मानवाः ।
तदा शिवमविज्ञाय दुःखस्यान्तो भविष्यति ॥"
( श्वेताश्वतरे ६।२० )



# वादत्रयविमर्शः[1]

जन्माद्यस्य यतोऽन्वयादितरतश्चार्थेष्वभिज्ञः स्वराट्
तेने ब्रह्म हृदा य आदिकवये मुह्यन्ति यत्सूरयः ।
तेजोवारिमृदां यथा विनिमयो यत्र त्रिसर्गो मृषा
धाम्ना स्वेन सदा निरस्तकुहकं सत्यं परं धीमहि ॥

## अद्वैतवाद आक्षेपाः

अथेदं वादत्रयं विमृश्यते—विज्ञानवादः, शून्यवादः, अद्वैतवादश्चेति । किमेषु गतानुगतिकत्वेन सामान्यं वैषम्यं वेति । तत्र केचिदाहुः—"अद्वैतवादो विज्ञानवादशून्यवादयोः शब्दान्तरप्रच्छन्नं रूपम्" इति । तथा हि सांख्यप्रवचनभाष्ये विज्ञानभिक्षुः—"यत्तु वेदान्तिब्रुवाणामाधुनिकस्य मायावादस्यात्र लिङ्गं दृश्यते तत्तेषामपि विज्ञानवाद्येकदेशितया युक्तमेव ।

"मायावादमसच्छास्त्रं प्रच्छन्नं बौद्धमेव च ।
मयैव कथितं देवि कलौ ब्राह्मणरूपिणा ॥"

इत्यादिपद्मपुराणस्थशिववाक्यपरम्पराभ्यः । न तु तद्वेदान्तमतम्, "वेदार्थवन्महाशास्त्रं मायावादमवैदिकम्" इति तद्वाक्यशेषादिति । मायावादिनोऽत्र च न साक्षात्प्रतिवादित्वम्, विजातीयेति विशेषणवैयर्थ्यात् ; मायावादे सजातीयाद्वैतस्याप्यनभ्युपगमादिति । तस्मादत्र प्रकरणे विज्ञानवादिनां बन्धहेतुव्यवस्थैव साक्षान्निराक्रियते" [ सां० सू० १।२२ ] इति ।

माध्वा अपि शून्यवादानुगामित्वमाहुरद्वैतवादस्य । तथा हि श्रीजयतीर्थकृतवादावलीव्याख्यायां भावदीपिकायां मिथ्यात्वानुमानस्य श्रुतिविरोधोपपादनावसरे श्रीराघवेन्द्रयतिः—"शून्यवादिमतेऽप्यर्थक्रियाकारित्वादिना शशशृङ्गादिवैलक्षण्यसत्त्वात् । प्रतिपन्नोपाधौ निषेधप्रतियोगित्वेन तद्वैलक्षण्यस्याद्वैतिमत एवाभावाद् व्यावहारिकसत्त्वस्य च तन्मतेऽपि भावात्,

---

1. अखिलभारतीयप्राच्यविद्यामहापरिषदः षोडशाधिवेशनावसरे पठितोऽयं निबन्धः ।

"द्वे सत्ये समुपाश्रित्य बुद्धानां धर्मदेशना।
लोके संवृतिसत्यं च सत्यं च परमार्थतः॥
सत्यं तु द्विविधं प्रोक्तं सांवृतं पारमार्थिकम्।
सांवृतं व्यावहार्यं स्यान्निवृत्तौ पारमार्थिकम्॥"

इति बौद्धोक्तेः। अत एवोक्तं भगवत्पादैः—"न च शून्यवादिनः सकाशाद् वैलक्षण्यं मायावादिनः" इति।

साम्प्रतिका अपि केचन पाश्चात्यविद्वांसस्तदनुगामिनो भारतीयाश्चाद्वैतमतं बौद्धमतप्रभावभावितं मन्यन्ते। ते हि वदन्ति—"बौद्धदर्शनप्रसिद्धा बुद्धसंवृतिधर्माग्रयाणचतुष्कोट्यादिशब्दा गौडपादीये कारिकाग्रन्थे व्यवहृताः सन्ति। कतिपयानां बौद्धदर्शनकारिकाणामानुपूर्वीसाम्यं च तत्र दृश्यते" इति। पराक्रान्तं चानुपूर्वीसाम्यप्रदर्शनविषये बौद्धदर्शनप्रयुक्तशब्दानां प्रयोगविषये च सुबहुशो गौडपादीयकारिकाव्याख्यायां श्रीविधुशेखरभट्टाचार्यैः[1]।

किञ्च—

"अस्ति नास्त्यस्ति नास्तीति नास्ति नास्तीति वा पुनः।
चलस्थिरोभयाभावैरावृणोत्येव बालिशः॥
कोट्यश्चतस्र एतास्तु ग्रहैर्यासां सदावृतः।
भगवानाभिरस्पृष्टो येन दृष्टः स सर्वदृक्॥"

[ माण्डूक्यका० अलात० ८३-८४ ]

इति कारिकयोः, शून्यतावादिमतप्रतिपादिकायाः—

"न सन्नासन्न सदसन्न चाप्यनुभयात्मकम्।
चतुष्कोटिविनिर्मुक्तं तत्त्वं माध्यमिका विदुः॥"

इति कारिकायाश्चैकार्थकत्वं दृश्यते। अतः प्राप्तं बौद्धपथानुगामित्वमद्वैतवेदान्तस्येति।

तत्रैतत्पक्षपराक्रियातः प्राग् वादत्रयस्य पार्थक्येन स्वरूपप्रदर्शनमावश्यकम्। अन्यथा हि गभीरे तमसि निविष्टं महद्वैषम्यं न भासेत, येनायं विभ्रमः प्रसूतः।

---

१. "गौडपादीयं दर्शनम्" इत्याख्ये निबन्धेऽस्माभिर्विस्तरेण श्रीभट्टाचार्यमतं समालोचितम् [ द्र०—पृ० ८७–१०४ ]।

## विज्ञानवादस्वरूपम्

तत्र विज्ञानवादस्वरूपमेव पूर्वं प्रदर्श्यते लाघवेन बुद्ध्यारोहाय। दुरधिगमो हि शून्यवादः। तत्र विज्ञानमेवैकं तत्त्वं ग्राह्यग्राहकोभयाकारम्, नास्ति विज्ञानात् पृथग् बहिरर्थवर्गः। तथा चोक्तम्—

"विज्ञप्तिमात्रमेवैतदसदर्थावभासनात् ।
यथा तैमिरिकस्यासत्केशचन्द्रादिदर्शनम् ॥"

[ विंशतिका० १ ]

विज्ञानं च द्विविधम्—आत्मप्रज्ञप्तिरूपमालयविज्ञानम्, धर्मप्रज्ञप्तिरूपं च विषयविज्ञानं प्रवृत्तिविज्ञानाख्यम्। सोऽयं द्विप्रकारोऽपि विज्ञानपरिणाम एव। एवं च सर्वं विज्ञेयं परिकल्पितस्वभावत्वाद्वस्तुतो न विद्यते, विज्ञानं पुनः प्रतीत्यसमुत्पन्नत्वाद् द्रव्यतोऽस्तीत्यभ्युपेयम्।

विज्ञानवादे नास्ति परलोको नापि जन्मान्तरसंबन्धी आत्मा। तथा च तत्त्वसंग्रहे शान्तरक्षितवचस उद्धारः—

तदत्र परलोकोऽयं नान्यः कश्चन विद्यते।
उपादानतदादेयभूतज्ञानादिसन्ततेः ॥

विज्ञाने विषयावभास एव बन्धः, विषयावभासशून्यस्वरूपं कैवल्यमेव विज्ञानस्य मोक्षः। तदुक्तम्—

यदा त्वालम्बनं ज्ञानं नैवोपलभते तदा।
स्थितो विज्ञानमात्रत्वे ग्राह्याभावे तदग्रहात् ॥
अचित्तोऽनुपलम्भोऽसौ ज्ञानं लोकोत्तरं च तत्।
स एवानास्रवो धातुरचिन्त्यः कुशलो ध्रुवः ॥
सुखो विमुक्तिकायोऽसौ धर्माख्योऽयं महामुनेः।

[ त्रिंशिकाविज्ञप्तिभाष्ये २८–३० ]

तादृशविज्ञानस्य सुखरूपत्वं त्वशेषदुःखनिवृत्तिरूपतया।

वस्तुतो बाह्यार्थाभावेऽपि पूर्वपूर्वप्रत्ययविज्ञानीयानुशय ( वासना )-वशाच्चोत्तरोत्तरविज्ञानेष्वात्मादिनिर्भासरूपो रूपादिनिर्भासरूपश्च विषयावभासः, तत्प्रयुक्त उपचारश्च। एतच्च वर्णितं त्रिंशिकाविज्ञप्तिभाष्ये—"आत्मधर्मोपचारो हि विविधो यः प्रवर्तते। विज्ञानपरिणामोऽसौ" इति प्रथमकारिकाव्याख्यानावसरे।

पञ्चानां चक्षुरादिविज्ञानानां तदनुचरमनोविज्ञानसहितानां बीजाश्रयत्वाज्जन्मोपादानाच्चालयविज्ञानं मूलविज्ञानमित्युच्यते ।

पञ्चानां मूलविज्ञाने यथाप्रत्ययमुद्भवः ।
विज्ञानानां सह न वा तरङ्गाणां यथा जले ॥

[ त्रिंशिकाविज्ञप्तिभाष्ये १५ ]

सह न वेति—युगपत् क्रमेण वेत्यर्थः ।

विज्ञानवादिमते सर्वमपि ज्ञानमात्मादिनिर्भासं वा रूपादिनिर्भासं वा सविकल्पकं स्वलक्षणमात्रगोचरं वा निर्विकल्पकं विज्ञानातिरिक्तविषयाभावेऽपि तदुल्लेखितया भ्रान्तमेव । लौकिकस्तु प्रमाणाप्रमाणव्यवहारस्तात्कालिकबाधाबाधाभ्यां कल्पितः । विज्ञानस्य स्वप्रकाशत्वमप्येतन्मत एकस्मिन्नपि विज्ञानात्मके वस्तुनि कल्पिताकारभेदेन कर्मकर्तृभावाभ्युपगमेन । सर्वेषां च विज्ञानानां क्षणिकत्वम्, यत्सत् तत्क्षणिकमिति स्थितेः ।

## शून्यवादस्वरूपम्

शून्यवादिनो माध्यमिकास्तु विज्ञानस्याप्यभावं संगिरन्ते । तथा हि सर्वदर्शनसंग्रहे माधवीये—"ते च माध्यमिकयोगाचारसौत्रान्तिकवैभाषिकसंज्ञाभिः प्रसिद्धा बौद्धा यथाक्रमं सर्वशून्यत्वबाह्यार्थशून्यत्वबाह्यार्थानुमेयत्वबाह्यार्थप्रत्यक्षत्ववादानातिष्ठन्ते" इति ।

तत्रार्थशून्यं विज्ञानं योगाचाराः समाश्रिताः ।
तस्याप्यभावमिच्छन्ति ये माध्यमिकवादिनः ॥

( श्लोकवार्त्तिके )

"ज्ञानापह्नववादिनोऽपि प्रथममर्थमपह्नुत्य निर्विषयज्ञानानुपपत्तेर्ज्ञानमपह्नुवते" इति तत्रत्यन्यायरत्नाकरे ।

इति बर्हिविषयप्रतिपादनान्न तदभावकृता मतिसंवृतिः ।
उभयतत्त्वविदां परमार्थतः क्षममिदं धुरि धर्मविचारणे ॥

( शून्यवादान्तस्थश्लोकवार्त्तिके )

संवृतिः परमार्थश्च सत्यद्वयमिदं स्थितम् ।
बुद्धेरगोचरस्तत्त्वं बुद्धिः संवृतिरुच्यते ॥

( बोधिचर्यावतारे, ९ परिच्छेदे )

व्याख्यातं चैतत्तत्रैव—संव्रियते आव्रियतेऽनयेति संवृतिरविद्या। सा द्विधा—तथ्यसंवृतिर्मिथ्यासंवृतिश्चेति। तत्र संवृतिसत्यमदोषवदिन्द्रियैरुपलब्धं नीलादिकम्, मिथ्यासंवृतिसत्यं च दोषवदिन्द्रियोपलब्धं मायामरीचिप्रतिबिम्बादि। परम उत्तमोऽर्थः परमार्थः = अकृत्रिमं वस्तुरूपम्, यदधिगमात् सर्वावृतिवासनानुसन्धिक्लेशप्रहाणं भवति। सर्वधर्माणां निःस्वभावता शून्यता तथतेत्यादयः पर्यायाः। सर्वस्य हि प्रतीत्यसमुत्पन्नस्य परायत्तात्मलाभस्य प्रतिबिम्बस्येव कुतः सत्स्वभावता। यद्वक्ष्यति—

मायया निर्मितं यच्च हेतुभिर्यच्च निर्मितम्।
याति (चेत्) तत्कुतः कुत्र याति चेत्तन्निरूप्यताम्॥
यदन्यसन्निधानेन दृष्टं न तदभावतः।
प्रतिबिम्बसमे तस्मिन् कृत्रिमे सत्यता कथम्॥

अपि च—

न स्वतो नापि परतो न द्वाभ्यां नाप्यहेतुतः।
उत्पन्ना जातु विद्यन्ते भावाः क्वचन केचन॥ इति।

मूले कारिकायां चकारः सत्यद्वयस्यातुल्यबलतां समुच्चिनोति। तत्र संवृतिसत्यमवितथरूपं लोकस्य परमार्थसत्यं च विसंवादकं तत्त्वमार्याणामिति शेषः। सर्वभावेष्वेतत्स्वभावद्वयं वर्तते। यदाह—

सम्यग्मृषादर्शनलम्बभावं रूपद्वयं बिभ्रति सर्वभावाः।
सम्यग्दृशां यो विषयः स तत्त्वं मृषादृशां संवृतिसत्यमुक्तम्॥

अपि च—

द्वे सत्ये समुपाश्रित्य बुद्धानां धर्मदेशना।
लोके संवृतिसत्यं च सत्यं च परमार्थतः॥

सांवृतस्य सत्यत्वोक्तिस्तु लोकानुरोधेन। वस्तुतस्तु परमार्थ एवैकं सत्यम्, अतो न क्षतिः।

परमार्थसतो रूपमाह—बुद्धेरगोचरस्तत्त्वम्। बुद्धेः सर्वज्ञानानामगोचरः सर्वप्रपञ्चनिर्मुक्तस्वभावः परमार्थसत्यं कथमिव प्रतिपाद्यम्। तथापि श्रोतॄणामनुग्रहाय संवृत्या निदर्शनेन किञ्चिदभिधीयते। यथा तिमिरप्रभावात्तैमिरिकः सर्वमाकाशदेशं केशोण्ड्रकमण्डितमितस्ततो मुखं विक्षिपन्नपि पश्यति, तं तथा कुर्वन्तमवलोक्यातैमिरिकस्तत्समीपमुपसृत्यापि न किञ्चित् पश्यति तस्मै यथाभूतमसौ वदति नात्र केशाः सन्तीति। न च तेन तथा

प्रतिपादयताऽपि कस्यचित्प्रतिषेधः कृतो भवति, विधानं वा; तच्च केशानां तत्त्वं यत्तैमिरिकः पश्यति नातैमिरिकः। तदेवमविद्योपघाताद् बाला यदेतत्स्कन्धधात्वायतनादिस्वरूपमुपलभन्ते तदेषां सांवृतं रूपम्, तानेव स्कन्धान् येन स्वभावेन निरस्तसमस्ताविद्यावासना बुद्धा न पश्यन्ति तदेषां परमार्थसत्यम्। सा च शून्यता न भावाद् व्यतिरिक्ता, भावस्यैव तत्स्वभावत्वात्।

यदा न भावो नाभावो मतेः संतिष्ठते पुरः।
तदान्यगत्यभावेन निरालम्बा प्रशाम्यति॥

(बोधिचर्यावतारे ९।३५)

अत्रार्थद्वयासत्त्वभावनायां दृढायां निर्विषयस्य विज्ञानस्यापि प्रशमो वर्णितः।

सर्वशून्यतायां त्रासमाशङ्क्य समाहितं तत्रैव—

यद्दुःखजननं वस्तु त्रासस्तस्मात्प्रजायताम्।
शून्यता दुःखशमनी ततः किं जायते भयम्॥
यतस्ततो वाऽस्तु भयं यद्यहं नाम किञ्चन।
अहमेव न किञ्चिच्चेद् भयं कस्य भविष्यति॥ इति।

तस्मात्कल्पनामात्रमेतद् यदहमर्थः। शून्यमेवाऽऽभातीति निश्चितम्।

दुःखहेतुरहङ्कार आत्ममोहात्तु वर्द्धते।
ततोऽपि न निवर्त्यश्चेद्वरं नैरात्म्यभावना॥

(अभिसमयालङ्कारे, ९२ पृ०)

"ननु यदालम्ब्यते तन्नास्ति यथा द्विचन्द्रादि। सर्वधर्मशून्यताऽपि चेदालम्ब्यमाना तथैव नास्तीति सर्वधर्मास्तित्वमापद्यत इति चेददोष एषः। यस्मान्न देवदत्तप्रख्यस्याभावस्यापवादान्तस्य हन्तरि यज्ञदत्तप्रख्ये स्वभावे समारोपान्ते तच्छून्यतया हते प्रादुर्भावः" (तत्रैव ३६० पृ०) इति। तथा चार्यदेवो विज्ञानरूपस्य पुंसोऽपि शून्यत्वमाह—

दृश्यते सर्वगः कैश्चित् कैश्चित्कायमितः पुमान्।
दृश्यतेऽणुमितः कैचित् प्राज्ञैर्नास्तीति गम्यते॥

(माध्यमिकवृत्तौ)

तत्रैव—

यद्यशून्यं भवेत् किञ्चित् स्याच्छून्यमपि किञ्चन ।
न किञ्चिदस्त्यशून्यं च कुतः शून्यं भविष्यति ॥ (मा० वृ०)

इति सर्वशून्यत्वस्यापि सत्त्वं न स्वीचकार ।

प्रज्ञापारमितायामपि "निर्वाणं मायोपमं वदामि" इत्युक्तम्—

सर्वं फेनप्रतीकाशमसारं बुद्बुदोपमम् ।
निरात्मकमनित्यं च मायामरीचिकासमम् ॥ ( मा० वृ० )

"तस्मादशून्येन विना शून्यं न भवति तेन विना च शून्यं नाम न किञ्चिदस्तीति सिद्धम्" इत्यार्यदेवः ।

## अद्वैतवादस्वरूपम्

विज्ञानमेवैकं तत्त्वम् । साधितं च विज्ञानस्यैकत्वं नित्यत्वं स्वप्रकाशत्वं च पञ्चदश्यामारम्भ एव तत्त्वविवेकप्रकरणे सप्तभिः पद्यैः । ततस्त्रिभिः पद्यैरानन्दरूपत्वं प्रसाध्य तस्य सच्चिदानन्दात्मरूपस्य जीवब्रह्मभेदकल्पनायामपि—"अयमात्मा ब्रह्म", "प्रज्ञानं ब्रह्म", "अहं ब्रह्मास्मि" इत्यादिमहावाक्यैरैक्यमेवोपदिश्यत इत्युक्तम् । अद्वैतिमते विज्ञानस्य स्वप्रकाशत्वं च परप्रकाश्यत्वाभावेन, न तु स्वस्मिन् कर्मकर्तृभावाभ्युपगमेन । लोके कर्मत्वकर्तृत्वयोरेकस्मिन् विरोधदर्शनात् । न हि लोके चैत्रः स्वं गच्छतीति व्यवह्रियते । ज्ञेयानां चोत्पादविनाशशालिनां बाह्यानां न विज्ञानाकारता, विज्ञानस्य नित्यत्वेन सर्वविधविकारशून्यत्वात् ; एकस्मिन् ग्राह्यग्राहकभावानुपपत्तेश्च । किन्तु सर्वे भावा विज्ञानात्मनो भिन्नत्वाभिन्नत्वाभ्यां सत्त्वासत्त्वाभ्यां चानिर्वाच्याः, अत एव मिथ्येत्यद्वैतवादे व्यवह्रियन्ते । उक्तं चाध्यासभाष्ये भामत्याम्—"मिथ्याशब्दोऽयमनिर्वचनीयतावचनः" इति । ते च तथाभूताः सर्वे एव भावा बाह्या मायया ईशसृष्टा आन्तराश्च मनोमया अविद्यया जीवसृष्टाः । माया च त्रिगुणात्मिकाऽनिर्वाच्या ईशोपाधिः । अविद्या च तत्कार्यभूता तत्स्वभावैव जीवोपाधिः । तत्रेशो मायाध्यक्षः स्वतन्त्रः । तदुक्तं पञ्चदश्यां तत्त्वविवेकप्रकरणे—

"चिदानन्दमयब्रह्मप्रतिबिम्बसमन्विता ।
रजस्तमःसत्त्वगुणा प्रकृतिर्द्विविधा च सा ॥
सत्त्वशुद्ध्यविशुद्धिभ्यां मायाविद्ये च ते मते ।
मायाबिम्बो वशीकृत्य तां स्यात्सर्वज्ञ ईश्वरः ॥
अविद्यावशगस्त्वन्यः" इति ।

"ते ध्यानयोगानुगता अपश्यन् देवात्मशक्तिं स्वगुणैर्निगूढाम्" (श्वेता०) इति, "इन्द्रो मायाभिः पुरुरूप ईयते" इति च श्रुतिः; "दैवी ह्येषा गुणमयी मम माया दुरत्यया", "माययाऽपहृतज्ञानाः", "संभवाम्यात्ममायया" इत्यादीनि च गीतावाक्यान्युदाहृताश्च श्रुतयश्चित्रदीपप्रकरणे पञ्चदश्यां टीकायामत्र द्रष्टव्यानि।

गौडपादा अपि जगतो मायामयत्वमनिर्वाच्यत्वं च वदन्ति। तथा हि—

स्वप्नमाये यथा दृष्टे गन्धर्वनगरं यथा।
तथा विश्वमिदं दृष्टं वेदान्तेषु विचक्षणैः॥ [ २।३१ ]
विपर्यासाद्यथा जाग्रदचिन्त्यान् भूतवत्स्पृजेत्।
तथा स्वप्ने विपर्यासाद्धर्मांस्तत्रैव पश्यति॥ [ ४।४१ ]
न निर्गतास्ते विज्ञानाद् द्रव्यत्वाभावयोगतः।
कार्यकारणताऽभावाद्यतोऽचिन्त्याः सदैव ते॥ [ ४।५२ ]
उभे ह्यन्योन्यं दृश्येते किं तदस्तीति नोच्यते।
लक्षणाशून्यमुभयं तन्मतेनैव गृह्यते॥ [ ४।६७ ]

सैषा उपनिषत्सु तत्र तत्र तुच्छानृततमआदिशब्दैरपि व्यवह्रियते। तदुक्तं पञ्चदश्याम्—

तुच्छाऽनिर्वचनीया च वास्तवी चेत्यसौ त्रिधा।
ज्ञेया माया त्रिभिर्बोधैः श्रौतयौक्तिकलौकिकैः॥
स्पष्टं भाति जगच्चेदमशक्यं तन्निरूपणम्।
मायामयं जगत्तस्मादीक्षस्वापक्षपाततः॥
[ चित्रदीपप्रकरणे ]

इत्थं लौकिकदृष्ट्यैतत्सर्वैरप्यनुभूयते।
युक्तिदृष्ट्या त्वनिर्वाच्यं नासदासीदिति श्रुतेः॥
नासदासीद् विभातत्वान्नो सदासीच्च बाधनात्।
विद्यादृष्ट्या श्रुतं तुच्छं तस्य नित्यनिवृत्तितः॥

श्रुतौ च—"तम आसीत्तमसा गूढमग्रे", "अनृतेन प्रत्यूढाः" इत्यादौ मायायास्तमोऽनृतादिशब्दैर्व्यवहारः।

तत्र जीवसृष्टं मनोमयं द्वैतमेव बन्धः स्त्रीपुत्रमातापित्रादिरूपः। ईशसृष्टं तु साधारणत्वान्न बन्धरूपम्।

ज्ञानस्वरूप आत्मनि सत्यत्वज्ञानत्वानन्दत्वादयो धर्माः कल्पिता एव,-बाध्यत्वाभावजडत्वाभावदुःखाभावरूपा वाऽधिष्ठानस्वरूपाः; एतन्मतेऽभावस्याधिकरणस्वरूपत्वात्। न तु वास्तवाः, तैरेव द्वैतापत्तेः; ब्रह्मणोऽसङ्गत्वाच्च। ज्ञानेऽद्वैतं तु स्वगतसजातीयविजातीयभेदशून्यत्वरूपम्। "एकमेवाद्वितीयम्" इति श्रुतौ पदत्रयेण यथायथं भेदत्रयस्य ब्रह्मणि प्रतिषेधात्।

वृक्षस्य स्वगतो भेदः पत्रपुष्पफलादिभिः।
वृक्षान्तरात्सजातीयो विजातीयः शिलादितः॥

इत्युदाहृतं भेदत्रयं ब्रह्मणि प्रतिषिध्यते श्रुतिस्थैकाद्वितीयावधारणार्थकैवकारपदैः। मानसं तु परिणामरूपमैन्द्रियकं ज्ञानं सर्वं क्षणिकं मनसो जडत्वेन जडम्। चिदाभाससंबन्धात्तप्तायःपिण्डे दग्धृत्ववत् प्रकाशकम्। वृत्तिरूपे ज्ञान एव क्षणिकविज्ञानात्मबुद्धिर्विज्ञानवादिनाम्। वस्तुतस्तु तज्जडम्, अहं जानामीत्यनुभवरूपसाक्षिभास्यं च। सर्वप्राणभृदात्मभूतं ब्रह्मस्वरूपं विज्ञानं तु नित्यापरोक्षम्, "यत्साक्षादपरोक्षाद् ब्रह्म" इति श्रुतेः। अस्ति च मायायाः शक्तिद्वयम्—आवरणशक्तिः, विक्षेपशक्तिरिति च। तत्रावरणशक्तिर्द्विधा—असत्त्वापादकत्वाभानापादकत्वभेदेन, याभ्यां नास्त्यौपनिषद आत्मा, न भाति चेत्यनुभूयते। विक्षेपशक्त्या तु विविधं जगत् सृज्यते। सा च मायाऽज्ञानं भावरूपा तमोवन्न त्वभावरूपा, अभावस्य भावरूपसर्वजगदुपादानत्वानुपपत्तेः। आत्मनस्तु विवर्त्तभूतः संसारः, परिणामस्तु मायायाः। अतत्त्वतोऽन्यथाभावो विवर्त्तः। तत्त्वतोऽन्यथाभावः परिणामः। माया चात्माश्रयाऽऽत्मविषया च। तदुक्तं संक्षेपशारीरके—

आश्रयत्वविषयत्वभागिनी निर्विभागचितिरेव केवला।
पूर्वसिद्धतमसो हि पश्चिमो नाश्रयो भवति नापि गोचरः॥

तस्याश्च न स्वरूपभूतज्ञानेन विरोधः, 'अहमज्ञः' इत्याद्यनुभवेन तस्य तत्साधकत्वात्; किन्तु वृत्तिरूपज्ञानेनाधिष्ठानसाक्षात्काररूपेण। "ब्रह्मविद् ब्रह्मैव भवति", "तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय", "तत्र को मोहः कः शोक एकत्वमनुपश्यतः", "आत्मानं चेद् विजानीयादयमस्मीति पूरुषः। किमिच्छन् कस्य कामाय शरीरमनुसंज्वरेत्", "भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः। क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे॥" इत्यादिश्रुतिशतेभ्यः, युक्तेश्च। तथा हि—यथा शुक्त्यज्ञानकल्पितं रजतं शुक्तिसाक्षात्कारे जाते निवर्तते, तथैवात्माज्ञानकल्पितं

जगत्तस्मिन् साक्षात्कृते निवर्तत इति युक्तम्। न चासङ्गस्य निर्धर्मकस्य कथं साक्षात्कारगोचरता, तथाऽदृष्टत्वादिति वाच्यम्; जडवच्चिदाभासविषयत्वानङ्गीकारेऽपि वृत्तिविषयत्वाङ्गीकारात्।

ब्रह्मण्यज्ञाननाशाय वृत्तिव्याप्तिरपेक्षिता।
फलव्याप्यत्वमेवास्य शास्त्रकृद्भिर्निवारितम्॥ [ पञ्चदशी ]

अत्र फलपदेन चिदाभासः, आत्मनः साक्षात्काररूपत्वेन साक्षात्कारानपेक्षणाच्च।

स चात्मसाक्षात्कारः श्रवणमनननिदिध्यासनैरपि तत्तद्वर्णाश्रमोचितनित्यनैमित्तिककर्मानुष्ठानसभक्तिकसगुणब्रह्मशीलनसंस्कृतचेतसामेव जायत इति सर्वेषां कर्मादिपथानामात्मसाक्षात्कार एवारादुपकारकत्वम्। तथा च श्रुतिः—

सर्वे वेदा यत्पदमामनन्ति तपांसि सर्वाणि च यद्वदन्ति।
यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदं संग्रहेण प्रवक्ष्ये॥ ओमित्येतत्।

अन्यथाऽऽलस्येनाश्रद्धया वा कर्मत्यागे—

अकुर्वन् विहितं कर्म निन्दितं च समाचरन्।
प्रसजँश्चेन्द्रियार्थेषु नरः पतनमृच्छति॥

इत्यादिस्मृतिबोधितः प्रत्यवायः प्राप्नोत्येव।

त्रिविधं च सत्त्वं व्यावहारिकं प्रातिभासिकं पारमार्थिकं चाद्वैतवादे स्वीक्रियते। तथा वस्त्वपि त्रिविधम्। यद्वैकैव सत्ताऽऽधिष्ठानानुगता सर्वत्र भासत इति न सत्तात्रैविध्यम्। अद्वैते बुद्ध्यवताराय च बह्व्यः प्रक्रियास्तत्र तत्राद्वैतिभिः समाश्रिताः। तत्र न प्रक्रियायामादरः,

अभीष्टसिद्धावपि खण्डनानामखण्डि राज्ञामिव नैवमाज्ञा।
तत् किं न तान्येव यथाभिलाषं सैद्धान्तिकेऽप्यध्वनि योजयध्वम्॥

इति खण्डनकृदुक्तेः।

यया यया भवेत्पुंसां व्युत्पत्तिः प्रत्यगात्मनि।
सा सेह प्रक्रिया साध्वी विपरीता ततोऽन्यथा॥

इति वार्त्तिककृदुक्तेश्च। अतो न परस्परं प्रक्रियाविरोधोऽद्वैतवादिनाम्।

यद्यपि श्रुतावपि तत्र तत्र सृष्ट्याद्युपन्यासमुखेन "द्वा सुपर्णा" इत्यादिरीत्या च द्वैतमुपन्यस्यते, तथाप्युपक्रमोपसंहारादितात्पर्यनिर्णायकप्रमाणपर्यालोचनेनाद्वैत एव श्रुतीनां तात्पर्यम्, अद्वैतस्य प्रमाणान्तराप्राप्तत्वेन

विधेयत्वात्; द्वैतस्य तु पांशुलपादेन हालिकेनापि विदितस्याविधेयत्वात्। तदुक्तम्—

अध्यारोपापवादाभ्यां निष्प्रपञ्चं प्रपञ्च्यते ॥ इति,
उपायः सोऽवताराय नास्ति भेदः कथञ्चन ॥ इति च।

अद्वैतवादिनां मोक्षस्तु मोहनिवृत्तिविज्ञातत्वाभ्यामुपलक्षित आत्मैव। तथा च वार्त्तिकम्—"निवृत्तिरात्मा मोहस्य ज्ञातत्वेनोपलक्षितः" इति, मोहनिवृत्तेरधिष्टानमात्रस्वरूपत्वात्। "अधिष्ठानावशेषो हि नाशः कल्पित-वस्तुनः" इति तदीयसिद्धान्तात्। तथा च प्रकाशमानानन्दात्मरूपो मोक्षोऽद्वैतवादे। प्रसाधितं चैतदद्वैतसिद्धिमङ्गलपद्यव्याख्यावसरे श्रीगौडब्रह्मानन्द-स्वामिभिः। साक्षात्कारे जातेऽपि प्रारब्धकर्मशेषेण विदेहकैवल्याभावे जीवन्मुक्तिरपि तैः स्वीक्रियत एव, "तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्ये" इत्यादिश्रुतिभ्यो जनकाद्युपाख्यानेभ्यश्च।

अद्वैतवादिमतं च बोधिचर्यावतारपञ्जिकायां नवमपरिच्छेदे षष्टितम-कारिकाव्याख्यानशेष एवमुपन्यस्तम्—

"उपनिषद्वादिनस्तु समस्तप्राणिसंतानान्तर्गतमेकमेव व्यापि नित्यं च ज्ञानमिच्छन्ति। तद्विवर्त्तरूपतया सकलमिदं क्षितिजलपवनहुताशनादिकं जगदवभासते। तत्स्वभाव एव चात्मा। न बाह्यं किमप्यवयविपरमाण्वा-दिकं ग्राह्यं प्रमाणप्रसिद्धमस्ति" इति। आह च –

नित्यज्ञानविवर्त्तोऽयं क्षितितेजोजलादिकः।
आत्मा तदात्मकश्चेति संगिरन्तेऽपरे पुनः॥
ग्राह्यलक्षणसंयुक्तं न किञ्चिदिह विद्यते।
विज्ञानपरिणामोऽयं तस्मात्सर्वं परीक्ष्यते॥ इति।

अत्र 'अपरे' इत्युत्तरान्वयि, विज्ञानवादिबौद्धाभिप्रायेण; विज्ञानपरि-णामस्य ग्राह्यस्य तेनैवाभ्युपगमात्। एतत्पञ्जिकादर्शनेनाद्वैतिनामौपनिष-दत्वं वादिनोऽपि स्वीकुर्वत इत्यायाति।

## आक्षेपपरिहारः

एवं वादत्रयस्वरूपव्याक्रिययैव यद्यपि तेषां परस्परं भेदव्याक्रिया जातैव, तथापि दुर्बोधत्वेन सुविशदं प्रदर्श्यते। तत्र पूर्वं यदुक्तं श्रीविज्ञानभिक्षुणा सांख्य-प्रवचनभाष्ये मायावादिनो विज्ञानवाद्येकदेशित्वं प्रछन्नबौद्धत्वं च, तत्र विज्ञानवाद्येकदेशित्वप्रवादं विज्ञानवादाद्वैतवादयोः स्वरूपभेदप्रदर्शनावसरे

पराकरिष्ये। अधुना तु प्रच्छन्नबौद्धत्वप्रवादः—"मायावादमसच्छास्त्रम्" इत्यादिवचनावलम्बेन कृतो निराक्रियते। तत्रानन्दाश्रममुद्रितपद्मपुराणस्थ-टिप्पण्याम्—"मायावादमसच्छास्त्रं प्रच्छन्नं बौद्धमेव च" इत्यादिवचनानां क० ज० झ० फ० पुस्तकस्थत्वकथनादसर्वगतत्वेन प्रक्षिप्तत्वम्। किञ्च "मायावादं प्रच्छन्नं बौद्धं मयैव कथितम्" इत्युक्तौ सच्छास्त्रस्यापि मायावादस्यौपनिषदस्य परिग्रहः स्यादिति तत्परिहारायासच्छास्त्रमिति तद्विशेषणमुक्तम्। तथा चात्रासच्छास्त्रमायावादोद्देशेन प्रच्छन्नबौद्धत्वं विधीयते, न तु मायावादोद्देशेनासच्छास्त्रत्वं प्रच्छन्नबौद्धत्वञ्च, वाक्यभेदात्। प्रच्छन्नबौद्धत्वविधानेनेनासच्छास्त्रत्वसिद्धौ तद्विधानासंभवाच्च, अप्राप्ते हि शास्त्रमर्थवदिति न्यायात्। दृश्यते चान्योऽपि कश्चन मायावादः। यथा ज्ञानसंहितायां २१ तमेऽध्याये—

> असृजच्च महातेजाः पुरुषं स्वात्मसम्भवम्।
> मायिमायामयं तेषां धर्मविघ्नार्थमच्युतः॥

विष्णुरुवाच—

> मायिन् मायामयं शास्त्रं षोडशाख्यसहस्रकम्।
> श्रौतस्मार्तविरुद्धं च वर्णाश्रमविवर्जितम्॥
> एतच्छास्त्रं त्वया ग्राह्यं विस्तारं तद्गमिष्यति।
> पाषण्डः स्थापितस्तेन विष्णुना विश्वयोनिना॥ इति।

तस्मादद्वैतवादविद्वेषमूलक एवैष श्रीभिक्षोर्विभ्रमः। अन्यथा नित्यविज्ञानविवर्त्तो बाह्यार्थोऽद्वैतवादे, क्षणिकविज्ञानपरिणामो बाह्यार्थो विज्ञानवाद इति महत्यन्तरे पूर्वोदाहृतशान्तरक्षितवचःप्रतिपादिते जाग्रत्यप्यद्यावधिलोकैर्वन्दितं वादिभिश्चोदयनादिभिः समादृतमनिर्वचनीयख्यातिपक्षं ब्रुवाणं लोकशङ्करं शङ्करं विज्ञानवाद्येकदेशित्वेन प्रच्छन्नबौद्धत्वेन वेदान्तिब्रुवत्वेन च कथमधिक्षिपेत। तथा ह्युदयन आत्मतत्त्वविवेके शून्यवादिना सह विवादे—"स्वतः सिद्धश्चेत्, आयातोऽसि मार्गेण" इत्युपक्रम्यानिर्वचनीयख्यातिपक्षं सम्यक् प्रदर्श्य—"तदास्तां तावत्, किमार्द्रकवणिजो वहित्रचिन्तया" इति ब्रुवन् स्वं च परं चार्द्रकवणिक्सममनिर्वचनीयख्यातिवादिनं च श्रेष्ठिसमं ब्रूते, अग्रे च—"प्रविश वाऽनिर्वचनीयख्यातिकुक्षिम्, तिष्ठ वा मतिकर्दममपहाय न्यायनयानुसारेण नीलादीनां पारमार्थिकत्वे। तस्मात्—

> न ग्राह्यभेदमवधूय धियोऽस्ति वृत्तिस्तद्बाधने बलिनि वेदनये जयश्रीः।
> नो चेदनिन्द्यमिदमीदृशमेव विश्वं तथ्यं तथागतमतस्य तु कोऽवकाशः॥"

इति प्राह। तत्र 'बलिनि वेदनये' इत्युक्त्या बलवत्त्वं वैदिकत्वं चानिर्वचनीयख्यातिपक्षस्याभिधत्ते। द्वादशदर्शनीकान्तारकेसरी वाचस्पतिरपि भामतीमङ्गलपद्येऽपूतस्य स्ववचस आचार्यकृतिनिवेशनेन जाह्नवीजलेनेव पूतत्वमाशंसतीत्यलमारोपिताचार्यनिन्दानिरसनप्रयासेन।

## विज्ञानवादाद्वैतवादयोस्तुलना

साम्प्रतं विज्ञानवादाद्वैतवादयोर्भेदाः सप्रमाणं[1] प्रदर्श्यन्ते; तथा हि—

१. विज्ञानवादी विज्ञानस्य क्षणिकत्वं ब्रूते, यत्सत् तत्क्षणिकमिति स्थितेः। अद्वैती तु नित्यत्वम्। साधितं चैतत्पञ्चदश्यामारम्भ एव। उक्तं च तत्र तत्रोपनिषत्सु गीताभाष्यादिषु च।

२. प्रथमो विज्ञानस्यानेकत्वम्, क्षणिकत्वेन; अद्वयत्वं तु समानकालिकसजातीयानेकमूलविज्ञानसत्त्वाभावाभिप्रायेण। आलयविज्ञानानि प्रवृत्तिविज्ञानानि च भिद्यन्ते, तेषामुपादानभूतं मूलविज्ञानं त्वेकमेवेति सिद्धान्तात्। समाधिदशायां मोक्षदशायां च ग्राह्यग्राहकाकारद्वयशून्यत्वेन च। तदुक्तम्—

द्वयग्राहविसंयुक्तं लोकोत्तरमनुत्तमम्।
निर्विकल्पं मलापेतं ज्ञानं स लभते पुनः॥ इति।

[ महायानसूत्रालङ्कारे २८ ]

द्वितीयः कूटस्थनित्यत्वेनैकत्वम्, "एकमेवाद्वितीयम्" इत्यादिश्रुतेर्बहुशो भाष्यादिषु श्रुतत्वात्।

३. प्रथमो विज्ञानस्य परिणामम्। स च परिणामो न सङ्ख्यानामिव सान्वयः, किन्तु निरन्वयः। तथा च विज्ञप्तिमात्रतासिद्धिप्रथमकारिकाव्याख्याने परिणामलक्षणम्—"कारणक्षणनिरोधसमकालः कारणक्षणविलक्षणः कार्यस्यात्मलाभः परिणामः", "एवं च सर्वं विज्ञेयं परिकल्पितस्वभावत्वाद् वस्तुतो न विद्यते। विज्ञानं पुनः प्रतीत्यसमुत्पन्नत्वाद् द्रव्यतोऽस्तीत्यभ्युपेयम्। प्रतीत्यसमुत्पन्नत्वं पुनर्विज्ञानस्य परिणामशब्देन ज्ञापितम्" इति।

द्वितीयो विवर्त्तम्। अतात्त्विकोऽन्यथाभावरूपो विवर्त्तस्तु भामतीमङ्गलपद्ये शारीरकभाष्ये सुबहुशः श्रुत इति न तत्र प्रयस्यते।

४. प्रथमो विज्ञानस्यार्थाकारः परिणाम इति ब्रूते, द्वितीयस्त्वन्तःकरणस्यार्थाकारः परिणामो वृत्तिरूप इति।

---

१. अत्रानुक्तानि च मानानि तत्तद्वादस्वरूपनिर्देशप्रकरणतः प्रागुक्ताद् द्रष्टव्यानि।

५. प्रथमो बाह्यार्थसत्तां न स्वीकुरुते, द्वितीयस्तु वृत्तिहेतुतया तत्सत्ता-मभ्युपैति । तदुक्तं द्वैतविवेकप्रकरणे पञ्चदश्याम्—

विज्ञानवादो बाह्यार्थवैयर्थ्यात् स्यादिहेति चेत् ।
न ह्यद्याकारमाधातुं बाह्यस्यापेक्षितत्त्वतः ॥
वैयर्थ्यमस्तु वा बाह्यं न वारयितुमीश्महे ।
प्रयोजनमपेक्षन्ते न मानानीति हि स्थितिः ॥

६. प्रथमो विज्ञानपरिणामस्य ग्राह्यार्थस्य मायोपमत्वम् । तदुक्तं महा-यानसूत्रालङ्कारे—"मायोपमान् पश्यति लोकधातून्", "मायोपमान् वीक्ष्य स सर्वधर्मान्" इति ।

द्वितीयो मायापरिणामत्वेन मायामयत्वम्, "तद्धेदं तर्ह्यव्याकृतमासी-त्तन्नामरूपाभ्यामेव व्याक्रियत" इत्यादिश्रुतीनां सुबहुशः समुल्लेखात् ।

७. प्रथम एकस्मिन् ग्राह्यग्राहकभावाभ्युपगमेन स्वप्रकाशत्वम् । द्वितीयः परप्रकाश्यत्वाभावेन प्रकाशरूपत्वेन च स्वप्रकाशत्वम् ।

८. विज्ञानवादे विज्ञानस्य ग्राह्यग्राहकाकारपरिणामनिवृत्तिर्मोक्षः । अद्वैतवादे नित्यनिवृत्तस्याविद्याप्राप्तस्य च प्रपञ्चस्य निवृत्तिर्ज्ञानमात्रम् ।

९. आद्यो बाह्यार्थस्य सांवृतं सत्त्वं मन्यते । संवृतिश्च भ्रान्तिधीरे-वानिर्वाच्या, वक्ष्यमाणलङ्कावतारसूत्रोक्तरीत्या । द्वितीयस्तु व्यावहारिकं प्रातिभासिकं च सत्त्वम्, तत्प्रयोजकं चानिर्वाच्यमविद्याद्वितयम्, मूल-तूलभेदेन ।

१०. आद्यमते विज्ञानस्य वासनासहकारेण स्वाकारजगत्स्रष्टृत्वम् । द्वितीयमते मायासहकारेणाविद्यासहकारेण च । ईशजीवयोः स्वातिरिक्त-जगद्विवर्त्तोपादानत्वम् । तत्रेशशक्तिर्माया व्यावहारिकजगदुपादानम्, अविद्या च जीवात्मशक्तिः । सा तु मनोमयप्रातिभासिकजगदुपादानम् ।

११. आद्यमते सर्वं विज्ञानं स्वलक्षणमात्रविषयकं निर्विकल्पकम्, अपोहादिविषयकं सविकल्पकं वा भ्रान्तम्; असदर्थावभासनात् ।

द्वितीयमत औपनिषदं तत्त्वमस्यादिवाक्योत्थमखण्डब्रह्मविषयकं निर्विकल्पकं स्वार्थाबाधेन सर्वथा प्रमाणम् ।

१२. प्रथमो भ्रान्तिमेवाविद्यां भावत्वेनाभावत्वेन चानिर्वाच्यामना-दिपरम्परासिद्धत्वेन नित्यां च मन्यते । तदुक्तं लङ्कावतारे—"नित्यशब्दः पुनर्भगवन् क्व अभिहितः ? भगवानाह—भ्रान्तौ महामते ! कथं पुनर्महामते

भावाभावविवर्जिता भ्रान्तिः.........एतस्मात् कारणात् शाश्वता भ्रान्तिः'' इति [ द्वितीये परिवर्ते ] ।

द्वितीयस्तु—

"भ्रमात्संस्कारतोऽप्यन्या मण्डूकमृदुदाहृतेः ।
अविद्याऽनादिभावात्मा मता वाचस्पतेरिह ॥'' [ कल्पतरौ ]

इति वदन् भ्रमसंस्कारोभयभिन्नाऽनिर्वाच्याऽऽत्मशक्तिरनादिभावरूपाऽविद्येति मन्यते ।

१३. योगाचारमतम् —"आत्मैवेदं सर्वम्'' इत्यादिश्रुत्योपक्रान्तम् । अद्वैतमतं तु "अगन्धमरसम्'' इत्यादिनोपसंहृतं सिद्धान्तभूतम् । तथा चात्मतत्त्वविवेकान्त उदयनाचार्यः—"अथार्थाकारः, यमाश्रित्य त्रैदण्डिकमतोपसंहारः, योगाचारसमुत्थानं च; तत्प्रतिपादनार्थम्—'आत्मैवेदं सर्वम्' इत्यादि, तद्धानार्थम्—'अगन्धमरसम्' इत्यादि'' इति ।

## शून्यवादाद्वैतवादयोस्तुलना

अथ शून्यवादाद्वैतवादयोर्भेदाः सोपपत्तिकं निरूप्यन्ते । तेनैव शून्यवादमायावादयोर्वैलक्षण्याभाव इति मध्वमाध्ववचसोः पराक्रिया भविष्यतीति न पृथक् तत्र प्रयत्यते ।

१. शून्यवादे परमार्थतत्त्वं शून्यत्वम् । तच्च सत्त्वादिनाऽनिर्वाच्यं सर्वेषां भावानां परमार्थरूपम् । द्विविधं हि वस्तूनां तत्त्वम्—सत्त्वमसत्त्वं च । तदुक्तमध्यासभामत्याम्—"बाह्या अप्याहुः—स्वरूपपररूपाभ्यां नित्यं सदसदात्मके । वस्तुनि ज्ञायते किञ्चित् कैश्चिद्रूपं कदाचन ॥'' इति । तत्र सत्त्वं तेषां सांवृतं रूपम्, तच्चानिर्वाच्यं बाध्यं च; भावाभावविलक्षणभ्रान्तिरूपसंवृतिप्रयुक्तत्वेन तत्स्वभावत्वात् । शून्यत्वरूपमसत्त्वं तु तेषां पारमार्थिकम्; यथा घटस्य स्वरूपेण भावरूपता, पटाद्यभावरूपेणाभावरूपता । यद्यपि शून्यत्वमनिर्वाच्यत्वेन नासत्त्वरूपं तथापि सत्त्वाभावरूपतयाऽसत्त्वं व्यवह्रियते । यथाऽनिर्वाच्यमायाया अभावविलक्षणतया भावरूपत्वं क्वचिदौपनिषदैर्व्यवह्रियते । तदुक्तम् —

न सन्नासन्न सदसन्न चाप्यनुभयात्मकम् ।
चतुष्कोटिविनिर्मुक्तं तत्त्वं माध्यमिका विदुः ॥ इति ।

किञ्च, माध्यमिककारिकासु पञ्चविंशे प्रकरणे—

अप्रहीणमसंप्राप्तमनुच्छिन्नमशाश्वतम् ।
अनिरुद्धमनुत्पन्नमेवं निर्वाणमुच्यते ॥

इत्युपक्रम्य कारिकाष्टादशकेन कुलकेन भावाभावविलक्षणत्वं शून्यत्वरूपस्य निर्वाणस्य वर्णितम्। न च तत्रैव षड्विंशे प्रकरणे—"यः प्रतीत्यसमुत्पादः शून्यतां तां प्रचक्ष्महे" इति प्रतीत्यसमुत्पादरूपं शून्यत्वमुक्तम्, तेन विरोध इति वाच्यम्; भावितस्य प्रतीत्यसमुत्पादस्य प्रागुक्तरूपशून्यत्वज्ञापकत्वेन शून्यत्वरूपत्वोक्तेः। अत एवाग्रे—"यः प्रतीत्यसमुत्पादं पश्यतीदं स पश्यति" इति तत्रैवोक्तम्।

तच्च शून्यत्वरूपं भावानामसत्त्वमनिर्वाच्यत्वेऽपि न बाध्यम्, किन्तु परमार्थभूतम्; नैरात्म्यभावनापर्यन्तायाः सर्वशून्यत्वभावनाया गोचरीभूतस्य शून्यत्वस्य बाधकाभावेनाबाधात्। न च शून्यत्वं पारमार्थिकमपि विज्ञानरूपम्, "ओं शून्यताज्ञानवज्रस्वभावात्मकोऽहमित्यधितिष्ठेत्" इति साधनमालावचनात्, "केवलाद्वयविज्ञप्तिलक्षणामनन्तां पश्येत्" इति रत्नाकरशान्तिपादोक्तेश्च; इति न शून्यवादाद्वैतवादयोर्भेद इति वाच्यम्; शून्यत्वस्य पारमार्थिकत्वेऽपि तद्दृष्टेर्विधेयत्वेनापारमार्थिकत्वात्। अत एव 'पश्येत्', 'अधितिष्ठेत्' इति लिङ्प्रयोगः। तदुक्तम्—

> नेष्टं तदपि धीराणां विज्ञानं पारमार्थिकम्।
> एकानेकस्वभावेन विरोधाद् वियदब्जवत्॥ इति।

एतेन गौडपादीयकारिकाभिनववृत्तिकृदुक्तं शून्यत्वस्य ज्ञानरूपत्वं प्रत्युक्तम्। तत्र प्रमाणानि च व्याख्यातानि। शून्यत्वदृष्टेः पारमार्थिकत्वं तु विषयपारमार्थिकत्वेन। यदि शून्यत्वं ज्ञानरूपमेव स्यात्तदा विज्ञानवादशून्यवादयोर्भेदो दुरुपपादः स्यात्।

अद्वैतवादे परमार्थतत्त्वं सच्चिदानन्दरूपं ब्रह्म नित्यविज्ञानस्वरूपम्, निरधिष्ठानिकाया ग्राह्यकल्पनायाः शून्यत्वकल्पनाया वाऽसम्भवात्। एषां मते सर्वे विज्ञानातिरिक्ता भावा अनिर्वाच्यमायाकार्यत्वेनानिर्वाच्याः। विज्ञानं तु सद्रूपतया निर्वाच्यम्। अत एवाध्यासभामत्याम्—"प्रत्यक्पदमनिर्वाच्यदेहेन्द्रियादिप्रतिकूलत्वेन सत्त्वेन निर्वाच्यतयाऽऽत्मनि प्रयुज्यते" इत्युक्तम्। एतन्मते भावानां सत्त्वमनिर्वाच्यं बाध्यं च। तदुक्तं खण्डने—"एवं सति सौगतब्रह्मवादिनोरयं विशेषो यदादिमः सर्वमेवानिर्वचनीयं वर्णयति। तदुक्तं भगवता लङ्कावतारे—

> "बुद्ध्या विविच्यमानानां स्वभावो नावधार्यते।
> अतो निरभिलप्यास्ते निःस्वभावाश्च देशिताः॥" इति।

विज्ञानव्यतिरिक्तं पुनरिदं विश्वं सदसद्भ्यां विलक्षणं ब्रह्मवादिनः संगिरन्ते'' इति ।

२. शून्यवादे ग्राह्यग्राहकयोर्द्वयोरपि सांवृतं सत्त्वम् ।

अद्वैतवादे तु ग्राहकस्य पारमार्थिकं सत्त्वं ग्राह्यस्य तु व्यावहारिकं प्रातिभासिकं च ।

३. शून्यवादिमते शून्यत्वस्य सत्त्वादिनाऽनिर्वाच्यत्वेन निरधिष्ठानैव सर्वा कल्पना । यद्यपि सा न दृष्टचरी, तथापि युक्तिबलात् सर्वशून्यत्वसिद्धौ स्वीकर्तव्या भवतीति ।

अद्वैतिमते सत्त्वेन निर्वाच्यस्य विज्ञानस्य कल्पनाधिष्ठानत्वम्, कल्पनायाः सदधिष्ठानिकाया एव दृष्टत्वात् ।

४. शून्यवादिमते प्रागुक्तानिर्वाच्यसर्वशून्यत्वरूप एव मोक्षः । अद्वैतिमते तु मोहनिवृत्त्युपलक्षितः प्रकाशमानानन्दरूपः ।

५. सर्वशून्यत्ववादे नैरात्म्यभावना मोक्षोपायः । अद्वैतवादिमते त्वैकात्म्यभावनेति भेदः ।

६ सौगतयोरपि प्रागुक्तयोर्निरीश्वरवादः । अद्वैतवादे तु व्यावहारिकमीश्वरसत्त्वम् ।

७. शून्यवादोऽसत्कारणतावादत्वेन श्रुतौ श्रुतः—"तद्धैक आहुरसदेवेदमग्र आसीदिति । कथं नु खलु सौम्यासतः सज्जायेत'' इति । तथा चात्मतत्त्वविवेकान्त उदयनाचार्यः—"अथार्थाभावः, यमाश्रित्य वेदान्तद्वारमात्रोपसंहारः शून्यत्वनैरात्म्यसमुत्थानं च; तत्प्रतिपादनार्थम्—'असदेवेदमग्र आसीत्' इत्यादि । तद्धानाय—'अन्धं तमः प्रविशन्ति ये के चात्महनो जनाः' इत्यादि'' इति ।

अद्वैतवादस्तु सत्कारणतावादत्वेन—"सदेव सौम्येदमग्र आसीदेकमेवाद्वितीयम्'' इत्यादिश्रुतिषु श्रुतः ।

## सौगतब्रह्मवादयोः पार्थक्यम्

तदित्थं सौगतब्रह्मवादिनोर्भेदे सुमहति सिद्धे यत्तयोरैक्यप्रसाधनाय कारिकाचयमुपन्यस्यन्ति—

"अस्ति नास्त्यस्ति नास्तीति नास्ति नास्तीति वा पुनः ।
चलस्थिरोभयाभावैरावृणोत्येव बालिशः ॥

कोट्यश्चतस्र एतास्तु ग्रहैर्यासां सदाऽऽवृतः ।
भगवानाभिरस्पृष्टो येन दृष्टः स एव सः ॥

[ माण्डू० अलात० ८२–८३ ],

न सन्नासन्न सदसन्न चाप्यनुभयात्मकम् ।
चतुष्कोटिविनिर्मुक्तं तत्त्वं माध्यमिका विदुः ॥

[ माध्य० का० ]

चतुष्कोटिविनिर्मुक्तमद्वैतिनां विज्ञानम्, तादृशमेव माध्यमिकानां शून्यत्वमिति न कोऽपि भेदः'' इति; तदपि तात्पर्यद्वयानवबोधात् । तथा हि—अस्ति नास्तीत्यादि प्रागुक्तकारिकाद्वयात्प्राक्—

अजमनिद्रमस्वप्नं प्रभातं भवति स्वयम् ।
सकृद् विभातो ह्येवैष धर्मो धातुस्वभावतः ॥
सुखमाव्रियते नित्यं दुःखं विव्रियते सदा ।
यस्य कस्य च धर्मस्य ग्रहेण भगवानसौ ॥

इति कारिकाद्वयं वर्तते । तथा च नित्यस्वप्रकाशरूप आत्मा प्रकृतः स चलस्थिरोभयाभावैः; अस्तीति, नास्तीति, अस्ति नास्तीति, नास्ति नास्तीति वा कोटिचतुष्टयैरावृतत्वात् सुखरूपेण न गृह्यते, किन्तु दुःखरूपेण गृह्यत इति कारिकाचतुष्टयस्य समानार्थः सर्वाः कल्पना नित्यस्वप्रकाश-सुखरूपस्यात्मन आवरणभूता इति तात्पर्यम् । न त्वात्मनोऽनिर्वाच्यत्वम्, सद्रूपत्वाभ्युपगमात् । इदं च तद्भाष्यदर्शनेन सुग्रहमिति तत एव ज्ञेयम् । ''न सन्नासन्'' इत्यादिमाध्यमिककारिकायास्तु चतुष्कोटिविनिर्मुक्तस्य शून्यत्वस्यानिर्वाच्यत्वे तात्पर्यमिति भेदः । शून्यत्वस्य यथा न ज्ञानरूपत्वं तथा प्रागेवोपपादितम् ।

## शून्यवादखण्डनम्

गौडपादकारिकासु च शून्यवादिमतं प्रत्याख्यातमपि—

सतो हि मायया जन्म युज्यते न तु तत्त्वतः ।
तत्त्वतो जायते यस्य जातं तस्य हि जायते ॥
असतो मायया जन्म तत्त्वतो नैव युज्यते ।
वन्ध्यापुत्रो न तत्त्वेन मायया वाऽपि जायते ॥

[ अद्वैतप्रकरण० २७–२८ ]

व्याख्यातं च भाष्यकृद्भिः—"असद्वादिनामसतो भावस्य मायया तत्त्वतो वा न कथञ्चन जन्म युज्यते, अदृष्टत्वात्। न हि वन्ध्यापुत्रो मायया तत्त्वतो वा जायते, तस्मादत्रासद्वादो दूरत एवानुपपन्न इत्यर्थः" इति। शून्यवादे कार्यकारणभावो नोपपद्यत इति विवर्त्तवाद एव सदधिष्ठानककल्पनारूप आश्रयणीय इति तत्तात्पर्यम्।

तत् सिद्धं शून्यवादविज्ञानवादाभ्यां विलक्षण एवाद्वैतवाद औपनिषद इति कृतं पल्लवितेन।

दुर्दर्शमतिगम्भीरमजं साम्यं विशारदम्।
विचार्य पदमद्वैतं नमस्कुर्मो यथाबलम्॥



# प्रतिबिम्ब-तत्त्व-समीक्षा

या देवी सर्वभूतेषु छायारूपेण संस्थिता।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥

या बिम्बप्रतिबिम्बभावविदितव्यावृत्तविश्वात्मता,
या बुद्धिः प्रकृतिः सृजत्यविरतं जीवान् पृथक् स्वाश्रयान्।
या बुद्धेः परतः पराऽस्य जगतो मूलं गुणैर्गुम्फिता,
सा नैर्गुण्यगिरैकगीतगरिमा शक्तिः परा दीव्यतु ॥

अथातः समीक्ष्यते प्रतिबिम्ब-तत्त्वम्, यतो भोगे चापवर्गे चोभयत्र उपयोगस्तत्समीक्षायाः। तथा हि—भोगो व्यवहारसम्यग्ज्ञानपूर्वकाद् व्यवहारकौशलात् प्रसिद्ध्यति। साम्प्रतं हि दूरदेशस्थितानामपि शत्रुमित्रोदासीनानां व्यवहारः 'टेलीवीजन'-यन्त्रेण भवति। तत्र च विद्युद्वेगेन शब्दसन्दर्भ इव प्रतिबिम्बोऽपि समायाति। 'कैमरा'-यन्त्रेण च नायकयोरन्यतरस्योभयोर्वा शत्रुमित्रोदासीनानां तद्देशानाञ्च सुशकं शोभनञ्च प्रतिबिम्बग्रहणं भवति। समागम-युद्धाद्युपयोगिविवादपदविलोपसम्भावनायाञ्च 'कैमरा'-यन्त्रेण प्रतिबिम्बग्रहणस्य च महान् उपयोगो व्यवहारे। अपवर्गमार्गेऽपि च 'अविद्याप्रतिबिम्बो जीवः; अन्तःकरणप्रतिबिम्बो जीवः, छायाप्रतिबिम्ब ईश्वरः' इत्येवंविधाः सन्ति बहवः सिद्धान्ता इति तत्रापि प्रतिबिम्बस्य सत्यत्वासत्यत्वव्यवस्थाफलिका प्रतिबिम्बतत्त्वसमीक्षा उपयुज्यत एव।

एवं प्रतिबिम्बतत्त्वसमीक्षायामर्थवत्त्वेन प्रसक्तायां तदुपष्टम्भाय प्राक् प्रतिबिम्बतत्त्वविषये त्रयो विकल्पाः समुपस्थाप्यन्ते। ते यथा—

१. बिम्ब एव प्रतिबिम्बः। केवलं तत्रोपाधिसन्निधानेन अन्यत्वं दर्पणाद्यन्तर्गतत्वञ्च अवभासते, न तु बिम्बात् प्रतिबिम्बस्य पृथगस्तित्वमिति विवरणकाराः।

२. वार्त्तिककारास्तु—उपाधिसन्निधानेऽनिर्वाच्यं प्रतिबिम्बं रजतादिवत् समुत्पद्यावभासते। तत्र बिम्बमविद्या चेत्युभयमुपादानकारणम्, उपाधिस्तु निमित्तकारणमिति।

३. अयमपि च तृतीयः पक्षः सम्भाव्यते—बिम्बोपादानकं बिम्बसमसत्ताकं प्रतिबिम्बं व्यावहारिकमिति । तत्राद्यं मतद्वयं प्रथमश्लोकव्याख्याने अन्तःकरणप्रतिबिम्बस्य जीवस्य स्वरूपनिरूपणप्रसङ्गे उपन्यस्तं 'सिद्धान्तबिन्दौ' । तस्य च प्रतिबिम्बस्य सत्यत्वमेवेति प्रतिबिम्बवादिनः, मिथ्यात्वमेवेति आभासवादिनः । स्वरूपे तु न विवाद इत्यन्यत् । अचेतनविलक्षणत्वं तु तस्य श्रुतिसिद्धं प्रत्यक्षसिद्धञ्चेति ।

उपपादितश्च प्रथमः कल्पः 'सिद्धान्तलेशे' द्वितीयपरिच्छेदे प्रतिबिम्बनिरूपणावसरे । तथा हि—"अत्र विवरणानुसारिणः प्राहुः, ग्रीवास्थ एव मुखे दर्पणोपाधिसन्निधानदोषाद् दर्पणस्थत्वप्रत्यङ्मुखत्वबिम्बभेदानामध्याससम्भवेन न दर्पणे मुखाध्यासः कल्पनीयो गौरवात् । 'दर्पणे मुखं नास्ति' इति संसर्गमात्रबाधात् । मिथ्यावस्त्वन्तरत्वे 'नेदं मुखम्' इतिस्वरूपबाधापत्तेः, 'दर्पणे मम मुखं भाति' इति स्वमुखाभेदप्रत्यभिज्ञानाच्च । उपाधिप्रतिहतनयनरश्मीनां परावृत्य बिम्बग्राहकत्वनियमाभ्युपगमाच्च न बिम्बापरोक्ष्यसम्भवः । दर्पणे मिथ्यामुखाध्यासवादिनापि कारणत्रयान्तर्गतसंस्कारसिद्ध्यर्थं तटाकसलिले तट-विटपिसमारूढादृष्टचरपुरुषप्रतिबिम्बाध्यासस्थले कथमपि पूर्वानुभवस्य दुर्वचत्वात् । एवञ्च उपाधिप्रतिहतनयनरश्मीनां बिम्बं प्राप्य तद्ग्राहकत्वेऽवश्यं वक्तव्ये फलबलाद् दर्पणाद्यभिहतानामेव बिम्बं प्राप्य तद्ग्राहकत्वम्, न शिलादिप्रतिहतानाम् । अनतिस्वच्छताम्रादिप्रतिहतानां मलिनोपाधिसम्बन्धदोषाद् मुखादिसंस्थानविशेषाग्राहकत्वं साक्षात् सूर्यं प्रेप्सूनामिव उपाधिं प्राप्य निवृत्तानां न तथा सौरतेजसा प्रतिहतिरिति प्रतिबिम्बसूर्यावलोकने साक्षात्तदवलोकन इवाशक्यत्वम् । जलाद्युपाधिसन्निकर्षे केषाञ्चिदुपाधिप्रतिहतानां बिम्बप्राप्तावपि केषाञ्चित्तदन्तर्गतसिकतादिग्रहणमित्यादि कल्पनीयम् । लोकेऽवयविनः प्रत्यक्षं यथा कतिपयावयवदर्शनेनापि भवति, एवं बिम्बग्रहणमपीति न कश्चिद्दोषः ।"

अद्वैतविद्याकृतस्तु—वस्तुप्रतिबिम्बस्य मिथ्यात्वमभ्युपगच्छतामभिप्रायमेवमाहुः—चैत्रमुखाद् भेदेन तत्सदृशत्वेन च पार्श्वस्थितैस्तत्प्रतिबिम्बं दर्पणे गृह्यत इति अनिर्वाच्यं तत्तत्रोत्पद्यत इति कल्प्यते। 'दर्पणे मम मुखम्' इत्यभेदव्यपदेशस्तु गौणः । अत एव बालानां स्वप्रतिबिम्बे पुरुषान्तरत्वभ्रमेण जिहासोपादित्सादिः । 'नात्र मुखम्' इत्यनुभवेन संसर्गितया मुखस्यैव बाधो न संसर्गमात्रस्य । किञ्च—नयनरश्मीनामुपाधिप्रतिहतानां बिम्बप्राप्तिकल्पने दृष्टविरुद्धं बह्वापद्यते । तथा हि—कथं जलसम्बन्धेनापि प्रतिहन्यमाना मृदवो नयनरश्मयः सूर्यमण्डलं किरणसमूहं विजित्य प्रविशन्ति,

इत्येको दोषः। कथञ्चन चन्द्रालोकन इव तत्प्रतिबिम्बालोकने लोचनयोः शैत्याभिव्यक्त्याप्यायनमिति द्वितीयः। जलसम्बन्धेनापि प्रतिहन्यमानाः शिलादिभिः न प्रतिहन्यन्ते इत्यहेतुककल्पनारूपस्तृतीयः। उपाधिप्रतिहत-नयनरश्मीनां स्वाश्रयगोलकं प्रति निवृत्तिनियमं विहाय यत्र बिम्बं तत्रैव गमनोपगमे च पृष्ठभागव्यवहितानामपि वस्तूनां ग्रहणं स्यादिति चतुर्थः। प्रतिबिम्ब-मिथ्यात्ववादिमते प्रतिबिम्बजीवस्य मिथ्यात्वेऽपि अवच्छिन्न-जीवस्य सत्यतया मुक्तिभागित्वोपपत्तिः। अत्र मते च प्रतिबिम्बजीवस्य उपादानमविद्या, "जीवेशावाभासेन करोति, माया चाविद्या च स्वयमेव भवति" इति श्रुतेः।

अन्ते तु—मूलाज्ञानमेव प्रतिबिम्बाध्यासोपादानमिति वदन्ति। तदुपा-दानकत्वेऽपि च न प्रतिबिम्बस्य व्यावहारिकत्वम्, अविद्यातिरिक्त-दोषाज-न्यत्वस्य व्यावहारिकत्वे प्रयोजकत्वात्। प्रकृते च तदतिरिक्तबिम्बोपाधि-सन्निधिदोषसहभावेन प्रातिभासिकत्वोपपत्तेरिति।

अन्ये तु अत्रापि अपरितुष्यन्तस्तृतीयकल्पमेव रोचयन्ते। तत्र प्रतिबि-म्बस्य व्यावहारिकसत्यत्वव्यवस्थापनाङ्गतया प्रथमं छायापदार्थ एव विमृ-श्यते। तत्र 'छाया सूर्यप्रिया कान्तिः प्रतिबिम्बम्बमनातपः' (अमरकोषः, का० ३, नानार्थवर्गः, श्लो० १५७) इति शक्तिग्राहककोशोपलब्ध्या प्रति-बिम्बोऽपि छायापदार्थः। तथा च छाया हि नाम 'शरीरादेस्तत्तदवयवैरा-लोके कियद्देशव्यापिन्यवरुद्धे तत्तद्देशे लब्धसत्ताकं तम एव' इति सिद्धान्त-लेशे एवकारावधारणम्। 'न च मौक्तिक-माणिक्यादिप्रतिबिम्बस्य तमोविरु-द्धलोहितादिरूपवतस्तमोरूपच्छायात्वं युक्तम्' इत्यादिसिद्धान्तलेशवाक्यं न युक्तिसहम्। किञ्च—तमोरूपा छायापि अस्वच्छः प्रतिबिम्बविशेष एव, बिम्बस्य प्रतिरूपः प्रतिबिम्ब इति अवयवार्थानुगमात्। दृश्यते च छायाया-मपि शिरोहस्तपादाद्यानुरूप्यम्।

किञ्च—दृश्यते प्रतिबिम्बेऽपि 'छाया'शब्दप्रयोगः। तद्यथा—

श्वेताभ्रघनराजीव वायुपुत्रानुगामिनी।<br>
तस्य सा शुशुभे छाया वितता लवणाम्भसि॥

(वाल्मी० रामा० सुन्दरका०, सर्गः १, श्लो० ७७)

न हि तमोरूपायाश्छायायाः श्वेताभ्रघनराजीसादृश्यं लवणाम्भसि विततत्वं च समुपपद्यते। प्रतिबिम्बस्य च स्वच्छत्वमस्वच्छत्वं च उपाधिस्व-

भावभेदेन उपपद्यते। तथा हि—आलोकेतरोपाधिषु जल-तैल-मुकुरादिषु स्वच्छः प्रतिबिम्बः, आलोके चास्वच्छस्तमोरूपः।

एवं छायाया प्रतिबिम्बरूपत्वे व्यवस्थिते प्रतिबिम्बस्य व्यावहारिक-सत्यत्वं व्यवस्थापयितुं प्रयत्यते। तथा हि–प्रतिबिम्बो बिम्बाद् भिन्नाभिन्नो बिम्बोपादानको बिम्बसमसत्ताको व्यावहारिक उपाधिसन्निधाननिमित्तिक इत्यभ्युपगन्तव्यम्। अन्यथा 'टेलीवीजन'-यन्त्रप्रयोगे शत-सहस्रादिक्रोशा-वस्थितबिम्बस्य प्रतिबिम्बं नोपलभ्येत, बिम्बदेशे नयनरश्मीनां गमना-सम्भवात्। बिम्बासन्निधानेन अनिर्वाच्यप्रतिबिम्बस्याप्युत्पत्त्यसम्भवात्। प्रतिबिम्बस्य व्यावहारिकत्वे तु शब्दसन्दर्भस्येव अस्यापि विद्युद्वेगेन एतद्देशे सन्निधानमुपपद्यते। किंच–प्रतिबिम्बस्य व्यावहारित्वाभावे 'कैमरा'–यन्त्रेण तद्ग्रहणं न स्यात्। एवं च स्वभावभेदेनैव उपाधीनां प्रतिबिम्बग्राहकत्वा-ग्राहकत्वे द्रष्टव्ये।

किञ्च प्रतिबिम्बविशेषरूपायाश्छायायाः स्पर्शवत्त्वं धर्मशास्त्रे स्मर्यते— "चण्डालपतितां छायां स्पृष्ट्वा स्नानं समाचरेत्" इति। न चैतत् छायाया बिम्बरूपत्वे तदतिरिक्ततमोरूपत्वे वा घटते।

किञ्च सुन्दरकाण्डे प्रथमसर्गे सिंहिकाकर्तृकं हनूमच्छायाग्रहणं प्रति-बिम्बस्य बिम्बोपादानकत्वं साधयति। तथा हि—

प्लवमानं तु तं दृष्ट्वा सिंहिका नाम राक्षसी।
मनसा चिन्तयामास प्रवृद्धा कामरूपिणी॥
(वाल्मी० रामा० सुन्दरका०, सर्गः १, श्लो० १८१)

इति संचित्य मनसा छायामस्य समाक्षिपत्।
छायायां गृह्यमाणायां चिन्तयामास वानरः॥
(श्लो० १८३)

समाक्षिप्तोऽस्मि सहसा पङ्गूकृतपराक्रमः।
प्रतिलोमेन वातेन महानौरिव सागरे॥
(श्लो० १८४)

प्रतिबिम्बस्य बिम्बोपादानकत्वाभावे बिम्बानुगमाभावे च प्रतिबिम्ब-ग्रहणेन बिम्बस्य प्रतिरोधो नोपपद्येत।

किञ्च—मार्कण्डेयपुराणे 'संज्ञा' नाम्नी सूर्यपत्नी 'छाया'ख्यं चेतनं स्वप्रतिबिम्बं सूर्यतेजोऽसहमाना निर्मायान्यत्र गतेति स्मर्यते। यथा—

ततः पितृगृहे गन्तुं कृतबुद्धिर्यशस्विनी ।
छायामयीमात्मतनुं निर्ममे दयितां रवेः ॥
(अ० ७७, श्लो० ११)

तां चोवाच त्वया वेश्मन्यत्र भानोर्यथा मया ।
तथा सम्यगपत्येषु वर्तितव्यं तथा रवौ ॥
(श्लो० १२)

किञ्च 'दुर्गासप्तशतके' पञ्चमाध्याये—

या देवी सर्वभूतेषु छायारूपेण संस्थिता ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥

इति देवी-प्रतिबिम्बस्य छायारूपस्य देवीरूपत्वमुच्यमानं प्रतिबिम्वस्य बिम्बोपादानकत्वं प्रमापयति ।

किञ्च—प्रतिबिम्बस्य व्यावहारिकसत्यत्वाभावे कथमन्तःकरणप्रतिबिम्बो जीवो व्यावहारिकः ? वेदान्तिनां मते हि ब्रह्मप्रमामात्रबाध्यत्वं व्यावहारिकत्वं स्वीक्रियते; तच्च प्रतिबिम्बरूपे जीवेऽस्त्येव । "रूपं रूपं प्रतिरूपो बभूव", "एकधा बहुधा चैव दृश्यते जलचन्द्रवत्" इत्याद्युपनिषत्सु हि जीवस्य प्रतिबिम्बरूपत्वं श्रूयते। गत्यागत्यादिरूपः कर्तृत्वभोक्तृत्वादिरूपश्च सर्वोऽपि संसारो व्यावहारिको जीव एवेति व्यावहारिक एव जीवः ।

किञ्च—न केवलं जीवरूपस्यैव प्रतिबिम्बस्य मूलाज्ञानोपादानकत्वम्, किन्तु सर्वस्यापि प्रतिबिम्बस्येत्यतोऽपि प्रतिबिम्बस्य व्यावहारिकत्वम् । दर्शितञ्चैतत् प्रागत्रैव ।

किञ्च—तन्त्रेषु छाया-पुरुषः साध्यते । पुराणेषु छाया-शुकः स्मर्यते । एतत्सर्वं कथं प्रतिबिम्बस्य मिथ्यात्वे संघटेत !

यत्तु प्रतिबिम्बोत्पादपक्षे दूषणमुक्तं 'वाक्यपदीये'—"पर्वतादिसरूपाणां भावानां नास्ति संभवः" इति, 'पञ्चपादिका-विवरणे' च—"तदपि उपादानपरिमाणस्य उपादेयस्वसजातीयपरिमाणजनकत्वनियम एवापतति, न चैष नियमः; परमाणुद्व्यणुकादिपरिमाणेषु व्यभिचारात् । तथा च दिनस्य पूर्वार्ध-परार्धभेदेन छायापरिमाणे बिम्ब-परिमाणवैसादृश्यं दृश्यते

युज्यते च। एवञ्चोपाध्यल्पत्वमहत्त्वाभ्यां प्रतिबिम्बे परिमाणाल्पत्व-महत्त्वे" इति सौरालोकभेदप्रयुक्ते वा इत्यादिकमनुभवानुरोधात् कल्प्यते। तथा चैतया विचारसरण्या तृतीयकल्प एव साधुः प्रतीयते।

प्रार्थ्यन्ते चान्ते विश्वविद्वांसो यत् सिंहिका-प्रतिकृतियन्त्रनिर्माणाध्यवसायेन स्वदेशोपरि विनाऽऽदेशं बलात् सञ्चरतां विदेशविमानानां छाया-ग्रहणेन गतिरोधाय प्रयतितव्यमिति।



# मुक्तिस्वरूपविमर्शः

विद्याऽविद्याविभागेन स्वं द्विधा व्यस्य संस्थिताम् ।
अपवर्गे च बन्धे च हेतुभूतां नुमः शिवाम् ॥
श्रुतिस्मृतिपुराणेषु इतिहासे च यद्धितम् ।
विशां गीतासु चाप्युक्तं पूर्वार्धे तन्निरूपितम् ॥
उत्तरार्धे तु संप्रोक्ता दर्शनानां प्रवृत्तयः ।
बाह्यानामप्यबाह्यानां मोक्षतत्साधनाश्रयाः ॥

अथातो मुक्तिं व्याख्यास्यामः । यतः कस्य नाम सहृदयस्यानुभवोपपत्तिभ्यां सुनिपुणं निरूपयत आ च सत्यलोकात्, आ चावीचेः 'जायस्व, म्रियस्व' इति विपरिवर्तमानं क्षणमुहूर्तयामाहोरात्रार्धमासमासर्त्वयनवत्सरयुगचतुर्युगमन्वन्तरप्रलयमहाप्रलयमहासर्गावान्तरसर्गसंसारसागरोर्मिभिरनिशमुह्यमानं तापत्रयपरीतमात्मानं च जीवलोकं चावलोक्यास्मिन् संसारमण्डलेऽनित्याशुचिदुःखात्मके तत्त्वेन प्रसंख्यायमान इहामुत्रार्थभोगविरागपूर्विका क्रमेण संसारबन्धान्मुमुक्षा नोपजायते, मोक्षमाणस्य च बन्ध-बन्धहेतु-मोक्ष-मोक्षहेतुजिज्ञासा नोपावर्तते । अतः प्राप्तं मोक्षस्वरूपेऽवश्यं निरूपयितव्ये प्रकृते बन्धबन्धहेतुमोक्षहेतूनां ततः प्राग् विमर्श उपोद्घातमर्यादां नातिक्रामतीति ।

तत्र लोके बन्धः सर्वेषां प्राणिनां तेन तेन रूपेण दुःखसाधनमनुभूयत इति ज्येष्ठप्रमाणप्रसिद्धे नास्त्यवरप्रमाणापेक्षा । एवं च सर्वदुःखसाधनं बन्धपक्षे निक्षिप्तमिति संसार एव दुःखसाधनत्वाद् बन्धः । यद्यपि सुखं सुखसाधनानि च सन्ति लोके, तथापि तान्यपि दुःखनान्तरीयकाणि दुःखसंसृष्टानि दुःखसाधनानि चेति बन्धरूपाण्येव । तथा च श्रीशङ्करभगवत्पादैः शारीरकभाष्येऽर्थं चानर्थं चेति द्वावप्यनर्थत्वेन वर्णितौ । काणादैर्गौतमीयैश्चैकविंशतिदुःखध्वंसं मोक्षमभ्युपगच्छद्भिः सुखमपि दुःखत्वेन परिगणितम् । बन्धहेतुश्च—अविद्या, कर्म चेत्युभयमिति प्रायेण सर्वशास्त्राभ्युपगमः । अविद्यास्वरूपे परं विप्रतिपत्तयः । अविद्या च बन्धहेतुर्विद्यया निवर्तते । विद्यास्वरूपे च विप्रतिपत्तयः । कर्माणि च मोक्षमाणैः संन्यस्तव्यानीति कैश्चिदुक्तम् ।

कैश्चित्तु कर्तव्यान्येव फलकामनाविरहितैरित्यभिहितम्। अस्मिन् समस्मिन् प्रागुक्तेऽर्थे प्रमितेऽपि प्रमाणानि नोपन्यस्यन्तेऽप्रकृतत्वाद् ग्रन्थगौरवभयाच्च।

अथेदानीमवसरप्राप्तं मोक्षहेतवो मोक्षस्वरूपं च यथाशास्त्रमुपवर्ण्यते। तत्रापि मोक्षस्य साध्यत्वाद् हेतुपरतन्त्रत्वात् पश्चाद्भावित्वाच्च प्राक् सिद्धा मोक्षहेतव एवात्र प्रागुपनिबध्यन्ते। तत्र ज्ञानस्य केवलस्य कर्मसमुच्चितस्य वा प्राधान्येनापवर्गहेतुत्वमित्यत्र सर्वेषां परीक्षकाणामविसंवादः, ज्ञानस्वरूपे परं विवादः। मीमांसकास्तु स्वर्गविशेषस्य मोक्षस्य सोमादियागादिरूपं कर्मैव साधनमिति मन्वते, "अपाम सोमममृता अभूम" इति श्रुतेः।

## तत्र श्रुतिषु मोक्षस्तत्साधनानि च

"आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदध्यासितव्यः" इत्यादिश्रुतिबलाच्छ्रवणमननध्यानानि दर्शनक्रमेण मोक्षसाधनानि। उक्तं च—

"श्रोतव्यः श्रुतिवाक्येभ्यो मन्तव्यश्चोपपत्तितः।
मत्वा च सततं ध्येय इति दर्शनहेतवः॥"

कर्माऽपि पूर्वकाण्डविहितमात्मदर्शन आरादुपकारकम्, "तमेतमात्मानं ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन" इति श्रुतेः। यज्ञेन विविदिषन्ति वेदितुमिच्छन्ति न तु विदन्ति। वेदनस्य शब्दतोऽप्राधान्येन तदन्वयासंभवात्। उपनिषत्सु विहितान्युपासनान्यपि ज्ञानोत्पत्तिक्रमेणैव मोक्षसाधनानि। तदुक्तं गीतायाम्—"वेदैश्च सर्वैरहमेव वेद्यः" इति। ध्यानरूपस्य योगस्य मुक्तिसाधनत्वे "ते ध्यानयोगानुगताः", "पृथिव्यप्तेजोऽनिलखे समुत्थिते",

"स्वदेहमरणिं कृत्वा प्रणवं चोत्तरारणिम्।
ध्याननिर्मथनाभ्यासात् तं देवं द्रष्टुमर्हति॥'

इत्याद्याः श्वेताश्वतरादिश्रुतयः प्रमाणम्। तथापि ध्यानस्य ज्ञानसाधनत्वमेव, मुख्यं मुक्तिसाधनत्वं तु ज्ञानस्यैव। तथा हि—"तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यते अयनाय", विद्वान् नामरूपाद् विमुक्तः", "तरति शोकमात्मवित्", "आत्मानं चेद् विजानीयादयमस्मीति पूरुषः" इत्याद्याः श्रुतयः। अत्रामृतत्वं नामरूपविमुक्तिः, शोकस्यैकान्तात्यन्तनिवृत्तिश्च मोक्षः। तथा चैतस्य त्रिविधस्याप्यभावस्याधिष्ठानात्मकत्वात् सच्चिदानन्दात्मरूप एव मोक्षः। तदुक्तम्—"निवृत्तिरात्मा मोहस्य ज्ञातत्वेनोपलक्षितः" इति। अत एव पुरुषार्थः।

## महाभारते मोक्षो मोक्षसाधनानि च

महाभारते उद्योगपर्वणि सनत्सुजातीये—

"न संदृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चिदेनम् ।
मनीषयाथो मनसा हृदा च य एनं विदुरमृतास्ते भवन्ति ॥
(४६।६)

"ये तद्विदुरमृतास्ते भवन्ति" । (४४।३१)
"नान्यः पन्था अयनाय विद्यते" ॥ (४४।३६)

अत्रापि ज्ञानस्यैव मुक्तिसाधनत्वम् । अमृतत्वं च मोक्षः ।

महाभारते शान्तिपर्वणि मोक्षधर्मे सर्वकामत्यागो विक्षेपनिवृत्त्या मनः-प्रसादेन ज्ञानोत्पत्तिक्रमेण मोक्षसाधनम् [ १७४, १७७ अ० ] ।

"यस्य वाङ्मनसी स्यातां सम्यक् प्रणिहिते सदा ।
तपस्त्यागश्च सत्यं च स वै परमवाप्नुयात् ॥" [१७५।३४]

अत्र वाङ्मनससमाधानेन तपस्त्यागाभ्यां च सहकृतेन सत्येन मोक्षो दर्शितः । त्यागेनैव चित्तशुद्ध्यादिक्रमेण मोक्षः । तदुक्तम्—

"नात्यक्त्वा सुखमाप्नोति नात्यक्त्वा विन्दते परम् ।
नात्यक्त्वा चाभयः शेते सर्वं त्यक्त्वा सुखी भव ॥"
[ १७६।२२ ]

सर्वकामत्यागः, सर्वामिषत्यागः ( आमिषं भोग्यम् ), गृहानारम्भः, भैक्ष्यवृत्तिः, एकचरत्वमेतानि समुदितानि दण्डचक्रादिन्यायेन ज्ञानोत्पत्त्या मोक्षकारणानि [ १७८ अ० ] । वीतरागभयलोभमोहमन्युरजगरवृत्तेन वर्तयन् क्रमेण मुक्तिं लभते [ १७९ अ० ] । देहतादात्म्याध्यासात् कर्तृत्व-भोक्तृत्वादिरूपो बन्धः, विचारेण तन्निवृत्त्या च मोक्षः [ १८० अ० ] । सत्कर्मभिः सद्वासनोदयात् साध्वी प्रज्ञोदेति, ततो मोक्षः [ १८१ अ० ] । तत्त्वविदां स्वप्नसमा दृष्टिसमसमयैषा सृष्टिर्मूढैर्वज्रपञ्जरवदत्यभ्यासात् तात्त्विक्येवेति निश्चितेति जाग्रद्बोधेन स्वप्नस्येवाहं ब्रह्मास्मीति साक्षात्का-रेणासंदिग्धाविपर्यस्तेन तस्या निवृत्तिः [ १८७ अ० ] । निर्वेदादेव पर-वैराग्यरूपात् क्रमेण कैवल्यम्—

"निर्वेदादेव कैवल्यं न च किञ्चिद् विचिन्तयेत् ।
सुखं वै ब्राह्मणो ब्रह्म निर्वेदेनाधिगच्छति ॥"
[ १८९।१७ ]

योगभाष्यकारा अपि—एतस्यैव हि नान्तरीयकं फलं कैवल्यमित्याहुः। भ्रुवोर्मध्ये चित्तनिरोधेन ज्ञानोत्पत्तिक्रमेण मोक्षः। तदुक्तम्—

"तत्र ह्यपापकर्माणः शुचयोऽत्यन्तनिर्मलाः।
लोभमोहपरित्यक्ता मानवा निरुपद्रवाः॥" [ १९२।९ ]

व्याख्यातं च श्रीनीलकण्ठेन—"अपापकर्मत्वादिगुणचतुष्टयवन्तो मानवास्तत्र गताः सन्तो निरुपद्रवा भवन्तीति योजना। तथा च श्रुतिः—"तं वा एतं सेतुं तीर्त्वाऽन्धः सन्ननन्धो भवत्युपतापी सन्ननुपतापी भवति" इति।

ध्यानयोगरूपेण धर्मेणैव कैवल्यमिति। तदुक्तम्—

"धर्मो योनिर्मनुष्याणां देवानाममृतं दिवि।
प्रेत्यभावे सुखं धर्माच्छश्वत् तैरुपभुज्यते॥" [ १९३।३३ ] इति।

"दिवि-हार्दाकाशाख्ये ब्रह्मलोके, अमृतम्—कैवल्यकारणं धर्म एव। उत्तरार्धेन तु मनुष्याणां प्रेत्यभावे धर्मफलमुच्यते" इति श्रीनीलकण्ठः।

एवं १९४ अध्यायेऽपि योगेन जीवन्मुक्तिर्दर्शिता। तदुक्तम्—

"स्वभावयुक्त्या युक्तस्तु स नित्यं सृजते गुणान्।
ऊर्णनाभिर्यथा सूत्रं विज्ञेयास्तन्तुवद्गुणाः॥" इति।

स्वभावे स्वरूपे, युक्तिर्योगस्तया देहतादात्म्याध्यासकृतां पररूपतां परित्यज्य स्वरूपावस्थित्या युक्तश्च स विद्वान् नित्यं गुणान् भूतभौतिकान् योगैश्वर्यबलेन सृजते।

वितर्काद् विचारं गच्छेद् विचारादानन्दमानन्दादस्मितां ततः कैवल्यमिति योगमार्गो मोक्षप्रापको योगशास्त्रेऽत्र च १९५ अध्यायेऽभिहितः। तदुक्तम्—

"एवमेवेन्द्रियग्रामं शनैः संपरिभावयेत्।
संहरेत् क्रमशश्चैव स सम्यक् प्रशमिष्यति॥"
[ १९ श्लो० ]।

व्याख्या—संपरिभावयेत् = मूर्त्याद्याकारं नयेत्, क्रमशश्च = मूर्त्याद्येकैकावयवत्यागक्रमेण, तमपि चित्तस्याकारं संहरेत्। अयं भावः—यत्र यत्रालम्बने चित्तं स्थिरीभूतं भवति तं तमाकारं परित्यज्य सोपानारोहक्रमेणोत्तरमाकारं प्रविशेत्, सर्वाकारोपरमे तु प्रशमिष्यति = प्रशाम्यति = प्रकर्षेण शमं गच्छति, निर्विकल्पे भवतीत्यर्थः।

योगस्यैव मोक्षकारणत्वमत्रैवाध्याये उक्तम्—

"न तत्पुरुषकारेण न च दैवेन केनचित्।
सुखमेष्यति तत्तस्य यदेवं संयतात्मनः॥" [ २१ श्लो० ]।

व्याख्या—एवं संयतात्मनः = योगेन निरुद्धचित्तस्येत्यर्थः।

कामनारहितानां प्रणवगायत्र्यादिजापकानां योगसिद्धिप्राप्तिद्वारा जरा-मरणराहित्यम्, इच्छया देहत्यागः, ब्रह्मलोकं प्रति गमनम्, विशुद्धकैवल्यं चेत्युक्तम् १९६ अध्याये।

पापक्षयादेव ज्ञानोत्पत्तिक्रमेण मोक्षः। तदुक्तम्—"ज्ञानमुत्पद्यते पुंसां क्षयात् पापस्य कर्मणः।" [ २०४।८ ]। पापक्षयश्च प्रायश्चित्तैस्तपोभिर-नुतापैस्तीर्थनिषेवणादिभिर्निष्कामकर्मभिश्चेत्यपि तत्रैव।

निर्गुणब्रह्मस्वरूपात्मसाक्षात्कारेण मोक्षः, स च सगुणज्ञानपूर्वकः इत्युक्तं २०७ अध्याये। सगुणध्यानप्रतिपक्षाः कामादय आन्तराः शत्रवः सन्ति। तेषां प्रशमाय गुरूणां २०८ अध्यायोक्तानामृषीणां प्रजापतीनां च स्मरणं कर्तव्यमित्येषोऽर्थः २०८ अध्याये। योगारोहाय जप्तोऽयं सर्वदिग्गतान् विघ्नान् शमयति, अत एतस्याध्यायस्य दिशास्वस्तिकमिति नाम।

प्रतिषिद्धासेवनेन स्ववर्णाश्रमोचितनिष्कामकर्मानुष्ठानेन च चित्त-शुद्ध्यादिक्रमेण मोक्षः २१२ अध्याये।

ब्रह्मचर्येण प्रणवोपास्त्या च सबलं मनो निरुद्धवृत्तिकमात्मसाक्षात्कार-क्षमं मोक्षसाधनं भवति २१४ अ०।

विदितशाब्दयुक्तितत्त्वस्य श्रवणमननाभ्यां विषयेभ्य इन्द्रियाणां प्रत्या-हारेण च ब्रह्म वेदितुं शक्यम्। योगाङ्गेषु प्रत्याहार एव दुःशकः, इतरत् सुसंपादमतो ब्रह्मप्राप्तिकामेनेन्द्रियाणि जेतव्यानीत्ययमर्थः २१६ अध्याये।

जगन्मिथ्यात्वज्ञानेन तृष्णात्यागेन च विमुच्यते। तृष्णात्यागश्च महदा-दिविकाराणां प्रकृतेश्च परमकारणभूतायाः पुरुषस्य च शुद्धस्य यथावद् विज्ञानेनेति २१७ अध्याये। तत्रापि तृष्णात्यागो मुख्य इतरापेक्षयेति न विस्मर्तव्यम्।

साधनचतुष्टयसम्पत्त्या ब्रह्मजिज्ञासया ब्रह्मज्ञानेन च मोक्ष इति २२२ अध्यायादारभ्य २३० अध्यायं यावत्। एतदेव च ब्रह्मजिज्ञासासूत्रे शारीरकभाष्ये।

ब्रह्मचर्यपूर्वकेण वेदाध्ययनेन, तदुत्तरं गार्हस्थ्येन, ततः कृच्छ्रचान्द्रायणा-दिरूपेण तपसा वानप्रस्थधर्मेण, कर्मणा नित्येन सन्ध्योपासनादिना,

आश्रमत्रयधर्मेण, ज्योतिष्टोमादियज्ञेन, आपूर्त्तेन तटाकादिनिर्माणेन, आलोकेन आलोचनकर्मणा ध्यानादिना, ( ध्यानं च त्रिविधम्—यज्ञाङ्गेष्वश्वादिषु विराडादिदृष्टिरेका, अध्यात्मं जाठरादिषु वैश्वानराख्यकारणब्रह्मदृष्टिरपरा, दहराद्यहंग्रहोपास्तिषु शुद्धस्वरूपावगतिस्तृतीया) ततश्च सिद्धिः कैवल्याख्या जीवत एव मुक्तिरिति दशभिः क्रमैर्मुक्तिर्दर्शिता। तदुक्तम्—

"नामभेदतपःकर्मयज्ञाख्याऽऽलोकसिद्धयः ।
आत्मसिद्धिस्तु वेदेषु प्रोच्यते दशभिः क्रमैः ॥" [ २३२।२८ ]।

प्रणवोपासनया मुक्तिः। तथा हि—अकारार्थं विराजं स्थूलभूतात्मकं संहृत्य ( स्थूलदेहं सर्वात्मना विस्मृत्य ), उकारार्थेन मनोमात्रेण संकल्पात्मकेन रूपेणावतिष्ठेत । एतच्च मनः चन्द्राख्यं समष्टिरूपम्। तस्यापि प्रविलयो मकारार्थे कारणे 'अहमेवेदं सर्वोऽस्मि' इति ज्ञानेन महता कालेन भवति। तस्यापि कारणस्येशस्य प्रविलयोऽर्धमात्रार्थे कालसंज्ञके शोधितत्वंपदार्थरूपेऽस्मीत्येतन्मात्रप्रत्ययात्मना विज्ञानेन भवति। अर्धमात्रायाः परतो बिन्दुनादशक्तिशान्ताख्याश्चतस्रोऽवस्थाः सन्ति। तत्रार्धमात्रार्थस्य कालस्य शक्तौ व्युत्थानवत्यां जीवन्मुक्ताख्यायां बिन्दुनादक्रमेण लयः। शान्ताख्या तु विदहेकैवल्यावस्थेति । अनेन क्रमेण प्रणवोपास्त्या विदेहकैवल्यम् २३३ अध्याये।

पादादिमूर्धान्तेषु स्थानेषु बीजदेवताधारणापुरःसरमकारोकारमकारार्धमात्राबिन्दून् न्यसेत्, ततोऽव्यक्तधारणायां षष्ठ्यां नादम्, तदन्ते शुद्धं ब्रह्मैव शिष्यत इति क्रमेणापि प्रणवोपास्त्या कैवल्यम् २३६ अध्याये मूले, नीलकण्ठ्यां च।

प्रतीचोऽज्ञानकृतजीवत्वबाधेन ब्रह्मभावप्रकाशिका विद्या, न तु तयाऽऽत्मन्यतिशय आत्मोच्छेदो वेति २३७-२३८ अध्याययोः।

विद्यातपइन्द्रियनिग्रहसर्वसंत्यागैर्मोक्ष इति २३९ अ०। तदुक्तम्—

"नान्यत्र विद्यातपसोर्नान्यत्रेन्द्रियनिग्रहात्।
नान्यत्र सर्वसंत्यागात् सिद्धिं विन्दति कश्चन ॥" [ ५ श्लो० ]

अहिंसाधर्म एव वैराग्योत्पादनद्वारा मोक्षहेतुरिति २७३ अध्याये।

"अमूढत्वमसङ्गित्वं कामक्रोधविवर्जनम्।
अदैन्यमनुदीर्णत्वमनुद्वेगो व्यवस्थितिः ॥
एष मार्गो हि मोक्षस्य प्रसन्नो विमलः शुचिः।
तथा वाक्कायमनसां नियमः कामतोऽन्यथा॥" [२७४।१८-१९]

पुण्यपापक्षयार्थं हि सांख्यज्ञानं विधीयते।
तत्क्षये ह्यस्य (हृदि) पश्यन्ति ब्रह्मभावे परां गतिम् ॥"
[२७५।३८]

सांख्यज्ञानप्रतिबन्धिका सर्वानर्थहेतुस्तृष्णा, सा च सर्वार्थेषु ममतात्यागेन नाशनीयेति २७६ अध्याये।

प्रव्रज्यैव ज्ञानक्रमेण मोक्षसाधनम्, नाप्रव्रजतां मोक्ष इति २७८ अ०। तदुक्तम्—

"अभयं सर्वभूतेभ्यो दत्त्वा यः प्रव्रजेद् गृहात्।
लोकास्तेजोमयास्तस्य तथानन्त्याय कल्पते ॥" [ २२ श्लो० ]

व्याख्या—लोकाः = विषयाः, तेजोमयाः = तैजसान्तःकरणकल्पिताः, जीवन्मुक्तौ विदेहकैवल्यकाले चानन्त्याय कल्पते प्रव्रज्येत्यर्थः।

२९८ अध्यायेऽपि—

"क्षित्वाऽधर्ममयं पाशं यदा धर्मेऽभिरज्यते।
दत्वाऽभयकृतं दानं तदा सिद्धिमवाप्नुते ॥" [ ४ श्लो० ]।

भगवन्नाम्नामष्टसहस्ररूपस्य स्तवस्य साक्षात् तत्त्वज्ञानहेतुतया शमदमादिवन्मोक्षसाधनत्वम्, मोक्षधर्मेषु पाठादिति २०४ अ०।

असङ्गत्वेन रागद्वेषत्यागः, ततः क्रमेण मोक्ष इति २८८ अ०।

सांख्ययोगावुभा अपि मोक्षसाधनौ, किन्तु योगः सदोषः, साङ्ख्यं तु निर्दोषम्। योगस्य दुर्बलत्वे विनिपातः, सांख्यस्य तु न। तदुक्तम्—"गुणाश्च यस्मिन् बहवो दोषहानिश्च केवला" [ ३००-३०१।४ ], "स्वल्पमप्यस्य धर्मस्य त्रायते महतो भयात्" इति गीतोक्तेश्च। आत्मज्ञानेन संचितक्रियमाणयोर्दाहाश्लेषौ भवतः। प्रारब्धं तु ज्ञानेनाप्यपरिहार्यमिति शास्त्रेषु प्रसिद्धम्। योगी तु निर्विकल्पकसमाध्यभ्यासेन वा, सुलभावद् गृहाद् गृहान्तरमिव देहाद् देहान्तरं प्रविश्य वा, शुकवद् यथेष्टं देहत्यागेन वा, देहसिद्ध्या वा देहारम्भकं कर्म प्रतिबध्नात्युच्छिनत्ति वेति २२९ अध्याये दर्शितम्। अत एव योगी ज्ञानिभ्योऽपि महानित्युक्तम्। गीतासु च—"तपस्विभ्योऽधिको योगी ज्ञानिभ्योऽपि मतोऽधिकः" इत्युच्यते।

गृहस्थोऽपि जरान्तकावतिक्रामति, उत संन्यासादेवेति संदिह्य सुलभाजनकसंवादे सुलभामतं सिद्धान्तितं संन्यासादेवेति। तथापि काम्यपरिवर्जनेन नित्यनैमित्तिकस्वधर्माचरणपूर्वकं निवृत्तिमार्गनिष्ठो गृहस्थोऽपि मुच्यते, कलौ संन्यासनिषेधादिति—२२० अध्यायतात्पर्यम्।

साङ्ख्यं ज्ञानम्, योग उपास्तिः, विधिः कर्मेति त्रिविधो मोक्षमार्गः। तत्रापि ज्ञानमार्गोऽभ्यर्हितः। स च वैराग्यज्ञानयत्नसमुदायरूपः। तत्र वैराग्यं वासनाक्षयः, ज्ञानम् आत्मज्ञानम्, यत्नो योगाभ्यासो मनोनाशहेतुः। एतैस्त्रिभिस्त्रिदण्डवदन्योऽन्यावष्टब्धैः कैवल्यसिद्धिः। तदुक्तम्—

"साङ्ख्यज्ञाने च योगे च महीपाल विधौ तथा।
त्रिविधे मोक्षधर्मेऽस्मिन् गताध्वा छिन्नसंशयः॥" [२२१।२५]
"वैराग्यं पुनरेतस्य मोक्षस्य परमो विधिः।
ज्ञानादेव च वैराग्यं जायते येन मुच्यते॥" [२२१।२६]
"ज्ञानेन कुरुते यत्नं यत्नेन प्राप्यते महत्।
महद् द्वन्द्वप्रमोक्षाय सा सिद्धिर्या वयोऽतिगा॥" [२२१।३०]

यत्नम् = योगाभ्यासम्। महत् = आत्मज्ञानम् इति नीलकण्ठी। वैराग्यपूर्वकात् संन्यासादेव मोक्ष इति २२१ अध्याये दर्शितम्।

"न बिभेति परो यस्मात् न बिभेति पराच्च यः।
यश्च नेच्छति न द्वेष्टि ब्रह्म संपद्यते तदा॥ [ ३३ ]
यदा भावं न कुरुते सर्वभूतेषु पापकम्।
कर्मणा मनसा वाचा ब्रह्म संपद्यते तदा॥ [ ३४ ]
संयोज्य मनसाऽऽत्मानमीर्ष्यामुत्सृज्य मोहिनीम्।
त्यक्त्वा कामं च मोहं च तदा ब्रह्मत्वमश्नुते॥ [ ३५ ]
यदा श्राव्ये च दृश्ये च सर्वभूतेषु चाप्ययम्।
समो भवति निर्द्वन्द्वो ब्रह्म संपद्यते तदा॥ [ ३६ ]
यदा स्तुतिं च निन्दां च समत्वेनैव पश्यति।
काञ्चनं चायसं चैव सुखं दुःखं तथैव च॥ [ ३७ ]
शीतमुष्णं तथैवार्थमनर्थं प्रियमप्रियम्।
जीवितं मरणं चैव ब्रह्म संपद्यते तदा॥" [ ३८ ]

एतानि मुमुक्षोर्मोक्षसाधनानि मुक्तस्य तु लक्षणानि ३२२ अध्याये।

भक्तिर्ज्ञानाङ्गमिति ३३४–३३६ अध्यायानां तात्पर्यम्।

आदित्यमण्डलान्तःस्थे नारायणे सम्यग् दत्तदृष्टिः पुरुषस्तदेकाग्रतया यदा शरीरं सर्वात्मना विस्मरति तदा दग्धसर्वाङ्गो भवति। तत आदित्यपुरुषाकारं मनःक्रमेण पुरुषाकृतिं परित्यज्याणुरस्मितामात्राकारो भवति, नखचन्द्रमात्राकारो वा भवति। एवं सूक्ष्मीकृतं मनोऽकारार्थे विराजि अनिरुद्धाख्येऽहङ्कारे प्रवेशयेत्। तदप्यनिरुद्धाकारतां परित्यज्योकारार्थे

सूत्रात्मनि प्रद्युम्नाख्ये मनसि, तदपि मकारार्थेऽन्तर्यामिणि संकर्षणाख्ये जीवे शुद्धत्वंपदार्थे प्रविशति, तमपि परित्यज्य चतुर्थेऽर्धमात्रार्थे शुद्धे ब्रह्मणि वासुदेवाख्ये महाकाशकल्पे घटाकाशवत्प्रविशेदिति मुक्तिक्रमः ३४४ अध्याये।

३४८ अध्याये सप्त योगप्रकारा मुक्तये समुपदिष्टाः—

१—तत्र मानसं नाम प्रथमा योगविधा। तथा हि—अग्न्यर्कतोयशालग्रामप्रतिमादिषु स्थूलालम्बनेष्वैकाग्र्येणादरनैरन्तर्यदीर्घकालोपोद्बलितां दृष्टिं दत्त्वोपासीनस्याग्न्यादीनां चेतनं रूपं दृष्टिगोचरं भवति। तत्र हि जडमध्यस्तं रज्ज्वामिव सर्पः। स यथा चिरं निरीक्ष्यमाणो लीयते रज्जुश्च प्रकाशते, तद्वदिहाप्यग्न्यादीनां तीव्राभिनिवेशेन निरीक्ष्यमाणानां जाड्यं लीयते चैतन्यं च प्रकाशते। सेयं महाविदेहा नाम धारणा। अस्यां सिद्धायामेव प्रतिमादीनां जाड्यं तिरोधीयते, नान्यथा।

२—चाक्षुषं नाम द्वितीयो योगमार्गः। तथा हि—चाक्षुषं चक्षुर्ग्राह्यं तेजः, तत्र सूर्यादिरश्मिरूपे निविडतरशुक्लभास्वरान्धकारकल्पे प्रत्यस्तमितसमस्तविशेषरूपे दृष्टिधारणेऽपि पूर्ववद् देहविस्मरणे सति तत्रैव विश्वरूपं प्रकाशते। ततश्चिन्मात्रमिति।

३—तृतीयं वाचिकं नामान्तरालम्बनम्। वाचिकं वाङ्निर्वर्त्यम्, मन्त्रार्थचिन्तनपूर्वको जपः। तत्रापि मातृकास्मरणमतीत्य मन्त्रार्थमात्रं ध्यायतस्तदाकारायां चित्तवृत्तौ पुनः पूर्ववद् वैश्वरूप्याधिगमद्वारा चिन्मात्रेणावस्थानं भवति। तत्र ऋग्वेदपठितस्त्रिसौपर्णमन्त्रो जपालम्बनतया ग्राह्यः।

४—चतुर्थं श्रावणं नामानाहतध्वनिरूपनादश्रवणम्। तच्च हंसोपनिषत्प्रसिद्धम्।

५—पञ्चमं घ्राणजम्। तत्र नासाग्रे चेतो धारयतो दिव्यगन्धसंविदुपजायते। तत्र गन्धमात्रे चित्तं भावयतो नासाग्रविस्मरणम्, ततो गन्धस्याप्यालम्बनस्य विस्मरणे चिन्मात्रेणावस्थानमिति।

६—आण्डजं नाम षष्ठो योगमार्गः। तत्राण्डजे सूत्रात्मनि ब्रह्मणि जगति सूत्रवदनुगतेऽहंग्रहोपासनारूपेण योगेन चेतो भावयतः सिद्धायामस्यां धारणायाम् "अहं ब्रह्मास्मि" इति वाक्यश्रवणमात्रात्कृतकृत्यतेति द्द निर्विकल्पकसमाध्यपेक्षाऽपीति सर्वापेक्षयायं श्रेयान्।

७—पाद्मं नाम सप्तममन्तर्याम्युपासनरूपम् । अयं योगो गीतायाम्—"इमं विवस्वते योगं प्रोक्तवानहमव्ययम्" इत्यादिना दर्शितः । स चात्र ( ३४८ अ० ) तत्रत्यवंशकीर्तनेन परिचीयते । तत्र सर्वजगदन्तर्यामिणि भगवति नियतं सर्वजगत्प्रवर्तकोऽहंग्रहोपासनया चेतो भावयतस्तद्भावापत्ति-क्रमेण मुक्तिरिति ।

तत्र मानसं स्थूलप्रपञ्चात्मकम्, चाक्षुषं रूपप्रपञ्चात्मकम्, वाचिकं वचनमात्रोपस्थापितमेरुस्वर्गाद्यात्मकम्, घ्राणजं गन्धप्रपञ्चात्मकम्, आण्डजं ब्रह्माण्डदर्शनजन्यसंस्कारजं वासनात्मकं स्वाप्नप्रपञ्चमयम् । पाद्मं पद्यते गम्यते इति वा, पदनीयं वा पाद्मं सर्वप्राणिधीवासनोद्बोधकं कारणात्म-कमिदं सप्तमम् । इतोऽपि शुद्धचिन्मात्रोऽष्टम इत्येवं पूर्वपूर्वापेक्षयोत्तरोत्तरस्य श्रैष्ठ्यम् [ ३४७-३४८ अ० ] ।

यद्यपि सुलभाजनकसंवादे संन्यासस्यैव श्रैष्ठ्यं तथापि न्यायागतधनः स्ववृत्तिमनुतिष्ठन् गृहस्थोऽपि ज्ञानकर्मोपास्तिपरो मुच्यते, कलौ संन्यासस्य दुष्करत्वेन निषेधादिति ३५२ अ० आरभ्य ३६४ अ० यावद् वर्णितं नागोपाख्यानेन ।

सर्वेषां मोक्षसाधनानामन्यतमस्याप्यनुष्ठानासामर्थ्ये काशीमधिवसेत् । तत्र मरणान्मुक्तिर्ज्ञानोत्पत्तिक्रमेण । "अत्र हि जन्तोः प्राणेषूत्क्रममाणेषु रुद्रस्तारकं ब्रह्मोपदिशति" इति श्रुतम् । "अन्यानि मुक्तिक्षेत्राणि काशी-प्राप्तिकराणि तु । काशीं प्राप्य विमुच्येत" इति काशीखण्डे ।

## गीतायां मोक्षो मोक्षसाधनानि च

गीतायामष्टादशभिरध्यायैः काण्डत्रिकेण मोक्षसाधनत्रिकमभिहितम् । तत्र प्रथमेनाध्यायषट्केन निष्कामकर्मनिष्ठा, द्वितीयेनाध्यायषट्केन भग-वद्भक्तिनिष्ठोपासनात्मकयोगरूपा, तृतीयेनाध्यायषट्केन च ज्ञाननिष्ठा प्रतिपादिता । उपपादितं चैतद् भाष्यकारपथप्रवृत्तेन श्रीमधुसूदनमुनिनेति नेह प्रतन्यते । भगवद्भक्तेश्च निष्ठाद्वयोपकारकत्वान्मध्ये विन्यासः । तदुक्तं श्रीमधुसूदनमुनिना—

"भगवद्भक्तिनिष्ठा तु मध्यमे परिकीर्तिता ।
उभयानुगता सा हि सर्वविघ्नापनोदिनी ॥"

इति गीताव्याख्यायामादावेव । अधिकारिभेदाच्चैतानि साधनानि पृथङ्निर्दिष्टानि, साध्यसाधनभावेन च । तथा हि—निष्कामकर्मणो

भक्तिर्भक्त्या ज्ञानमिति । भगवद्भावाप्तिश्च मोक्षः—"यः स मामेति पाण्डव", "मद्भक्त एतद्विज्ञाय मद्भावायोपपद्यते" "तत एव च विस्तारं ब्रह्म संपद्यते तदा", "भूतप्रकृतिमोक्षं च ये विदुर्यान्ति ते परम्" इत्यादिवचनैः । "न स भूयोऽभिजायते" इत्यतो देहबन्धनिवृत्तिर्मोक्षः, "तेऽपि चातितरन्त्येव मृत्युं श्रुतिपरायणाः" अनेनामृतत्वं मोक्षः । यानि गुणातीतलक्षणानि तानि मुमुक्षुभिरनुष्ठेयानि साधनानि, जीवन्मुक्तानां यत्नलभ्यानीत्यतो लक्षणानि "प्रकाशं च प्रवृत्तिं च" इत्यादिनोक्तानि । अत एव—"आपूर्यमाणमचलप्रतिष्ठम्" इत्यादीन्यपि तथैव बोध्यानि ।

"सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज ।
अहं त्वां सर्वपापेभ्यो मोचयिष्यामि मा शुचः ॥"

अनेन सर्वकर्मसंन्यासेन श्रवणादिक्रमेण भगवदात्मैक्यसाक्षात्काररूपा भगवच्छरणागतिस्तया च सर्वपापक्षयोपलक्षितो मोक्ष इति ।

## स्मृतिषु मोक्षस्तत्साधनानि

तत्र मनुः—

"तपो विद्या च विप्रस्य निःश्रेयसकरं परम् ।
तपसा किल्विषं हन्ति विद्ययाऽमृतमश्नुते ॥"

[ १२।१०४ ]

"तपः स्वधर्मवृत्तित्वम्" इति भारतदर्शनादाश्रमविहितं कर्म, आत्मज्ञानं च ब्राह्मणस्य मोक्षसाधनम् । तत्र तपसोऽवान्तरव्यापारमाह—तपसा पापमपहन्ति ब्रह्मज्ञानेन मोक्षमाप्नोति । तथा च श्रुतिः—

"विद्यां च अविद्यां च यस्तद्वेदोभयं सह ।
अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते ॥" इति ।

विद्यातोऽन्यदविद्या कर्म, मृत्युवद् दुःखसाधनत्वान्मृत्युः पापम् । श्रुत्यर्थ एवायं मनुना व्याख्यायोक्तः । तथा च तपोविद्याभ्याममृतत्वरूपो मोक्षोऽधिगम्यत इति ।

याज्ञवल्क्यश्च—

"तत्त्वस्मृतेरुपस्थानात् सत्त्वयोगात् परिक्षयात् ।
कर्मणां संनिकर्षाच्च सतां योगः प्रवर्तते ॥"

[ प्राय० १६० ]

आत्माख्यतत्त्वस्मृतेः, आत्मनि निश्चलतयोपस्थानात्, शुद्धसत्त्व-योगात् = केवलसत्त्वगुणयोगात्, कर्मबीजानां (कामादीनां) परिक्षयात्, सत्पुरुषाणां च (आत्मज्ञानिनाम्) संबन्धाद् आत्मयोगः प्रवर्तते। तेन च ज्ञानद्वारा मोक्षः।

"अथवाऽप्यभ्यसन् वेदं न्यस्तकर्मा वने वसन्।
अयाचिताशी मितभुक् परां सिद्धिमवाप्नुयात्॥"
[प्राय० २०४]

परा सिद्धिर्मोक्ष इति मिताक्षरा।

"न्यायागतधनस्तत्त्वज्ञाननिष्ठोऽतिथिप्रियः।
श्राद्धकृत्सत्यवादी च गृहस्थोऽपि हि मुच्यते॥" [प्राय० २०५]

भगवद्भक्तिपुरस्कारेण गान्धर्वशास्त्राभ्यासजनितस्वरादिभावनयाऽपि ज्ञानोत्पत्तिक्रमेण मुच्यत इत्यपि तत्रैव दर्शितम्—"वीणावादनतत्त्वज्ञः स्वरशास्त्रविशारदः" इत्यादिपद्यैः।

आपस्तम्बधर्मसूत्रे च—"अक्रोधोऽहर्षोऽरोषोऽलोभोऽमोहोऽदम्भोऽद्रोहः सत्यवचनमनत्याशोऽपैशुनमनसूयासंविभागस्त्याग आर्जवो मार्दवं शमो दमः सर्वभूतैरविरोधो योग आर्यम्-(अक्षुद्रता) आनृशंसं तुष्टिरिति सर्वाश्रमाणां समयपदानि तान्यनुतिष्ठन् विधिना सार्वगामी भवति।" [१।८।२३।६]।

सार्वगामी सर्वगमनशीलः, ज्ञानाभिव्यक्तिक्रमेण भवति मुच्यते इत्यर्थ इति श्रीशङ्करभगवत्पादाः।

## पुराणेषु मोक्षस्तत्साधनानि च

तत्र विष्णुपुराणे—

"विस्तारः सर्वभूतस्य विष्णोर्विश्वमिदं जगत्।
द्रष्टव्यमात्मवत्तस्मादभेदेन विचक्षणैः॥
समुत्सृज्यासुरं भावं तस्माद् यूयं तथा वयम्।
तथा यत्नं करिष्यामो प्राप्स्यामो येन निर्वृतिम्॥"
[१।१७।८४-८५]

"यत्र सर्वं यतः सर्वं यः सर्वं सर्वसंश्रयः।
सर्वगत्वादनन्तस्य स एवाहमवस्थितः॥
मत्तः सर्वमहं सर्वं मयि सर्वं सनातने।
अहमेवाक्षयो नित्यः परमात्मात्मसंश्रयः॥

ब्रह्मसंज्ञोऽहमेवाग्रे तथाऽन्ते च परः पुमान् ।"

[ १।१९।८४-८६ ]

"पराशर उवाच –

एवं संचिन्तयन् विष्णुमभेदेनात्मनो द्विज ।
तन्मयत्वमवापाग्र्यं मेने चात्मानमच्युतम् ॥
विसस्मार तथात्मानं नान्यत् किञ्चिदजानत ।
अहमेवाव्ययोऽनन्तः परमात्मेति चिन्तयन् ॥"

एतावता संदर्भेण विष्णावहंग्रहोपासना मुक्तिसाधनमित्युक्तम् ।

"धर्मार्थकामैः किं तस्य मुक्तिस्तस्य करे स्थिता ।
समस्तजगतां मूले यस्य भक्तिः स्थिरा त्वयि ॥"

[ १।२०।१-२, २७ ]

अनेन भगवद्भक्तिर्मुक्तिसाधनमित्युक्तम् ।

"अहं हरिः सर्वमिदं जनार्दनो नान्यत्ततः कारणकार्यजातम् ।
ईदृङ्मनो यस्य न तस्य भूयो भवोद्भवा द्वन्द्वगदा भवन्ति ॥"

[ १।२२।८६ ]

अत्र सर्वात्मके हरावेकत्वलक्षणया भक्त्या सर्वद्वन्द्वनिवृत्तिर्मोक्षः उक्तः ।

"प्रातर्निशि तथा संध्यामध्याह्नादिषु संस्मरन् ।
नारायणमवाप्नोति सद्यः पापक्षयान्नरः ॥"

[ २।६।३९ ]

अत्र सर्वकालं नारायणस्मृत्या पापक्षयस्तेन ज्ञानं तेन च नारायणप्राप्तिरूपो मोक्षो दर्शितः ।

"तदस्य त्रिविधस्यापि दुःखजातस्य पण्डितैः ।
गर्भजन्मजराद्येषु स्थानेषु प्रभविष्यतः ॥
निरस्तातिशयाह्लादसुखभावैकलक्षणा ।
भेषजं भगवत्प्राप्तिरैकान्तात्यन्तिकी मता ॥
तस्मात्तत्प्राप्तये यत्नः कर्तव्यः पण्डितैर्नरैः ।
तत्प्राप्तिहेतुर्ज्ञानं च कर्म चोक्तं महामुने ॥"

[ ६।५।५८–६० ]

अत्र ज्ञानकर्मसमुच्चयेनैकान्तिकात्यन्तिकत्रिविधदुःखध्वंसोपलक्षिता भगवत्प्राप्तिरूपा मुक्तिरुक्ता ।

"अनेकजन्मसाहस्त्रीं संसारपदवीं व्रजन् ।
मोहश्रमं प्रयातोऽसौ वासनारेणुगुण्ठितः ॥
प्रक्षाल्यते यदा सोऽस्य रेणुर्ज्ञानोष्णवारिणा ।
तदा संसारपान्थस्य याति मोहश्रमः शमम् ॥"

[ ६।७।१९-२० ]

अत्र ज्ञानेन सवासनाऽविद्यानिवृत्तिरूपो मोक्षः उक्तः ।

श्रीमद्भागवते —

"मद्गुणश्रुतिमात्रेण मयि सर्वगुहाशये ।
मनोगतिरविच्छिन्ना यथा गङ्गाम्भसोऽम्बुधौ ॥
लक्षणं भक्तियोगस्य निर्गुणस्य ह्युदाहृतम् ।
अहैतुक्यव्यवहिता या भक्तिः पुरुषोत्तमे ॥
सालोक्यसार्ष्टिसामीप्यसारूप्यैकत्वमप्युत ।
दीयमानं न गृह्णन्ति विना मत्सेवनं जनाः ॥
स एव भक्तियोगाख्य आत्यन्तिक उदाहृतः ।
येनातिव्रज्य त्रिगुणं मद्भावायोपपद्यते ॥"

[ ३।२९।११-१४ ]

अत्रात्यन्तिकेन भक्तियोगेन भगवद्भावापत्तिरूपा मुक्तिर्दर्शिता ।

इत्थं पुराणेषु पञ्च मुक्तयः प्रदर्शिताः । १. सालोक्यम् = भगवता सहैकस्मिन् लोके वासः । २. सार्ष्टिः=समानैश्वर्यम् । ३. सामीप्यम् = निकटवर्तित्वम् । ४. सारूप्यम् = समानरूपता । ५. सायुज्यम् = एकत्वम् । तद्भावोऽप्येतदेव ।

## अथोत्तरार्धम्

तत्र सोपानारोहक्रमेणैव मोक्षतत्साधनविषया दृष्टय उपन्यस्यन्ते । दर्शनेष्वपि चार्वाकस्य भूतचैतन्यवादिनः प्रत्यक्षमात्रप्रमाणकस्य दृष्टिः— नास्ति आत्मा देहातिरिक्तः स्थायी स्वर्गापवर्गाधिकृतः । अतो नष्टे देहे पाञ्चभौतिके कस्य स्वर्गोऽपवर्गो वा । तदुक्तम् —

"न स्वर्गो नापवर्गो वा नैवात्मा पारलौकिकः ।
नैव वर्णाश्रमादीनां क्रियाश्च फलदायिकाः ॥" इति,

"त्याज्यं सुखं विषयसंगमजन्म पुंसां
दुःखोपसृष्टमिति मूर्खविचारणैषा ।

व्रीहीन् जिहासति सितोत्तमतण्डुलाढ्यान्
को नाम भोस्तुषकणोपहितान् हितार्थी ॥'' इति च।

अतः—"यावज्जीवेत्सुखं जीवेद् ऋणं कृत्वा घृतं पिबेत्'' इत्यादि।

## विवसनानां मोक्षस्तत्साधनानि च

प्रमेयकमलमार्तण्डे प्रत्यक्षपरिच्छेदे—"तथा सुखात्मको मोक्षः, चेतनात्मकत्वे सत्यखिलदुःखविवेकात्मकत्वात्, संहृतसकलविकल्पध्यानावस्थावत्। तथाऽनन्तं तत्, आत्मस्वभावत्वे सत्यपेतप्रतिवन्धत्वात्, ज्ञानवदेव। अपेतप्रतिबन्धत्वं तु मोहनीयादेः कर्मणोऽपायात्प्रसिद्धमेवेति सिद्धमनन्तज्ञानादिचैतन्यविशेषेऽवस्थानं पुंसो मोक्ष इति। मुक्तावप्यनेकान्तो ( स्याद्वादरूपः ) न व्यावर्तते। स च द्विधा—क्रमानेकान्तः, अक्रमानेकान्त इति। अनेकान्तज्ञानस्यैव निःश्रेयससाधनत्वम्। आनन्दरूपता तु मोक्षस्येष्यते। एकान्तनित्यता तु तस्याः प्रतिषिध्यते, सकलवस्तुस्वभावानां परिणामिनित्यत्वात्'' इति। "बन्धमोक्षयोश्चैकाधिकरणत्वाद् य एव बद्धः स एव मुच्यत इति पुरुषस्यैव बन्धमोक्षौ, आबालगोपालं तथा प्रतीतेः।'' इति १५श्लोके स्याद्वादमञ्जरीभावः। २९श्लोके तत्रैव—"न च क्षीणकर्मणां पुनर्भवाधिकारः। तदुक्तं टीकायाम्—'दग्धे बीजे यथाऽत्यन्तं प्रादुर्भवति नाङ्कुरः। कर्मबीजे तथा दग्धे न रोहति भवाङ्कुरः''' इति। मुक्तानामनावृत्तिजैनशास्त्रोदितेनाचेलसंयमादिना। सकलकर्मप्रमोक्षलक्षणो मोक्ष इत्यपि प्रमेयकमलमार्तण्डे तत्रैव। स्त्रीणां तु न मोक्षः। मोक्षहेतुर्हि ज्ञानादिपरमप्रकर्षः, स नास्ति तासाम्; सप्तमपृथ्वीगमनकारणापुण्यप्रकर्षेण विरोधादिति।

## बौद्धानां मोक्षो मोक्षहेतवश्च

तत्र सौत्रान्तिकवैभाषिकयोरभिधर्मकोशे कोशस्थाने प्रथमे—

"प्रतिसंख्यानिरोधो यो विसंयोगः पृथक् पृथक्।
उत्पादात्यन्तविघ्नोऽन्यो निरोधोऽप्रतिसंख्यया॥'' [५ श्लो०]

विसंयुक्तिर्विसंयोगः, क्लेशविसंयुक्तिलक्षणः संयोगप्राप्तिनियतरोधभूतो वा यो धर्मः स प्रतिसङ्ख्यानिरोधः। अत्र संयोगप्राप्तिश्च दुःखादीनामार्यसत्यानामिति ज्ञेयम्। प्रतिसङ्ख्या चानास्रवा ( वासनाशून्या ) प्रज्ञा। तेन प्रज्ञाविशेषेण प्राप्यो निरोधो मोक्षाख्यः प्रतिसङ्ख्यानिरोधः। अना-

गतानां धर्माणाम् (भावानाम्) उत्पादस्यात्यन्तं विघ्नोऽत्यन्तनियत-रोधोऽन्य इत्यप्रतिसङ्ख्यानिरोधः। अप्रतिसङ्ख्ययेति प्रसज्यप्रतिषेधेऽय-मकारः। न प्रतिसङ्ख्यया प्राप्य इत्यर्थः। अथवा पर्युदासे प्रतिसङ्ख्याया यदन्यत् प्रत्ययवैकल्यं साऽप्रतिसङ्ख्या, तया प्राप्यो निरोधोऽप्रतिसङ्ख्या-निरोधः। प्रतिसङ्ख्याऽप्रतिसङ्ख्ये निरोधोपायौ।

## विज्ञानवादिनां मोक्षस्तत्साधनानि च

तत्र विज्ञप्तिमात्रतासिद्धौ—

"यावद् विज्ञप्तिमात्रत्वे विज्ञानं नावतिष्ठते।
ग्राहद्वयस्यानुशयस्तावन्न विनिवर्तते॥" [२६ श्लो०]

यावच्चित्तधर्मतायां विज्ञप्तिमात्रशब्दितायां विज्ञानं नावतिष्ठते, किं तर्हि ग्राह्यग्राहकोपलम्भे चरति। ग्राहद्वयम्—ग्राह्यग्राहः, ग्राहकग्राहश्च। तस्यानुशयस्तदाहितमनागतग्राहद्वयोत्पत्तये बीजमालयविज्ञाने। यावद-द्वयलक्षणे विज्ञप्तिमात्रे योगिनश्चित्तं न प्रतिष्ठितं भवति तावद् ग्राह्य-ग्राहकानुशयो न विनिवर्तते, न प्रहीयत इत्यर्थः। कदा पुनर्विज्ञानग्राहस्य प्रहाणम्, चित्तधर्मतायां वा प्रतिष्ठितो भवतीत्यत आह—

"यदा त्वालम्बनं ज्ञानं नैवोपलभते तदा।
स्थितो विज्ञप्तिमात्रत्वे ग्राह्याभावे तदग्रहात्॥"

यदैवं विज्ञप्तिमात्रतायां चित्तमवस्थितं भवति तदा कथं व्यपदिश्यते? इत्याह—

"अचित्तोऽनुपलम्भोऽसौ ज्ञानं लोकोत्तरं च तत्।
आश्रयस्य परावृत्तिर्द्विधा दौष्ठुल्यहानितः॥
स एवानास्रवो धातुरचिन्त्यः कुशलोऽव्ययः।
सुखो विमुक्तिकायोऽसौ धर्माख्योऽयं महामुनेः॥"

[२९-३० श्लो०]

ग्राह्यार्थानुपलम्भाच्चाचित्तोऽनुपलम्भोऽसौ। निर्विकल्पत्वाल्लोकादुत्तीर्ण-मिति लोकोत्तरम्। द्विधा दौष्ठुल्यम्—क्लेशावरणदौष्ठुल्यम्, ज्ञेयावरण-दौष्ठुल्यम्। दौष्ठुल्यम् = आश्रयस्याकर्मण्यता। तस्य हानित आश्रयस्य परावृत्तिः = आश्रयस्य सबीजस्यालयविज्ञानस्य परावृत्तिः, दौष्ठुल्यविपाक-द्वयवासनाभावेन निवृत्तौ सत्यां कर्मण्यताधर्मकायाऽद्वयज्ञानभावेन परा-

वृत्तिः, स एवाश्रयपरावृत्तिरूपः। अनास्रवो वासनाद्वयरहितः। आर्यधर्महेतुत्वाद् धातुः। अचिन्त्यस्तर्कागोचरत्वात्। कुशलो विशुद्धालम्बनत्वात्, क्षेमत्वाच्च। ध्रुवो नित्यत्वात्। सुखो नित्यत्वादेव, यदनित्यं तद् दुःखमिति स्थितेः। क्लेशावरणप्रहाणात् श्रावकाणां विमुक्तिकायः, स एवाश्रयपरावृत्तिलक्षणो धर्माख्योऽप्युच्यते। महामुनेर्भूमिपारमितादिभावनया क्लेशज्ञेयावरणप्रहाणादाश्रयपरावृत्तिसमुदागमान्महामुनेर्धर्मकाय इत्युच्यते। अनेन विज्ञप्तिमात्रत्वे स्थितिर्मोक्षः, योगश्च तत्साधनमित्युक्तं भवति।

## शून्यवादिनां मोक्षस्तत्साधनानि

तत्र मध्यमककारिकायां विपर्यासपरीक्षाप्रकरणे—

"एवं निरुध्यतेऽविद्या विपर्ययनिरोधनात्।
अविद्यायां निरुद्धायां संस्काराद्यं निरुध्यते॥" [ २३ श्लो० ]

"यदाऽयं योगी यथोदितेन न्यायेन ( विपर्यासपरीक्षोक्तविधिना ) विपर्यासान्नोपलभते, तदैवं विपर्यासानुपलम्भनेन तद्धेतुकाऽविद्या निरुध्यते, तन्निरोधाच्च संसारादयोऽविद्याहेतुका जरामरणशोकपरिदेवदुःखदौर्मनस्योपायासपर्यन्ता धर्मा निरुध्यन्ते।" इति प्रसन्नपदा।

२४ प्रकरणे तत्रैव—

"अत्र ब्रूमः शून्यतायां न त्वं वेत्सि प्रयोजनम्।
शून्यतां शून्यतार्थं च तत एवं विहन्यसे॥" [ ७ श्लो० ]

अथ किं पुनः शून्यतायां प्रयोजनम्? उक्तमेव तदात्मपरीक्षायाम्—

"कर्मक्लेशक्षयान्मोक्षः कर्मक्लेशाविकल्पतः।
ते प्रपञ्चात् प्रपञ्चस्तु शून्यतायां निरुध्यते॥" इति।

अतो निरवशेषप्रपञ्चोपशमार्थं शून्यतोपदिश्यते। तस्मात्सर्वप्रपञ्चोपशमः शून्यतायां प्रयोजनम्। भवांस्तु नास्तित्वं शून्यताशब्दार्थं परिकल्पयन् प्रपञ्चजालमेव संवर्धयमानो न शून्यतायां प्रयोजनं वेत्ति।

अथ का पुनः शून्यता? साऽपि तत्रैवोक्ता—

"अपरप्रत्ययं शान्तं प्रपञ्चैरप्रपञ्चितम्।
निर्विकल्पमनानात्वमेतत्तत्त्वस्य लक्षणम्॥
यः प्रतीत्यसमुत्पादः शून्यतां तां प्रचक्ष्महे।" इति।

एवं प्रतीत्यसमुत्पादशब्दस्य योऽर्थः स एव शून्यताशब्दस्यार्थः, न पुनरभावशब्दस्य योऽर्थः स शून्यताशब्दस्यार्थः" इति प्रसन्नपदा। एतावतां

मूलतद्व्याख्यासंदर्भेण शून्यतैव तत्त्वम्, तदवाप्तिरेव च मोक्षः। विपर्यास-परीक्षाप्रकरणोक्तविधिना विपर्यासनिरोधेन चाविद्यानिरोधद्वारा तत्सिद्धि-रिति सूचितम्।

निर्वाणलक्षणं च तत्रैवोक्तम्—

"अप्रहीणमसंप्राप्तमनुच्छिन्नमशाश्वतम्।
अनिरुद्धमनुत्पन्नमेवं निर्वाणमुच्यते॥" [म० १८।८]

"अनिर्वाणं हि निर्वाणं लोकनाथेन देशितम्।
आकाशे न स्थिता ग्रन्थिराकाशे नैव मोचिता॥"
[म० २५।३१]

लौकिको व्यवहारोऽपि दृष्टान्तविधया परमार्थतत्त्वविज्ञापनद्वारा निर्वाणहेतुरित्यप्युक्तं तत्रैव—

"व्यवहारमनाश्रित्य परमार्थो न देश्यते।
परमार्थमनागम्य निर्वाणं नाधिगम्यते॥"
[म० २४।१०]

अत एतन्मते शून्यत्वं ब्रह्मवद्भावाभावविलक्षणमवाङ्मनसगोचरं किमपि तत्त्वम्, सर्वत्र शून्यत्वभावनया च तदधिगम्यते। अन्ये च विप-र्यासनिरोधादयः प्रागुक्ता उपायाः।

## अथ वैदिकानां दर्शनानि

तत्र व्याकरणानुसारिणी दृष्टिरेव प्रकृतविषये प्रथममुपन्यस्यते, वेदमुख-त्वेनाभ्यर्हितत्वात्। आत्मचैतन्यमेव स्वकरणनिष्पादितैर्ध्वनिभिरभिव्यज्य-मानं तद्धर्मोपरक्तमक्रममपि सक्रममिवाभिन्नमपि भिन्नमिव घटपदादि-स्फोटरूपं वाक्यस्फोटरूपं वा। तदुक्तम्—

"अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम्।
विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः॥"
[वाक्य० ब्र० १]

"अक्रमः क्रमरूपेण भेदवानिव गृह्यते" इति च। तस्य ध्वनिधर्मोप-रक्तस्य व्याकरणेन ज्ञानम्, तथा ज्ञातस्य तु तस्य विचारेण ध्वनिधर्मोपा-करणे निर्विशेषस्य ध्यानेनात्मैक्येन साक्षात्कारे मोक्षः। तथा च सगुणो-पासना यथा निर्गुणसाक्षात्कारे उपयुज्यते, तथा व्याकरणस्यारादुपयोग इत्यभिप्रेत्यैवोच्यते—"चत्वारि शृङ्गाः" इति मन्त्रव्याख्यावसरे भाष्य-

वृद्धिः—"महता देवेन नः साम्यं स्यादित्यध्येयं व्याकरणम्" इति। अत्र साम्यमैक्यरूपमेव भेदाघटितम्, "सागरः सागरोपमः" इत्यादिवदित्यत्र प्रदीपोद्द्योतयोर्द्रष्टव्यम्। अन्यत्रापि व्याकरणज्ञानेन मोक्षोऽभिहितः-

"तद् द्वारमपवर्गस्य वाङ्मलानां चिकित्सितम्।
पवित्रं सर्वविद्यानामधिविद्यं प्रकाशते॥"

इति, "इयं सा मोक्षमाणानामजिह्मा राजपद्धतिः" इति, "शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति" इति च।

## अथालङ्कारिकाणां मोक्षस्तत्साधनानि

आलङ्कारिकाणामपि "शिवेतरक्षतये" इति श्रीमम्मटोक्त्या भगवन्नारायणचरणारविन्दस्तवादिना निष्काममनुष्ठितेन चित्तशुद्धिक्रमेण ज्ञानोत्पत्त्या मोक्षः। किञ्च—

"काव्यालापाश्च ये केचिद् गीतकान्यखिलानि च।
शब्दमूर्त्तिधरस्यैते विष्णोरंशा महात्मनः॥"

इति पुराणवचनप्रामाण्येन सत्काव्यार्थभावनं श्रीविष्णोश्चिन्तनमेवेति क्रमेणापि काव्यार्थभावनातो मोक्षः। "काव्यालापांश्च वर्जयेत्" इति त्वसत्काव्यविषयकमिति सुवहुश उक्तं श्रीमल्लिनाथमहोपाध्यायैः। किञ्च, काव्यार्थभावनाप्रकर्षोद्भूतविभावादिज्ञानप्रकर्षेण तत्तत्स्थायिभावाभिव्यक्तावावरणरहितं तत्तत्स्थायिभावावच्छिन्नं स्वप्रकाशानन्दचैतन्यमेव रसः—"रसो वै सः, रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति" इत्यादिश्रुतेः। अत एव रसस्य निर्विकल्पत्वं स्वप्रकाशत्वमकार्यत्वमज्ञाप्यत्वं चेत्याद्युक्तम्। "पुण्यवन्तः प्रमिण्वन्ति योगिवद्रससंततिम्" इति, "ब्रह्मास्वादसहोदरः" इत्यादिकं चोक्तम्। तत्र स्थायिभावांशे विशेषणं मननजनितविवेकेन पृथक्कृत्य ध्यानेन विशेष्यमात्रस्यैक्येन साक्षात्कारे मोक्ष इत्येष पन्थाः।

## नैयायिकवैशेषिकयोर्मोक्षस्तत्साधनानि

तत्र मोक्षतत्साधनविषये गौतमसूत्रे—"प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्तावयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासच्छलजातिनिग्रहस्थानानां तत्त्वज्ञानान्निःश्रेयसाधिगमः॥ दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्गः। (१।१।१-२) इति।

प्रमाणादीनां षोडशपदार्थानां तत्त्वज्ञानात्तेषु मिथ्याज्ञानापायः। तदपाये तन्मूलकरागद्वेषमोहदोषविनिवृत्तौ तन्मूलकासूयेर्ष्यामायालोभादीनां च

दोषाणामभावः। दोषापाये प्रवृत्त्यपायः। अत्र प्रवृत्तिशब्देन प्रवृत्तिसाध्यौ धर्माधर्मौ विवक्षितौ। साध्ये साधनशब्दप्रयोगः, "अन्नं प्राणाः" इतिवत्। रागद्वेषरहितैरनुष्ठितानि कर्माणि न धर्माधर्मसाधनानि भवन्तीति हि शास्त्रस्थितिः। सेयं प्रवृत्तिः कुत्सितस्याभिपूजितस्य च जन्मनः कारणमिति प्रवृत्त्यपाये जन्मापायः। जन्मैव च दुःखकारणम्। जन्मापाये च दुःखापायरूपो मोक्षः। दुःखानि चैकविंशतिः–शरीरम्, षडिन्द्रियाणि, षड्विषयाः षड्बुद्धयः, सुखम्, दुःखं चेति। सुखमपि दुःखानुषक्तत्वाद् दुःखमेव। तदुक्तं न्यायवार्त्तिके "सुखमुपभोक्तुकामेन दुःखमपि भोक्तव्यमेव दुःखं वा जिहासता सुखमपि हातव्यमेव, सविषान्नवत्" ॥ [ १।१।२ ] इति। दुःखध्वंसश्चात्यन्तिक एव मोक्षः। आत्यन्तिकत्वं चास्य दुःखप्रागभावासामानाधिकरण्यमेव। तादृशध्वंसरूपस्य चान्येच्छानधीनेच्छाविषयत्वेन स्वतः प्रयोजनत्वम्, अत एव तस्य पुरुषार्थत्वम्। ज्ञातस्य तु तस्य तज्ज्ञानस्य वा न प्रयोजनत्वम्, 'दुःखध्वंसो मे स्यात्' इतीच्छया तत्र प्रवृत्तेः। 'दुःखध्वंसं जानीयाम्' इतीच्छयाऽऽप्रवृत्तेः। दुःखानुत्पादरूपो दुःखप्रागभावस्तु न मोक्षः, यतः स्वसमानाधिकरणदुःखासमानकालीनदुःखध्वंसविशिष्ट एवासौ मोक्षरूपो वाच्यः। तादृशश्चाप्रसिद्धः, मुक्तस्य दुःखानुत्पत्त्या मुक्तिदशायां तत्प्रागभावासत्त्वात्। दुःखात्यन्ताभावस्यापि न मोक्षत्वम्, तस्य नित्यत्वात्; मोक्षस्य च कार्यत्वात्। मुक्तौ मानं तु—दुःखत्वं देवदत्तदुःखत्वं वा स्वाश्रयासमानकालीनध्वंसप्रतियोगिवृत्ति, कार्यवृत्तित्वात्, एतत्प्रदीपत्ववदित्यनुमानम्। तथा च नैयायिकानां नये मुक्तिकाल आत्मनि ज्ञानसुखादिकं नास्तीति।

एवमेव प्रशस्तपादभाष्येऽपि ज्ञानपूर्वकात्तु कृतादसंकल्पितफलाद् विशुद्धे कुले जातस्य दुःखविगमोपायजिज्ञासोराचार्यमुपसंगम्योत्पन्नषट्पदार्थतत्त्वज्ञानस्याज्ञाननिवृत्तौ विरक्तस्य रागद्वेषाद्यभावात्तज्जन्ययोर्धर्माधर्मयोरनुत्पत्तौ पूर्वसंचितयोश्चोपभोगान्निरोधे संतोषसुखं शरीरपरिच्छेदं चोत्पाद्य रागादिनिवृत्तौ निवृत्तिलक्षणः केवलो धर्मः परमार्थदर्शनजं सुखं कृत्वा निवर्तते। तदा निरोधान्निर्बीजस्यात्मनः शरीरादिनिवृत्तिः। पुनः शरीराद्यनुत्पत्तौ दग्धेन्धनानलवदुपशमो मोक्ष इति।

## मीमांसकानां मोक्षस्तत्साधनानि

मानमेयोदये द्रव्यप्रकरणे २११ पृष्ठे—"कस्तर्हि मोक्षः ? किञ्च तत्साधनम् ? उच्यते—

दुःखात्यन्तसमुच्छेदे सति प्रागात्मवर्तिनः ।
सुखस्य मनसा भुक्तिर्मुक्तिरुक्ता कुमारिलैः ॥"

ननु यदि संसारावस्थायामप्यात्मसमवेत एवायमानन्दः, तर्हि कथं नानुभूयते ? अनुभवहेतोरभावादिति ब्रूमः । देहेन्द्रियादीनामात्यन्तिकपरिध्वंसानुगृहीतं हि मनस्तदनुभवसाधनम् । किं तर्हि तादृशानन्दसद्भावे प्रमाणम् ? "आनन्दं ब्रह्मणो रूपं तच्च मोक्षेऽभिव्यज्यते" इति (इत्यर्थिका) श्रुतिरेव । न च "अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः" इति श्रुतिस्तदानन्दानुभूतिबाधिकेति वाच्यम्, तस्या वैषयिकप्रियाप्रियस्पर्शनिवृत्तिमात्रपरत्वात् । अन्यथा मुक्तेरपुरुषार्थत्वप्रसङ्गात् । मोक्षसाधनानि च तत्रैव दर्शितानि—

"निषिद्धकाम्यकर्मभ्यः सम्यग् व्यावृत्तचेतसः ।
नित्यनैमित्तिकप्रायश्चित्तप्रध्वस्तदुष्कृतेः ॥
सुखदुःखानुभूतिभ्यां क्षीणप्रारब्धकर्मणः ।
युक्तस्य ब्रह्मचर्याद्यैरङ्गैः शमदमादिभिः ॥
कुर्वाणस्यात्ममीमांसां वेदान्तोक्तेन वर्त्मना ।
मुक्तिः संपद्यते सद्यो नित्यानन्दप्रकाशिनी ॥" इति ।

## सांख्ये योगे च मोक्षस्तत्साधनानि

तत्र सांख्ये प्रकृतिपुरुषयोरनादिरविवेककृतः संयोगो बन्धः । तदुक्तम्— "तद्योगोऽप्यविवेकान्न समानत्वम्" [ १।५५ ] । अविवेकोच्छेदश्च प्रकृतिपुरुषान्यतासाक्षात्कारात् । तदुक्तम्—"नियतकारणात्तदुच्छित्तिर्ध्वान्तवत्" [ ५६ सू० ] । अस्य व्याख्या सांख्यप्रवचनभाष्ये—"शुक्तिरजतादिस्थले लोकसिद्धं यन्नियतं कारणं विवेकसाक्षात्कारस्तस्मात्तस्याविवेकस्योच्छित्तिर्भवति, ध्वान्तवत् । यथा ध्वान्तमालोकादेव नियतकारणान्नश्यति नोपायान्तरेण, तथाऽविवेकोऽपि विवेकादेव नश्यति, न तु कर्मादिभ्यः साक्षादित्यर्थः । तदेतदुक्तं योगसूत्रेण—"विवेकख्यातिरविप्लवा हानोपायः" [ २।२६ ] इति । कर्मादीनि तु ज्ञानस्यैव साधनानि । एतदप्युक्तं योगसूत्रेण—"योगाङ्गानुष्ठानादशुद्धिक्षये ज्ञानदीप्तिराविवेकख्यातेः" [२।२८] । सत्त्वशुद्धिद्वारा ज्ञान एव योगाङ्गान्तर्गतसर्वकर्मणां साधनत्वावधारणादिति । पुरुषस्य बन्धमोक्षौ न वास्तवौ, तयोर्बुद्धिधर्मत्वात् । तथा च सांख्यसूत्रम्—"वाङ्मात्रं न तु तत्त्वं चित्तस्थितेः" [ १।५८ ] । तद्भाष्यम्— "बन्धादीनां सर्वेषां चित्त एवावस्थानात् तत् पुरुषे वाङ्मात्रं सर्वम्'

स्फटिकलौहित्यवत् प्रतिबिम्बमात्रत्वम् । न तु तत्त्वम्, तस्य भावः, अनारोपितम्, जपालौहित्यवदित्यर्थः । अतो न श्रुतिविरोधः । श्रुतिश्च—

"न निरोधो न चोत्पत्तिर्न बद्धो न च साधकः ।
न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थता ॥" इति ।

मोक्षश्च सांख्ययोगयोः प्रकृतिपुरुषान्यताख्यात्या प्रकृतेः कृतार्थाया व्यापारोपरम ऐकान्तिकात्यन्तिकदुःखत्रयोपशमरूप इति । "नैकान्तात्यन्ततोऽभावात्" इति सांख्यकारिका । "निजमुक्तस्य बन्धध्वंसमात्रं परं न समानत्वम्" [ १।८६ ] इति सांख्यसूत्रम् । परमात्यन्तिकमिति सांख्यप्रवचनभाष्ये ।

योगसूत्रे मोक्षस्वरूपम्—"पुरुषार्थशून्यानां गुणानां प्रतिप्रसवः कैवल्यं स्वरूपप्रतिष्ठा वा चितिशक्तिरिति" [ ४।३४ ] । तत्र पातञ्जलभाष्यम्— "कृतभोगापवर्गाणां पुरुषार्थशून्यानां गुणानां यः प्रतिप्रसवः ( प्रतिसर्गः ) तत्कैवल्यम् । यं कञ्चित् पुरुषं प्रति प्रधानस्य मोक्षः । स्वरूपप्रतिष्ठा पुनर्बुद्धिसत्त्वानभिसंबन्धात्पुरुषस्य चितिशक्तिरेव केवला । तस्याः सदा तथैवावस्थानं कैवल्यमिति ।"

## श्रीमध्वमते मोक्षो मोक्षसाधनानि

भक्त्या भगवत्प्राप्तावपि भेद एव नाभेदः, खगानामिव वृक्षनिलयने । जगद्व्यापारवर्जं च सर्वकामाप्तिः । मुक्तेश्च सालोक्यसामीप्यसारूप्यसायुज्यस्वरूपभेदेन क्षीरसागरादिस्थानभेदेन वा तारतम्यम्; अस्मदादिमुक्तभोगो मुक्तचतुर्मुखभोगान्निकृष्टः, अस्मदादिभोगत्वात्, संसारस्थास्मदादिभोगवदित्यनुमानात्; उपासनातारतम्यभक्तितारतम्ययोः श्रुतयोः फलभेदं विनाऽनुपपत्तेश्च । इदं सर्वमणुभाष्यप्रकाशटीकात उद्धृतम् । परमतत्त्वेऽपि 'माध्वास्तु' इत्युक्त्वा तत्र निबद्धम् ।

## श्रीनिम्बार्कमते मोक्षो मोक्षसाधनानि

श्रुतिसिद्धान्तसंग्रहे—

"स्वान्तःस्थाया हरेर्मूर्तेरापरोक्ष्यं विमुक्तये ।
अपेक्ष्यं तद्विना मुक्तिर्न सर्वेषां सतां क्वचित् ॥
अन्तःस्थस्य हरेर्ज्ञानं व्यापकत्वेन मुक्तिदम् ।
सद्योऽन्यथा क्रमात्तद्वमीषद्विलम्बतो नृणाम् ॥

अचिरादिगतिं यान्ति ये केचित्साधवो नराः ।
नावर्तन्ते पुनर्मर्त्ये लोके सिद्धिं परां गताः ॥''

[ १।४७-४९ ]

सर्वसाधारणं मुक्तेः स्वरूपमाह तत्रैव—

"स्वरूपेण स्थितिर्मुक्तिरज्ञानध्वंसपूर्वकम् ।
सा समा सर्वमुक्तानां सद्यः क्रमेण गच्छताम् ॥
चातुर्विध्यं विमुक्तेः स्यात्पुंसां योग्यतया सताम् ।
समीपत्वं च सारूप्यं सलोकत्वं हरेः सदा ॥
सायुज्यं च हरेः सर्वाः स्युरनावृत्तिलक्षणाः ।
सायुज्यं लीनता विष्णोर्विग्रहे स्वाधिकारतः ॥
वटे लीनाः खगा भिन्ने वने लीना मृगास्तथा ।
एवं मुक्ता हरेर्भिन्ना रमन्ते तत्र मोदतः ॥''

[ १।५८-६१ ]

अस्मिन् मते मुक्तानां भगवतो भेदाभेदौ कारणे कार्यस्येवेति ।

वेदान्तकौस्तुभे च—"मुक्तस्य भोगमात्रे ब्रह्मसाम्यप्रतिपादनात् स्वरूप-साम्याभावो दर्शितः, तस्य च ब्रह्मविलक्षणस्य मुक्तस्वरूपस्यानावृत्तिर्बोध्या'' [ ४।४।२२ ] इति ।

## श्रीरामानुजाचार्यमते मोक्षस्तत्साधनानि

स्ववर्णाश्रमोचितकर्मानुष्ठानसहकृतया भगवदुपासनयाऽपुनरावृत्ति-लक्षणो मोक्षः श्रीरामानुजाचार्याणां संमतः। तदुक्तं श्रीभाष्ये—"अनावृत्तिः शब्दात्'' [४।४।२२] इति सूत्रे—"एवमहरहरनुष्ठीयमानवर्णाश्रमधर्मानुगृहीत-तदुपासनरूपतत्समाराधनप्रीत उपासीनान् अनादिकालप्रवृत्तानन्तदुस्तर-कर्मसंचयरूपाविद्यां विनिवर्त्य स्वायाथात्म्यानुभवरूपानवधिकातिशयानन्दं प्रापय्य पुनर्नावर्तयतीत्यपि शब्दादेवागम्यते। शब्दश्च—"स खल्वेवं वर्तयन् यावदायुषं ब्रह्मलोकमभिसंपद्यते न च पुनरावर्तते'' इत्यादिक इति ।

"'मामुपेत्य पुनर्जन्म दुःखालयमशाश्वतम् ।
नाप्नुवन्ति महात्मानः संसिद्धिं परमां गताः ॥'

इति स्वयमेव भगवतोक्तं गीतायामिति च। एतन्मतेऽपि सायुज्यमुक्तौ जीवस्याभेद एव ।

## श्रीवल्लभाचार्यमते मोक्षस्तत्साधनानि

अणुभाष्यप्रकाशे—"पुष्टिभक्तौ तु 'भक्त्या मामभिजानाति' इत्युक्तरीत्या स्वस्मिन् प्रवेश्य भूमविद्योक्तरीत्या पुनः प्रथमाविर्भाव्य भजनानन्दानुभावने "सोऽश्नुते" इति श्रुत्युक्तरीत्या भोगं कारयति" [ ४।४।२२ ] इति। "मुक्तेस्तारतम्यं सालोक्यसामीप्यादिरूपेण स्थानभेदेन वा माध्वानामिव स्वीक्रियत एव। "मुक्तिं प्रति तत्तदुपासनाया भक्तेर्वा तदनुरूपाया एव कारणत्वमभ्युपेयते" इत्यपि तत्रैवोक्तम्। भगवद्भावापत्तिश्चाभेदरूपा मुक्तिर्भक्तिकार्याऽपि ध्वंसवन्नित्यैवैतन्मते।

## ब्रह्माद्वैतवादे मोक्षस्तत्साधनानि

यद्यप्यत्र बन्धमोक्षौ वास्तवौ बुद्धेः पुरुषस्य वा न स्तः, बुद्धेरप्यवस्तुत्वात्; पुरुषस्याप्यसङ्गत्वेन सच्चिदानन्दमात्ररूपत्वात्, बन्धमोक्षयोस्तत्रासंभवात्। अत एव श्रुतिः—

"न निरोधो न चोत्पत्तिर्न बद्धो न च साधकः।
न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थता॥" इति,

तथापि व्यावहारिकं प्रातीतिकं वा तयोः सत्त्वं पुरुषेऽभ्युपगम्य किञ्चिद् विचार्यते। अनादिदेहतादात्म्याध्यासरूपया तद्वासनारूपया वाऽविद्यया जीवस्य कर्तृत्वभोक्तृत्वादिलक्षणो बन्धः। ब्रह्मात्मैक्यलक्षणया विद्यया तु तन्निवृत्तिः। तदुक्तं श्रीगौडपादैः—

"अनाद्यविद्यया सुप्तो यदा जीवः प्रबुध्यते।
अजमनिद्रमस्वप्नमद्वैतं बुद्ध्यते तदा॥" इति।

श्रुतिरपि—

"भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः।
क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परवरे॥" इति।

अत्र हृदयग्रन्थिर्देहतादात्म्याध्यासरूपाऽविद्या। बन्धस्याविद्यकत्वादेवाधिष्ठानयाथात्म्यज्ञानरूपया विद्यया निवृत्तिः। यथा लोके सर्पस्याविद्यकस्य रज्जुयाथात्म्यज्ञानेन। आदरनैरन्तर्यदीर्घकालसेवितया त्वात्मोपासनयाऽऽत्मविद्या साक्षात्कारलक्षणा समुपजायतेऽनादिनिरूढमूलदेहतादात्म्याध्यासरूपाविद्यायाः समूलोन्मूलनक्षमा। दृष्टं च लोके गान्धर्वशास्त्रोपासनायाः षड्जादिस्वरसाक्षात्कारे हेतुत्वम्, सुवर्णरत्नपरीक्षादौ च सजातीयप्रत्ययप्रवाहरूपोपासनाया वस्तुस्वरूपसाक्षात्कारहेतुत्वम्। अत एव श्रुतावात्म-

दर्शने निदिध्यासनरूपध्यानस्य हेतुत्वमभिहितम् । तत्र श्रवणमनने अविशुद्ध-चित्तस्य ध्याने उपकुरुतः । विशुद्धचित्तस्य तु दर्शने । अद्वैतिमते ज्ञानमेव केवलं मोक्षसाधनम् । कर्म तु चित्तशुद्धावुपयुज्यते । न तु कर्मणा सह ज्ञानस्य समुच्चयः संभवति । कर्तृकर्मफलादिभेदबुद्धौ हि सत्यां कर्म, ज्ञानं त्वद्वितीयात्मबुद्धिरूपं सर्वद्वैतोपमर्दं इति रीत्यैकत्वनानात्वबुद्ध्योर्विरोधात् । "विद्यां चाविद्यां च यस्तद्वेदोभयं सह" इति श्रुत्युक्तः समुच्चयस्तु कर्मोपासनयोर्विद्याऽविद्यारूपयोरिति न तद्विरोधः । साधनचतुष्टयं त्वात्मजिज्ञासायामुपयुज्यते । भक्तेरपि ज्ञानप्रत्यूहापाकरणेन ज्ञान एवोपयोगः । अत एव—"भक्त्या मामभिजानाति यावान् यश्चास्मि तत्त्वतः" इति गीता । इत्थं ज्ञानस्य साक्षात्परम्परया वा सर्वेषां मोक्षसाधनानां श्रुतिस्मृतीतिहासपुराण-प्रतिपादितानामपेक्षा स्वोत्पत्तौ, न तु स्वज्ञाप्ये मोक्ष इत्युक्तं सर्वापेक्षासूत्रे शारीरके । ज्ञानस्यापि मोक्षो न कार्यः, अविद्यानिवृत्त्युपलक्षितस्यात्मन एव मोक्षरूपत्वात् । तदुक्तम्—"निवृत्तिरात्मा मोहस्य ज्ञातत्वेनोपलक्षितः" इति, "अधिष्ठानावशेषो हि नाशः कल्पितवस्तुनः" इति च । ज्ञानेन हि प्राप्तस्यैवात्मवस्तुनः प्राप्तिः, कण्ठगतविस्मृतचामीकरप्राप्तिवत् । परिहृतस्यैव सर्वानर्थस्य परिहारः, पादलग्नरज्जुसर्पस्येव । न तु ज्ञानेन द्वैतनिवृत्तिः क्रियते, तन्निवर्तकाभावेन द्वैतापत्तेः । अत एवोक्तं [ मङ्गल ]गौडब्रह्मानन्द्याम्—"चरमधीरूपविद्यावतः क्षणस्याविद्यातत्कार्याश्रयकालपूर्वत्वाभावनियमः" इति । मोक्षस्य च परमपुरुषार्थत्वम्, नित्यत्वात् । स्वतः पुरुषार्थत्वं तु प्रकाशमानानन्दरूपत्वात् । अत एव न दुःखध्वंसरूपत्वम् । अत एवोक्तं चित्सुखाचार्यैः—"दुःखाभावोऽपि मुक्तौ न स्वतः पुरुषार्थः । सर्वत्र दुःखाभावस्य स्वरूपसुखाभिव्यक्तिप्रतिबन्धकाभावरूपतया सुखशेषत्वात्" इति ।

अथेदानीमद्वैतिमत एव जीवैकत्वनानात्वादिपक्षेषु मुक्तिश्चिन्त्यते । तत्र जीवैक्यवादे ब्रह्मात्मैक्याज्ञानकल्पितस्य जीवेश्वरविभागादिकृत्स्नभेद-प्रपञ्चस्य तद्विद्योदये विलयान्निर्विशेषचैतन्यरूपेणैवावस्थानमिति, अनेक-जीववादे जीव इवेश्वरोऽपि प्रतिबिम्बविशेष इति पक्षे मुक्तस्य बिम्बभूत-शुद्धचैतन्यरूपेणैवावस्थानमिति । अनेकजीववादेऽवच्छेदपक्षस्तु नोपपद्यते, यदवच्छेदेन मुक्तिस्तदवच्छेदेनान्तःकरणान्तरसंसर्गे पुनरपि बन्धापत्तेः ।

प्रतिबिम्बो जीवः, बिम्बस्थानीय ईश्वरः उभयानुस्यूतं शुद्धचैतन्यमिति पक्षे तु यावत्सर्वमुक्ति सर्वज्ञत्वसर्वकर्तृत्वसर्वेश्वरत्वसत्यकामत्वादिगुणविशिष्टपरमेश्वरभावापत्तिर्मुक्तिरिष्यते । सगुणोपासकानामपि यद्यपि परमेश्वर-

भावापत्तिस्तथापि तेषामखण्डसाक्षात्काराभावान्नाविद्यानिवृत्तिः, न वाऽह-ङ्कारादेर्विलयः। जगद्व्यापारवर्जं तु भोगमात्रसाम्यम्। मुक्तानां तु निःसन्धि-बन्धमीश्वरभावं प्राप्तानां जगत्सृष्टिसंहारादिस्वातन्त्र्यमिति विशेषः। तस्माद् यावत्सर्वमुक्ति परमेश्वरभावो मुक्तस्येति। सर्वमुक्तौ तु निर्विशेष-चैतन्यरूपेणावस्थानमिति। अयमेव पक्षः श्रुतिसूत्रभाष्याद्यनुगुणो मुक्तस्या-पहतपाप्मत्वादिगुणाष्टकनिरूपणादिति सिद्धान्तलेशे श्रीमदप्पय्यदीक्षिता आहुः—

आसर्वमुक्तिपरिकल्पितसत्यकामसंकल्पकल्पितजगत्स्थितिभङ्गसर्गे।
शक्तं स्वतस्तु सुखचिद्घनमद्वितीयं मुक्तोपसृप्यमहमस्मि विशुद्धतत्त्वम्॥ इति।

स एष मोक्षो दुःखाभावो वा, स्वप्रकाशानन्दरूपो वा भवतु, तथापि तत्र मुक्तिपर्यायप्रयोगा अविशेषेणोपलभ्यमानाश्चिन्त्यन्ते, तच्चिन्ताया मोक्ष-स्वरूपज्ञानोपयोगित्वात्। तत्र मोक्षशब्दार्थ एवादावतिप्रसिद्धत्वाद् विचा-र्यते। तत्र मोक्षपदे मोक्षधातोः सन्नन्तात्कर्मणि घञ्प्रत्ययो बाहुलकात्। 'अहं मुच्येयम्' इति या मुक्तिप्रकारिकेच्छा तद्विशेष्य इत्यर्थः। स चात्मनो मोक्षरूपत्वे घटते। "मुचेरकर्मकस्य" इति गुणस्त्वात्मातिरिक्तकर्मशून्यत्व-रूपाकर्मकत्वमादायोपपाद्यः, यथा गत्यादिसूत्रे देशकालादिभिन्नकर्मशून्यत्व-मेवाकर्मकत्वमिति। यद्वा मुचेरकर्मकत्वेऽपि सन्नन्तस्य सकर्मकत्वेन कर्मणि घञ्सिद्ध इति। दुःखध्वंसादिरूपात्मातिरिक्तकैवल्यवादिमते त्वत्र भावे घञ्। सन्नर्थश्चाविवक्षितः। यथा येनेत्यर्थे भाष्ये यावतेति वत्वर्थाविवक्षया बाहुल्येन प्रयुज्यते।

मुक्तिरिति तु दुःखध्वंसात्मिका बन्धनिवृत्तिरेव। निर्वाणमपि स्नेहक्षये प्रदीपोपशमे इव ज्ञानेन सर्वकर्मपरिक्षये देहादिसर्वदुःखपरिक्षयरूपम्। प्रयुज्यते च प्रदीपोपशमे निर्वाणशब्दः "दीपनिर्वाणगन्धं च" इत्यादौ। निरोधोऽपि जन्मादिनिवृत्तिरेव। अपवर्गोऽप्यपवृज्यतेऽपनीयतेऽनेन जन्मादि-दुःखमिति व्युत्पत्त्या ज्ञानम्। बाहुलकात् करणे घञ्। साधनशब्दस्य च साध्ये दुःखध्वंसे प्रयोगः, "अन्नं प्राणाः" इतिवत्। अमृतत्वं मृत्युप्रयोजक-स्याविद्याकर्मादेर्निवृत्तिः। कैवल्यमात्मनो देहादितादात्म्याध्यासाभावो जीवन्मुक्तौ, विदेहत्वदशायां तु शरीरादिसंबन्धाभावः। निर्वृतिर्वृतेरभाव इत्यर्थाभावेऽव्ययीभावेन सह विकल्पात् /"कुगतिप्रादयः" इति समासः, अज्ञानकृतात्मावरणस्याज्ञानरूपस्यैव वावरणस्याभावः। अभयं भयस्य तत्प्रयोजकदेहतादात्म्याध्यासस्य चाभावः। परा सिद्धिः=परं ज्ञानम्, अ

ज्ञाने परत्वं च सर्वानर्थप्रहाणहेतुत्वम् । अत्रापि साधनशब्दस्य साध्ये प्रयोगः प्राग्वत् । संसिद्धिः = सम्यग्ज्ञानम् । अशरीरत्वम् - देहतादात्म्याध्यासाभावः, देहसंबन्धाभावश्च । निःश्रेयसमपि निश्चितं यच्छ्रेय इति व्युत्पत्त्या, अत्र निश्चितत्वं चेदं श्रेय एवेत्याकारकनिश्चयविशेष्यत्वम्, तत्त्वं चापवर्गस्य नित्यत्वात् । स्वर्गादीनां त्वनित्यत्वेन नैतादृशनिश्चयविशेष्यत्वम् । निरतिशयं वा श्रेयो निःश्रेयसम् । स्वर्गादीनां सातिशयत्वेन न तत्त्वमिति ।

तदित्थं विचारितं मोक्षस्तत्साधनानि च । तत्र बाह्याबाह्यानां बह्वीषु विप्रतिपत्तिषु सतीष्वप्यबाह्यानामत्रार्थे संवादः—

कर्मभिर्भगवद्भक्तिभक्त्या चेशकृपा तया ।<br>ज्ञानं तेन विमुक्तिश्च मोक्षधर्मस्य संग्रहः ॥



( १४ )

# प्रतिभाविमर्शः

अनिर्वाच्यां वाक्यवेद्यां प्रमितिं मातृरूपिणीम् ।
अविकल्पां विकल्प्यैस्तु त्रिभिर्वाक्यैर्विभाविताम् ॥
प्रतिभां सर्वजन्तूनां प्रवृत्तिव्यवहारयोः ।
जननीं विश्वजननीमभिदां नौमि संभिदाम्[1] ॥

अथातः प्रतिभाजिज्ञासा । यतो लोके सर्वाः प्रवृत्तयः सर्वे च लोकव्यवहाराः प्रतिभामूलाः । तदुक्तम्—"प्रमाणत्वेन तां लोकः सर्वः समनुपश्यति । समारम्भाः प्रतायन्ते तिरश्चामपि तद्वशात् ॥" ( वा० २।१४९ ) इति । सा चोपजायमाना स्वसंवेदनसिद्धाऽपि स्वसंवेदनसमये प्रतिपत्त्रापि नियतेन रूपेणान्यस्याख्यातुं निरूपयितुञ्च न शक्यत इत्यवेद्यमपि ब्रह्म यथा कथञ्चिदुपनिषन्मात्रगम्यमौपनिषदैः कथञ्चिदुपदिश्यते, तथैव व्याकरणागमोपगम्यामेतां हर्यादिभिरुपदिष्टां कथञ्चिन्निरूपयितुं ममैष क्षुद्रः प्रयासः ।

तत्र वैयाकरणस्याखण्ड एवैकोऽनवयवः शब्दः स्फोटलक्षणो वाक्यम्, प्रतिभैव वाक्यार्थः, अध्यासश्च सम्बन्ध इति मतम् । तदुक्तं हरिणा—"वाक्यरूपस्य वाक्यार्थे वृत्तिरन्यानपेक्षया" ( वा० २-२६४ ) इति । अयमर्थः— वाक्यरूपस्य एकोऽनवयवः शब्द इत्येवं लक्षणलक्षितस्य वाक्यार्थे वृत्तिः, वाक्यार्थे बोधनीये प्रवृत्तिः, वाच्यार्थबोधनाय प्रवृत्तिरिति यावत् । अन्यानपेक्षया, अन्यद् वाक्यस्वरूपातिरिक्तं प्रवृत्तिनिमित्तम्; तदनपेक्षया वाक्यस्वरूपमात्रप्रवृत्तिनिमित्तापेक्षयेति यावत् । तथा च वाक्यार्थे यदि वाक्यस्वरूपस्य तादात्म्याध्यासो न स्यात्तदा वाक्यस्वरूपस्य वाक्यार्थधर्मत्वाभावाद् वाक्यस्वरूपं वाक्यस्य वाक्यार्थबोधाय प्रवृत्तौ निमित्तं न स्यात् । घटपदस्य घटबोधाय प्रवृत्तौ हि घटधर्मो घटत्वं प्रवृत्तिनिमित्तं भवतीति । अत्राध्यस्यत इत्यध्यास इति कर्मणि घञन्तेनाध्यस्यमानं वाक्यवाक्यार्थयोस्तादात्म्यमेव सम्बन्ध इति ज्ञेयम् । एवं प्रतिभाया वाक्यार्थत्वे व्यवस्थिते तस्याः स्वरूपनिरूपणात् प्राग् वाक्यविषयेऽष्टानां विकल्पानां वाक्यार्थविषये च षण्णां विकल्पानां तत्तद्वादिसम्मतानां वाक्यवाक्यार्थयोः सम्बन्धानां

1. संकल्पिता भिदा यस्यां ताम् ।

चानैकध्येन विकल्पितानामुपवर्णनमावश्यकम्, कीदृशे वाक्यस्वरूपेऽभ्युपगम्यमाने प्रतिभा वाक्यार्थः ? अन्ये तु वाक्यार्थाः कुतो न वैयाकरणैरभ्युपेताः ? इति जिज्ञासानिवृत्तिं विना प्रतिभाया वाक्यार्थत्वव्यवस्थापनासंभवात्। तत्र वाक्यविषयेऽष्टौ विकल्पा हरिणा उपदर्शिताः—

आख्यातशब्दः सङ्घातो जातिः सङ्घातवर्तिनी।
एकोऽनवयवः शब्दः क्रमो बुद्ध्यनुसंहृतिः॥
पदमाद्यं पृथक् सर्वं पदं साकाङ्क्षमित्यपि।
वाक्यं प्रति मतिर्भिन्ना बहुधा न्यायवादिनाम्॥

(वा० २।१-२)

अत्र नितरामायते आगच्छत्यर्थो बुद्धौ ययाऽर्थो बुद्धिविषयो बुद्ध्यारूढो भवति सा युक्तिर्न्यायः। अत्र वाक्यविषयकस्तर्कः। न्याङ्भ्यामायतेर्बाहुलकात् करणे घञ्। ततश्च न्यायवादिनामित्यस्य न्यायमाश्रित्य वाक्यव्यवस्थां वदतामित्यर्थः पर्यवसितः। ते चाष्टौ पक्षभेदा इमे — १. आख्यातशब्दो वाक्यमिति, २. पदसंघातः, ३. संघातवर्तिनी जातिः, ४ एकोऽनवयवः शब्दः, ५. क्रमः, ६. बुद्ध्यनुसंहृतिः, ७. आद्यं पदम्, ८. पृथक् सर्वं पदं साकाङ्क्षमिति।

तत्राख्यातशब्दो वाक्यमिति वादिनामाख्यातशब्द एव वाक्यमिति नाभिप्रायः, 'देवदत्त गामभ्याज शुक्लां दण्डेन' इत्यादौ सुप्तिङन्तचये वाक्यत्वव्यवहारस्य सर्वजनीनस्यापलापप्रसङ्गात्। किन्तु क्वचिदाख्यातशब्दोऽपि वाक्यमिति, यत्र कारकशब्दप्रयोगं विना केवलाख्यातशब्दप्रयोगेऽपि वाक्यार्थावगतिः। यथा 'पिधेहि' इति। यदिदं वाक्ये शब्दार्थनिर्णयप्रकरणे दर्शितं हरिणा—

आख्यातशब्दे नियतं साधनं यत्र गम्यते।
तदप्येकं समाप्तार्थं वाक्यमित्यभिधीयते॥ इति।

अत्र तदप्येकं वाक्यमित्युक्त्याऽन्यदपि वाक्यमस्तीति गम्यते।

पदसंघातो वाक्यमिति वादिनस्तु पिधेहीत्यादौ न केवलाख्यातस्य वाक्यत्वम्, किन्तु द्वारमिति कर्माध्याहृत्य तत्संहतस्यैवेति। केवलाख्यातशब्दस्य वाक्यत्ववत् केवलसुबन्तस्य द्वारमित्यादेर्वाक्यत्वन्तु न, तत्र नियमेन पिधानक्रियाया अनुपस्थितेः।

सुप्तिङन्तपदसंघातवर्तिनी जातिर्वाक्यमिति वादिनामभिसन्धिस्तु 'देवदत्त गामभ्याज दण्डेन' इत्यादिपदसंघातरूपवाक्येष्वस्ति कश्चन प्रतिवाक्यं

भिद्यमानो जातिविशेषः। येन प्रतिपुरुषं प्रत्युच्चारणं प्रतिक्षणं भिद्यमानेऽपि 'देवदत्त गामभ्याज दण्डेन' इति वाक्य एकत्वप्रत्यभिज्ञा भवति। तत्र प्रतिपुरुषं प्रत्युच्चारणं प्रतिक्षणं भिद्यमाने पदसंघाते वाचकत्वं न संभवति, शक्तेरानन्त्यव्यभिचारदोषप्रसङ्गात्। अतः पदसंघातगताया जातेरेकस्या एव वाचकत्वमिति तस्या एव वाक्यत्वमिति।

एकोऽनवयवः शब्दो वाक्यमिति केषाञ्चिन्मतम्। एतन्मते वाक्य-स्फोटोऽखण्डः, तत्र वर्णपदापोद्धारकल्पनायामपि वस्तुतो वर्णाः पदानि वा तत्र न सन्तीति। पदानां क्रमः पौर्वापर्यम्, पूर्वापरीभूतानि पदान्येव वाक्य-मित्यपरे, एतन्मते वाक्यस्फोटस्य सखण्डत्वं पदसमुदायारब्धत्वं चेति।

बुद्ध्यनुसंहतिर्वाक्यमित्यन्ये। एतस्मिन् कल्पे वाक्यमखण्डम्। तत्र पदानि वर्णा वा न सन्ति, किन्तु पदानि वर्णास्तद्बुद्धयश्च कल्पितानि। तत्र पदबुद्धीनां वर्णबुद्धीनाञ्च कल्पितानामनुक्रमेण संहार उपसंहारो बुद्ध्यनुसंहतिपदार्थः। क्रमवत्या बुद्ध्या क्रमवत्पदसमुदायरूपत्वं तत्र प्रकल्प्य वाक्यत्वव्यवहार इति फलितम्।

आद्यं पदं वाक्यमित्यपि केषाञ्चिन्मतम्। अस्मिन् पक्षेऽनेकपदारब्धं सखण्डं वाक्यम्। अस्मिन् मते प्रथमोपस्थितत्वात् शक्ततावच्छेदकानुपूर्वी-कल्पनायां लाघवाच्चाद्यं पदमेव वाचकम्, इतरपदानि तु तत्सहकारीणि तच्छक्तिद्योतकानि। यथा 'साक्षात् क्रियते' इत्यत्र साक्षात्पदमेव साक्षात्कार-वाचकम्, क्रियत इति तु पूर्वपदस्य तदर्थे शक्तिद्योतकमिति रीत्या आद्य-पदस्यैव वाक्यत्वमिति।

पृथक् सर्वं पदं साकाङ्क्षं वाक्यमिति वादिनामयं भावः—पृथग् वाक्यात् पृथक्कारे, साकाङ्क्षं पदान्तरसाकाङ्क्षं सर्वमाद्यं मध्यममन्त्यञ्च समुदितं वाक्यमिति। तदुक्तं परमर्षिणा—"अर्थैकत्वादेकं वाक्यं साकाङ्क्षं चेद् विभागे स्यात्" इति।

एवं विमर्शे चेदं समायातम्—वाक्यविषये आचार्याणामष्टौ विकल्पाः। तत्रापि वाक्यस्फोटोऽखण्ड इति पक्षे जातिः संघातवर्तिनी, एकोऽनवयवः शब्दः, बुद्ध्यनुसंहतिरिति त्रीणि वाक्यलक्षणानि। वाक्यस्फोटः सखण्ड इति पक्षे त्वाख्यातशब्दः, क्रमः, पदसंघातः, पदमाद्यम्, पृथक् सर्वं पदं साकाङ्क्षमिति पञ्च लक्षणानि। तत्रापि पदसंघातः, क्रम इत्यभिहि-तान्वयवादिपक्षे लक्षणद्वयम्। तथाहि—पदमेव शक्तम्, न तु वाक्यम्। वाक्यार्थभूतः पदार्थानां संसर्गस्त्वाकाङ्क्षाभास्यः। आकाङ्क्षा च तत्तच्छाब्दबोधं प्रति पूर्वभावित्वेन नियतः पदानां समभिहारविशेषः।

अभिहितयोः शक्त्योपस्थापितयोः पदार्थयोरन्वय आकाङ्क्षाभास्य इति ये वदन्ति, तेऽभिहितान्वयवादिनः। तथा च पदानां संघातो वाक्यम्। पदानां पौर्वापर्यरूपः क्रमो वा वाक्यमिति पक्षेऽभिहितान्वयवाद आपतति, पदानामेव शक्तत्वात्; पदसंघातरूपे वाक्ये शक्त्यनभ्युपगमात्। एष चाभिहितान्वयवादो नैयायिकानाम्। तत्र च संसर्गस्याकाङ्क्षाभास्यत्वं व्युत्पत्तिवादादौ प्रपञ्चितम्। आख्यातशब्दः, पदमाद्यम्, पृथक् सर्वं पदं साकाङ्क्षमिति वाक्यस्य लक्षणत्रयं त्वन्विताभिधानपक्षे बोध्यम्। तथा हि—कार्यान्वित इतरपदार्थान्विते वा स्वार्थे पदानां शक्तिरिति वादिनां तेषां मतेऽन्वयरूपः संसर्गोऽपि शक्तिभास्य एव। तत्रान्वयत्वेनान्वयसामान्यं शक्तिभास्यम्, तादात्म्यादिरूपः सम्बन्धविशेषस्तु वाक्यलक्षणया लक्ष्यत इत्यन्विताभिधानवादिनो मीमांसकाः। तदुक्तम्—

सर्वत्रैव हि वाक्यार्थो लक्ष्य एवेति ये विदुः।
भाट्टास्तेऽपीत्थमेवाहुर्लक्षणाया ग्रहे गतिम्॥ इति।

अभिहितान्वयवादेऽन्विताभिधानवादे च प्रसरन्तो बहवस्तु विशया निराकृता अस्मत्कृतायां वाक्यपदीयद्वितीयकाण्डस्याद्यकारिकाद्वयस्य व्याख्यायामम्बाकर्त्र्यामिति नात्र बहु प्रयत्यते। अत्र पक्षे आख्यातशब्द इतरपदार्थन्वितस्वार्थबोधकः। आद्यं पदमितरपदार्थान्वितस्वार्थबोधकम्, पृथक् साकाङ्क्षं सर्वं पदमितरतत्तत्पदार्थान्विततत्तत्स्वार्थबोधकमिति रीत्याऽस्मिन् वाक्यलक्षणत्रयेऽन्विताभिधानवादसम्भवः। यत्तु "पदप्रकृतिः संहिता" इति प्रातिशाख्यम्, तत्र पदानां नैरन्तर्येण सन्निवेशविशेषरूपवाक्यरूपा संहिता पदानां स्वघटकानां प्रकृतिरपोद्धारकल्पनया विवर्तोपादानकारणम्, सर्पस्य रज्जुरिवेति वाक्यस्याण्डत्वपक्षेऽर्थः। वाक्यरूपायाः संहितायाः सखण्डत्वपक्षे तु पदानि प्रकृतिर्घटादेर्मृदादिरिवोपादानकारणं यस्या इति तदर्थः। तत्राख्यातशब्दो वाक्यमिति शब्दार्थनिर्णयप्रकरणे वाक्यपदीये दर्शितम्—

आख्यातशब्दे नियतं साधनं यत्र गम्यते।
तदप्येकं समाप्तार्थं वाक्यमित्यभिधीयते॥ इति।

(वा० २।३२८)

"केवलेन पदेनार्थः" (वा० २।४१) इत्यादिना श्लोकाष्टकेन संघातो वाक्यमिति दर्शितम्। "यथैक एव सर्वार्थः" (वा० २।७) इत्यादिना, "देवदत्तादयो वाक्ये तथैव स्युरनर्थकाः" (वा० २।१४) इत्यन्तेन ग्रन्थेन;

तथा "अव्यक्तः क्रमवान्" (वा० २।१९) इत्यादिना "व्यावृत्तभेदो येनार्थः" (वा० २।२७) इत्यन्तेन चाखण्ड एव स्फोटलक्षणः शब्दो वाक्यमिति दर्शितम्। स्फोटसत्त्वे मानञ्च "स्फोटः शब्दो ध्वनिः शब्दगुणः" (महाभा० १।१।७०) इति। अस्यार्थः—यः स्फोटो नादैरभिव्यक्तः सन्नर्थप्रतिपादकः स शब्दः, ध्वनिस्तु तस्य शब्दस्य गुणो व्यञ्जकतया उपकारकोऽङ्गभूत इति। स्फोटश्च द्विविधो बाह्य आभ्यन्तरश्चेति। तत्राद्यः परश्रवणगोचरः। आभ्यन्तरस्तु मनोमात्रगोचरः। बाह्योऽपि जातिव्यक्ति-भेदेन द्विविधः। तत्र जातिलक्षणस्य स्फोटस्य 'जातिः संघातवर्तिनी' इति निर्देशः। व्यक्तिलक्षणस्य तु 'एकोऽनवयवः' शब्द इति। आभ्यन्तरस्य तु 'बुद्ध्यनुसंहृतिः' इति। तत्र जातिव्यक्तिलक्षणस्य बाह्यस्फोटस्य "यथैक एव" (वा० २।७) इत्यादिना, "अव्यक्तः क्रमवान्" (वा० २।१९) इत्यादिना च ग्रन्थेन स्वरूपमुक्तम्। "यदन्तः शब्दतत्त्वम्" (वा० २।३०) इत्यादिना श्लोकचतुष्टयेनान्तरस्य स्फोटस्य स्वरूपमुक्तम्। "सन्त एव विशेषा ये" (वा० २।४९) इत्यादिना "समानेऽपि तु शब्दत्वे" (वा० २।५३) इत्यन्तेन श्लोकपञ्चकेन क्रमो वाक्यमिति दर्शितम्। "नियतं साधने साध्यम्" (वा० २।४७) इत्यादिना श्लोकद्वयेन 'पदमाद्यम्', 'पृथक सर्वं पदं साकाङ्क्षम्' इति लक्षणद्वयं व्याख्यातम्। अन्यदपि वार्त्तिककारीयं पारिभाषिकं शास्त्रमात्रोपयोगि वाक्यलक्षणमस्ति— "आख्यातं साव्ययकारकविशेषणं वाक्यम्" (महाभा० २।१।१ वा० ९) इति। एतदुदाहरणन्तु 'मृदु प्रपचति स्थाल्यां तण्डुलम्' इति। अत्र 'प्र' इत्यव्ययम्। स्थाल्यां तण्डुलमिति कारकद्वयम्। मृदु इत्याख्यातस्य विशेषणम्। एतच्च साव्ययकारकविशेषणत्वं यथासंभवं बोध्यम्, न तु नियतमिति। "एकतिङ् वाक्यम्" (महाभा० २।१।१। वा० १०) इत्यपि वार्त्तिककारीयं शास्त्रमात्रोपयोगि पारिभाषिकं लक्षणमस्ति। अस्यार्थः— एकं तिङन्तं परपदार्थान्वितार्थं यस्मिन् पदकदम्बके तदपि वाक्यं भवतीति। एतच्च वाक्यलक्षणं प्रायोऽभिप्रायेण। तेन पचति भवति, पश्य मृगो धावति—इत्यादीनामपि वाक्यत्वं तदीयेनैव पूर्वलक्षणेन सम्पन्नमिति। लौकिकमपि वाक्यलक्षणं जरन्मीमांसकोक्तमस्ति—"अर्थैकत्वादेकं वाक्यं साकाङ्क्षं चेद् विभागे स्यात्" (जै० सू० २।१।४६) इति। अस्यार्थः— यत्पदकदम्बकं परस्परान्वितपदार्थकम्, तदर्थैकत्वादेकं वाक्यम्, किन्तु तद्घटकपदानां विभागे ततः पृथक्कारे, तत्पदकदम्बकं साकाङ्क्षम्, पृथक्कृतपदार्थविषये साकाङ्क्षं यदि स्यादिति अनयोर्द्वयोरपि शास्त्रीय-

लौकिकवाक्यलक्षणयोः पदसंघातो वाक्यमिति पक्षेऽन्तर्भावः। इत्थमष्टावेव प्रागुक्ता वाक्यविकल्पा मतभेदेन सम्पद्यन्त इति बोद्धव्यम्। इमे चाष्टौ वाक्यविकल्पाः स्याद्वादरत्नाकरेऽपि ४-१० एतत्संख्याके प्रकरणे सम्यगुपवर्णिताः।

एतानेव चाष्टौ वाक्यविकल्पान् समाश्रित्य वाक्यार्थविषये संभवन्तः षड् वाक्यार्थविकल्पा हरिणा द्वितीयकाण्डे वाक्यपदीये मतभेदेनोपदर्शिताः। ते यथा (१) प्रतिभा, (२) पदार्थानां संसर्गः, (३) पदार्थान्तरसंसर्गात् पूर्वं सामान्यरूपः पदार्थान्तरसाकाङ्क्षः पश्चात्तु पदार्थान्तरसंसर्गवशान्निराकाङ्क्षो विशेषरूपेऽवस्थितः पदार्थान्तरसंसर्गोपलक्षितः पदार्थ एव वाक्यार्थः, (४) पदार्थान्तरसंसर्गविशिष्टः पदार्थ एव वाक्यार्थः, (५) क्रिया वाक्यार्थः, (६) वाक्यस्य प्रयोजनं वाक्यार्थ इति। तत्र वाक्यस्याऽखण्डस्फोटरूपत्वपक्षे जातिः संघातवर्तिनी, एकोऽनयवः शब्दः, बुद्ध्यनुसंहृतिरिति त्रिष्वपि लक्षणेषु प्रतिभा वाक्यार्थः। तदुक्तं हरिणा—

विच्छेदग्रहणेऽर्थानां प्रतिभाऽन्यैव जायते।
वाक्यार्थ इति तामाहुः पदार्थैरुपपादिताम्॥ ( वा० २-१४४ )

अस्यार्थः—अखण्डाद् वाक्याद् बुद्ध्याऽपोद्धृतेभ्यो देवदत्तादिपदेभ्यः स्वार्थानां विच्छेदेन ग्रहणकाल एव देवदत्तादिपदार्थव्यतिरिक्तैव काचनाऽखण्डवाक्यार्थविषयाऽसत्यैरेवोपाधिभूतैर्देवदत्तादिपदार्थैरुपपादिताऽभिव्यञ्जिता प्रतिभा जायते, तां वैयाकरणा वाक्यार्थविषयकत्वाद् वाक्यार्थ इत्याहुरिति। आख्यातशब्दो वाक्यमित्यस्मिन् पक्षे क्रिया वाक्यार्थः। तदुक्तम्—

क्रिया क्रियान्तराद् भिन्ना नियताधारसाधना।
प्रक्रान्ता प्रतिपत्तॄणां भेदाः संबोधहेतवः॥ इति।
( वा० २-४१७ )

अयमर्थः—क्रियावाचकपदमात्रश्रवणे सति नियताधारा नियतसाधना च क्रिया, अत एव च क्रियान्तराद् भिन्ना प्रथमतरमेव प्रतिपत्तॄणां बुद्धौ प्रक्रान्ता, वाक्ये साधनभेदा आधारभेदाश्च प्रयुज्यमानाः प्रतिपत्तॄणां संवोधहेतवः, प्रतिपत्तॄणां या क्रियाविशेषप्रतिपत्तिस्तत्संवादिबोधहेतवः, तेन प्रतिपत्तॄणां प्रक्रमोपजातक्रियाविशेषप्रतिपत्तिसंवादमात्रं फलं भवतीति यावदिति। अन्यच्च—

प्रतिभा यत्प्रभूतार्था यामनुष्ठानमाश्रितम्।
फलं प्रसूयेत यतः सा क्रिया वाक्यगोचरः॥

इतीयं कारिका वाक्यपदीयटीकायां हरिपुण्यराजाभ्यामुद्धृताऽपि, क्कत्या इति न ज्ञायत इति वाक्यपदीयेऽन्यत्र वाऽन्वेष्टव्या। अस्यां कारिकायां वाक्यार्थभूतायाः क्रियाया विशेषणत्रयमुद्दिष्टम्। तत्राद्यं 'प्रतिभा यत्प्रभूतार्था' इति। अत्र यस्या नियताधारनियतसाधनविशिष्टायाः क्रियायाः प्रभूतः प्रसूतोऽर्थोऽखण्डवाक्यार्थरूपो विषयो यस्याः सा यत्प्रभूतार्था इति बहुव्रीहिः। अत्र प्रतिभाविषयेऽर्थे तादृशक्रियाप्रसूतत्वञ्च तादृशक्रियाज्ञाप्यत्वरूपं बोध्यम्। द्वितीयं तु क्रियाविशेषणं 'यामनुष्ठानमाश्रितम्' इति। अत्रानुष्ठानं पुरुषस्य क्रियायां प्रवृत्तिः। नियताधारां नियतसाधनाञ्च क्रियामुद्दिश्य हि लोकस्य प्रवृत्तिरिति। तृतीयं तु क्रियाविशेषणं 'फलं प्रसूयेत यतः' इति। नियताधारनियतसाधनविशिष्टक्रियात एव हि फलं प्रसूयते, न त्वतादृशक्रियातः। सा तादृशी क्रिया वाक्यगोचरः, वाक्यार्थ इति तदर्थः। अत्र विशेषणत्रयेण नियताधारनियतसाधनक्रियायाः स्वरूपं प्रतिभाहेतुत्वेन, प्रवृत्तिहेतुत्वेन, फलहेतुत्वेन च विशदीकृत्य तस्या एव वाक्यार्थत्वं विधीयते, न तु केवलाया इति। पदानां सङ्घातो वाक्यमिति, पदानां पौर्वापर्यरूपः क्रमो वाक्यमिति च पक्षद्वये पदार्थानां संसर्गो वाक्यार्थः। स च दर्शितो हरिणा—

सम्बन्धे सति यत्त्वन्यदाधिक्यमुपजायते।
वाक्यार्थमेव तं प्राहुरनेकपदसंश्रयम्॥ इति (वा० २-४२)

अयमर्थः—पदस्य साकाङ्क्षस्य पदान्तरेण सम्बन्धे सति यत्तु पदार्थापेक्षयाऽन्यत्, अर्थेषु वाक्यार्थेषु, आधिक्यमुपजायते उपजायमानं दृश्यते, तद्यथा—'वीरः पुरुषः' इत्यत्र वीरत्वपुरुषत्वयोर्गुणविशेषजातिविशेषयोरेकार्थसमवायप्रतीतिपूर्वकं सामानाधिकरण्यं वाक्यार्थः पदार्थापेक्षयाऽधिक उपजायमानो दृश्यते। अनेकपदसंश्रयम् अनेकपदाश्रितम् अनेकपदनिमित्तकं पदार्थोपस्थितिद्वाराऽनेकपदज्ञाप्यमिति यावत्। अनेकपदज्ञाप्यत्वादेव तं पदार्थयोः संसर्गरूपं वाक्यार्थमेव प्राहुर्न तु पदार्थमिति। तथा पदसङ्घातो वाक्यमिति पक्ष एव पदार्थयोः संसर्गरूपो वाक्यार्थः प्रकारान्तरेणाऽभिहितो हरिणा—

सर्वभेदानुगुण्यं तु सामान्यमपरे विदुः।
तदर्थान्तरसंसर्गाद् भजते भेदरूपताम्॥ इति।
(वा० २-४४)

अस्यार्थः—अपरे केचन, पदार्थान्तरसंसर्गं विना यत्तु कस्यचित्पदार्थस्य सर्वभेदानुगुण्यं सर्वेषां भेदानां पदार्थविशेषाणाम् आनुगुण्यमन्वयानुकूलत्वम्

अन्वययोग्यत्वम्, तदेव पदार्थस्य सामान्यं रूपं विदुः। तत्तु पदार्थस्य सामान्यं रूपम् अर्थान्तरसंसर्गात् पदार्थान्तरसंबन्धाद् भेदरूपतां पदार्थविशेषरूपतां भजते। पदात् सामान्येन प्रतीयमानः पदार्थ एव पदान्तरसम्बन्धे सति तदुपस्थाप्यपदार्थान्तरसंसर्गितया प्रतीयमानो विशेषरूपतामापन्नो वाक्यार्थः, पदार्थयोः संसर्गो वाक्यार्थ इति यावत्। अत्र च प्रकारान्तरेणाभिहितान्वयवाद एव प्रतिपाद्यते। तथा हि अभिहितयोः शक्त्योपस्थापितयोः पदार्थयोरन्वयः पदयोः समभिव्याहारविशेषरूपाकाङ्क्षाभास्य इत्यभिहितान्वयवादस्वरूपम्। अस्मिंश्च पक्षे पदार्थयोरन्वयस्य पदसमभिव्याहारविशेषरूपवाक्यार्थत्वं स्फुटमेवोक्तम्। अन्यत्राप्येतद्दर्शितम्—"अभिधेयः पदस्यार्थो वाक्यस्यार्थः प्रयोजनम्" (वा० २-११४) इति। इत्येवमनया कारिकया सर्वभेदानुगुण्यमित्यादिकया प्रकारान्तरेणाभिहितान्वयपक्षे प्रतिपाद्यमाने, कार्यानुमेयत्वं वाक्यार्थस्य संसर्गस्य प्रतिपादितमन्यत्र—

कार्यानुमेयः सम्बन्धो रूपं तस्य न दृश्यते।
असत्त्वभूतमत्यन्तमतस्तं प्रतिजानते॥ (वा० २-४६)

अस्यार्थः—पदार्थव्यतिरेकेण वाक्यार्थत्वेन कल्पितः पदार्थानां परस्परं सम्बन्धः पदार्थव्यतिरेकेणासन्नेव नियमेनानुमेय एव, न तु पदसमुदायवाच्यः; किं तर्हि स्वान्वययोग्यसर्वपदार्थान्तरान्वयानुगुणसामान्यरूपो यः पदार्थः स एव पदार्थान्तरसंनिधानाद् विशेषविश्रान्तो वाक्यार्थः। स च कार्यानुमेयः, कार्येण पदार्थानां विशेषे विश्रान्तिलक्षणेन अनुमीयत इति कार्यानुमेयः, तस्य सम्बन्धस्य रूपम्, इदं तदिति न दृश्यते न ज्ञायते। अत एवात्यन्तमसत्त्वभूतं पदार्थव्यतिरेकेण नास्ति सत्त्वं यस्य तमेवम्भूतमाचार्याः प्रतिजानते प्रतिज्ञया निर्दिशन्तीति। तदेवमनेन श्लोकेन पदानामेवार्थो यः सर्वपदार्थान्वययोग्यः सामान्यरूपः स एव पदार्थान्तरसन्निधानाद् विशेषविश्रान्तो वाक्यार्थ इति लभ्यते। अस्मिंश्चाभिहितान्वयवादस्यैव मतविशेषे वाक्यार्थत्वेनाभिमतस्य सम्बन्धस्य प्रागुक्तरीत्या कार्यानुमेयत्वमेव, न त्वाकाङ्क्षाभास्यत्वमित्यप्यनेन श्लोकेन विज्ञायते।

अन्विताभिधानमाश्रित्य तु पदमाद्यमिति, पृथक् सर्वं पदं साकाङ्क्षमिति च। अस्मिन् पक्षद्वये पदस्यैकस्य पदान्तरसंसर्गादेकस्य पदार्थस्य पदार्थान्तरसंसर्गाद्वा प्रथमतरमेव एकपदार्थसंसृष्टापरपदार्थरूप एव वाक्यार्थः प्रतिपत्तृबुद्ध्यारूढो भवति। यथा निरूपितम्—

तेषां तु कृत्स्नो वाक्यार्थः प्रतिभेदं समाप्यते।
व्यक्तोपव्यञ्जना सिद्धिरर्थस्य प्रतिपत्तृषु ॥ इति।
( वा० २-१८ )

अस्यार्थः—तेषाम् एकपदार्थविशिष्टापरपदार्थविशेषरूपे एकस्मिन् वाक्यार्थे आद्यं पदम्, बहून् शब्दान् वा प्रत्येकं वाचकत्वेनाभ्युपगच्छतामन्विताभिधानवादिनां तु कृत्स्नो वाक्यार्थः प्रतिभेदं प्रतिपदं प्रतिवर्णं वा समाप्यते। एकेनैव पदेनाद्येनेतरेण वा कृत्स्नो वाक्यार्थो निराकांक्षो बोध्यत इति यावत्। न चैवमितरपदवैयर्थ्यमत उत्तरार्धेनोत्तरमाह—व्यक्तोपव्यञ्जनेति। यतोऽर्थस्य वाक्यार्थस्य प्रतिपत्तृषु बोद्धृषु सिद्धिः प्रसिद्धिः, व्यक्तोपव्यञ्जना व्यक्तैः स्फुटतया श्रावणप्रत्यक्षगोचरैरितरपदैरुपव्यञ्जनमभिव्यक्तिर्यस्याः सा तथाभूता, अतो नेतरपदोदीरणवैयर्थ्यमिति। किञ्च—

पूर्वैरर्थैरनुगतो यथाऽर्थात्मा परः परः।
संसर्ग एव प्रक्रान्तस्तथाद्येष्वर्थवस्तुषु ॥ ( वा० २-४१८ )

अस्यार्थः – अभिहितान्वयवादे यथा पूर्वपूर्वपदार्थानुगतस्तत्संसृष्टः, परः परः पदार्थो वाक्यार्थः, पदार्थयोः संसर्गस्य पदयोः समभिव्याहारविशेषरूपाकाङ्क्षालभ्यत्वेन प्रथमं पूर्वपदश्रवणकालेऽप्रतीयमानत्वात्, तथान्विताभिधानवादे आद्येषु पूर्वेषु, अर्थवस्तुषु प्रतीयमानेषु परस्य परस्य पदार्थस्य 'संसर्गः प्रक्रान्त एव प्रथमतरमेव प्रतीतो भवतीति शेषः। इतरपदार्थान्वितस्यैव पदार्थत्वादिति भावः। तदेवमभिहितान्वयवादे "कार्यानुमेयः संबन्धः" इति श्लोकेन विशेषविश्रान्तः पदानामेवार्थो वाक्यार्थ इति लभ्यते। अन्विताभिधानवादे तु पदमाद्यमिति, पृथक् सर्वं पदं साकाङ्क्षमिति च पक्षद्वये प्रथमतरमेव संसृष्टो वाक्यार्थोऽव्यक्तं प्रतीयते, पदान्तरसन्निधानकाले तु तेन व्यज्यमानो व्यक्तं प्रतीयत इति निर्धारितम्। केषाञ्चित्तु मते न वाक्यार्थ आकाङ्क्षाभास्यः कार्यानुमेयो वाऽभिहितान्वयवादिनामिव, नाप्यन्विताभिधानवादिनामिव शक्तिभास्यः, किन्तु पदार्थः पदाभिधेयः, वाक्यार्थस्तु वाक्यस्य प्रयोजनमिति। तदेतदुक्तम्—"अभिधेयः पदस्यार्थो वाक्यस्यार्थः प्रयोजनम्" ( वा० २।११४ ) इति।

अयं भावः—पदार्थः पदस्याभिधेय इति वाक्यश्रवणे देशकालाव्यवधानरूपया आसत्त्या पदैरुपस्थापिताः पदार्था योग्यतया परस्परं संबध्य प्रतीयन्त इति न पदस्य वाक्यस्य वा वाक्यार्थे शक्तिः, किन्तु वाक्यश्रवणे प्रतीयमानो वाक्यार्थो वाक्यप्रयोजनम्; तद्भावे भावात्, तदभावेऽभावात्।

यथा गङ्गापदस्य तीरे लक्षणया प्रयोगे तीरे शैत्यपावनत्वादिप्रतीतिः प्रयोजनम्, न तु शैत्यपावनत्वादौ गङ्गापदस्य शक्तिर्लक्षणा वा तथा। न चैवं सति गङ्गापदस्य यथा शैत्यपावनत्वादौ व्यञ्जनावृत्तिः स्वीक्रियते, तथा वाक्यस्यापि वाक्यार्थे व्यञ्जनावृत्तिः स्वीक्रियतामिति वाच्यम्, व्यञ्जनाया अनुमानेन गतार्थत्वात्। तदेतत् प्रपञ्चितं व्यक्तिविवेके महिमभट्टैरिति नेह प्रतन्यते। तथा च न वाक्यस्य वाक्यार्थे वृत्तिरिति तदेतन्मतं दूषितमस्यैव श्लोकस्योत्तरार्धेन—"यस्य तस्य न सम्बन्धो वाक्यानामुपपद्यते" इति।

अयं भावः—यस्य वादिनो वाक्यप्रयोजनं वाक्यार्थो न वाक्याभिधेय इति तस्य वादिनो मते वाक्यानां परस्परं सम्बन्धो महावाक्येषु दृश्यमानो नोपपद्यते। अभिधेयद्वारको हि शब्दानां परस्परं सम्बन्धो भवति, अभिधेयश्च वाक्यानां नास्तीत्यसम्बद्धानि वाक्यानि प्राप्नुवन्तीति तदेतद् वाक्यप्रयोजनं वाक्यार्थ इति केषाञ्चिन्मतं सर्वेषु वाक्यलक्षणेषु सत्सु सम्भवतीति वाक्यलक्षणेषु पृथग् विभज्यमानेषु न पृथग् विभज्यतेऽस्मिन् वाक्यलक्षणे वाक्यार्थो वाक्यप्रयोजनमिति।

तदेवं षड् वाक्यार्था द्वितीयकाण्डे वाक्यपदीये उपदर्शिताः – प्रतिभा, पदार्थानां संसर्गः, पदार्थान्तरसंसर्गात् पूर्वं सामान्यरूपः पदार्थान्तरसाकाङ्क्षः पश्चात्तु पदार्थान्तरसंसर्गवशान्निराकाङ्क्षो विशेषरूपेऽवस्थितः पदार्थान्तरसंसर्गोपलक्षितः पदार्थ एव वाक्यार्थः, पदार्थान्तरसंसर्गविशिष्टः पदार्थ एव वाक्यार्थः, क्रिया वाक्यार्थः, वाक्यस्य प्रयोजनं वाक्यार्थ इति। तत्र संसर्गे संसर्गवशाद् विशेषावस्थिते पदार्थे च वाक्यार्थे स्वीक्रियमाणेऽभिहितान्वयवाद एवापतति, उभयत्रापि पक्षे संसर्गभानस्य पदसमभिव्याहारविशेषरूपाकाङ्क्षाप्रयोज्यत्वात्। पदार्थान्तरसंसृष्टः पदार्थो वाच्यार्थ इति पक्षे तत्तद्विशेषणविशिष्टसाधनान्विता क्रियैव वाक्यार्थ इति पक्षे चान्विताभिधानवादः स्पष्ट एव, पक्षद्वयेऽप्यन्वयस्य पदशक्त्या प्रतीयमानत्वात्। प्रतिभायां त्वखण्डस्य वाक्यार्थस्य विषयत्वात् पदार्थान्वयशून्या एकरसैव प्रतिपत्तिरिति न तत्र काचिदभिहितान्वयान्विताभिधानचर्चा। प्रयोजने तु वाक्यार्थे स्वीक्रियमाणेऽभिहितान्वयवाद एव, तत्र प्रतीयमानस्य पदार्थद्वयसंसर्गरूपस्य प्रयोजनस्याकाङ्क्षामात्रलभ्यत्वादिति।

यद्यपि विधिर्वाक्यार्थ इति, नियोगो वाक्यार्थ इति, भावना वाक्यार्थ इति पक्षत्रितयमपि शास्त्रेषु दृश्यते। तथा हि—इष्टसाधनत्वाख्यो विधि-

लिङ्लेट्लोट्तव्याद्यन्तधातुप्रयोगे प्रतीयमानो लिङाद्यर्थोऽपि तत्तत्साधनान्वितक्रियान्वितो वाक्यात् प्रतीयमानो वाक्यार्थं इति श्रीमण्डनमुरारिमिश्रप्रभृतयः। तथा च लोके गामानयेत्यादौ गोकर्मकमानयनमिष्टसाधनमिति बोधः। वेदे तु 'स्वर्गकामो यजेत' इत्यादौ यागः स्वर्गसाधनम्, स्वर्गस्यैव फलत्वेनेष्टत्वादिति।

नियोगो लिङाद्यर्थ इति गुरवः। स च कार्यापूर्वविधिपदैरप्यभिधीयते। तल्लक्षणं तु "कृतिसाध्यं प्रधानं यत् तत्कार्यमभिधीयते" इति। स च कार्यरूपो नियोगो लोके क्रियारूप एव। तथा च गामानयेत्यादौ गोकर्मकमानयनं कार्यमिति बोधः। वेदे तु 'स्वर्गकामो यजेत' इत्यादौ यागादिक्रियातिरिक्तो यागादिक्रियाविषयको यागादिक्रियाकरणकस्तत्तत्फलकामिनियोज्यकश्च नियोगः कार्यं लिङाद्यर्थः। तदुक्तम्—

"कृतितत्साध्यमध्यस्थो यागादिर्विषयो मतः।
कार्येऽसंघटिताकारे विषयत्वेन सम्मतः॥" इति।

नियोज्यलक्षणन्तु—"नियोज्यः स च कार्यं यः स्वकीयत्वेन बुध्यते" इति। ममेदं कार्यमिति यस्य संप्रत्ययः स नियोज्यः। स च तत्तत्फलकामस्तत्तत्फलोपभोक्ता चेति तदर्थः। यद्यपि कृतिसाध्यस्य नियोगस्य न सविषयकत्वम्, तस्य यागादिक्रियाजन्यापूर्वरूपत्वात्; तथापि कृतेः सविषयकत्वात् कृतिघटितस्य तस्य सविषयकत्वम्। तथा च 'स्वर्गकामो यजेत' इत्यस्मात् स्वर्गकामनियोज्यकं यागादिकरणकं यागादिविषयकं च कार्यमिति बोधः। इदं च प्रभाकरमतं गुरुमतमित्यपि शास्त्रेष्वाख्यायते।

भावना वाक्यार्थं इति तु भट्टमतम्। सा च द्विविधा—शाब्दी भावना, आर्थी भावना चेति। तत्र लोके प्रयोक्तुरभिप्रायविशेषो लिङाद्यर्थः। तद्यथा गामानयेत्यत्र गोकर्मकमानयनं गुरोरभिप्रेतमिति बोधः। वेदे तु कर्तृपुरुषाभावाल्लिङादिशब्दनिष्ठा प्रेरणारूपव्यापारविशेषरूपैव भावना लिङाद्यर्थः, स्वर्गकामो यजेतेत्यादौ लिङ्श्रवणेऽयं लिङ् मां प्रवर्तयतीति प्रत्ययात्। मत्समवेतप्रवृत्त्यनुकूलव्यापारवानयं लिङ् इति त्वभिलापवाक्यार्थः। सा च लिङादिशब्दनिष्ठत्वात् शाब्दीति। सा च यजेतेत्यादौ लिङ्त्वांशेनाभिधीयते। आर्थी भावना तु पुरुषप्रवृत्तिरूपा यागाद्यनुकूला, पुरुषरूपार्थनिष्ठत्वादार्थी। सा च यद्यपि यजेतेत्यादावाख्यातत्वांशेनाभिधीयते, तथापि साध्यसाधनेतिकर्तव्यताविशिष्टा वाक्यार्थं एव, एवं शाब्दी भावनाऽपि। तथा च 'स्वर्गकामो यजेत' इत्यतो यागेन स्वर्गं भावयेदिति वाक्यार्थबोधः।

स्वर्गकामकर्तृका यागादिकरणिका स्वर्गसाध्यिका भावनेति। सर्वत्रैव चार्थभावनायां धात्वर्थस्य प्रायेण करणत्वेनान्वयः, गुणविधौ तु साध्यत्वेनान्वयस्तस्य। यथा 'दध्ना जुहोति' इति दध्ना होमं भावयेदिति। दधिकरणिका होमसाध्यिका भावनेति। क्वचित्तु धात्वर्थस्य भावनायामाश्रयत्वेनाप्यन्वयः। यथा 'दध्नेन्द्रियकामस्य जुहुयात्' इति। अत्र हि निरूपकत्वसम्बन्धेन दधिनिष्ठेन होमकरणत्वेनेन्द्रियं भावयेदिति बोधः। होमाश्रयिका दधिकरणिका इन्द्रियसाध्यिका भावनेति बोधः। शाब्दभावनायां तु सर्वत्र पुरुषप्रवृत्तिरूपा आर्थी भावना साध्यत्वेनान्वेति, लक्षणया अर्थवादवाक्यजन्यं तु प्राशस्त्यादिज्ञानमितिकर्तव्यतात्वेन रूपेण, लिङादिज्ञानं तु करणत्वेनेति। तथा च स्वर्गकामो यजेतेत्यादावर्थवादज्ञाप्यप्राशस्त्यज्ञानेनोपकृत्य लिङादिज्ञानेनार्थी भावनां (पुरुषप्रवृत्तिम्) भावयेदिति बोधः। प्राशस्त्यज्ञानेतिकर्तव्यताका आर्थभावनासाध्यिका लिङादिज्ञानकरणिका भावनेति बोधः। वैयाकरणानां मते तु भावना धात्वर्थ इति। तदेवं विधिनियोगभावनासंज्ञास्तु वाक्यार्था मतभेदेनाभिप्रेता अप्यत्र न परिगणिताः। यस्माद् भावनाक्रिययोः पर्यायिता प्रायशो लक्ष्यते। क्रिया वाक्यार्थ इति तु परिगणितमेवात्र। केवलं भावना प्रकृत्यर्थः (धात्वर्थः) इति वैयाकरणाः, प्रत्ययार्थः (आख्यातार्थः) इति भाट्टाः—इतीयानेव विप्रतिपत्तिविषयो विशेषः। किञ्च, भावना सकर्मिकैव भवति, भाव्यस्य फलस्य तत्र कर्मत्वात्। क्रिया तु नदीवृद्ध्यादिरूपा 'नदी एधते' इत्यादावकर्मिकाऽपि भवति, अन्यत्र सकर्मकत्वसत्त्वेऽपि। एवं भावनाक्रिययोः सकर्मकत्वस्य नैयत्यानैयत्यरूपभेदसत्त्वेऽपि साध्यत्वस्य भावनाक्रिययोरुभयोरविशिष्टत्वादभेद एव। किञ्च, धात्वर्थभूता यागादिक्रिया यथा सर्वाऽपि साध्यरूपैव। तदुक्तम्—

यावत् सिद्धमसिद्धं वा साध्यत्वेनाभिधीयते।
आश्रितक्रमरूपत्वात् सा क्रियेत्यभिधीयते॥ इति।

कृदभिहिता तु यागादिक्रिया सिद्धत्वेन प्रतीयत इति। तदुक्तम्—"कृदभिहितो भावो द्रव्यवत् प्रकाशते" इति। तथा भावनाऽपि प्रकृत्यर्थः प्रत्ययार्थो वा भवतु, साध्यरूपैव प्रतीयत इति कथमनयोः सकर्मकत्वस्य नैयत्यानैयत्याभ्यामवान्तरभेदमादाय भेदो भवेदिति। विधिनियोगौ तु लिङ्लोट्कृत्यान्तेष्वेव वाक्येष्वर्थाविति सर्ववाक्याविषयत्वादिह साधारणवाक्यार्थनिरूपणावसरे नाद्रियेते। यस्तु विज्ञानवादिनां शाक्यानां वाक्यार्थः। तथा हि—यत् स्वलक्षणमात्रविषयकं (व्यक्तिमात्रविषयकम्)

ज्ञानं तन्निर्विकल्पकम्। तच्चाभ्रान्तम्। यत्तु धर्मधर्मिसंसर्गविषयकं पदार्थ-द्वयसंसर्गविषयकं वा ज्ञानं तत्सर्वं सविकल्पकं भ्रान्तञ्च, एतच्च विकल्प-पदेनाप्याख्यायते। तथा चानादिर्यः पूर्वः पूर्वो वाक्यार्थविषयको विकल्प उत्तरोत्तरवाक्यार्थविकल्पस्य हेतुभूतस्तेनोत्तरोत्तरवाक्यार्थविकल्पे स्वकार्ये आहिता या वाक्यार्थविषया वासना, तस्या यो वाक्यश्रवणेन प्रबोधो वाक्यार्थविकल्पे वाक्यार्थाकारोल्लेखस्याभिमुख्येनानुकूल्यरूपः, तज्जन्मा कश्चन विज्ञानस्याकारविशेषो वाक्यार्थः। स चान्तरोऽपि बहीरूपतयाऽध्य-स्तः, निर्विभागोऽप्यक्रमोपजातप्रत्ययगोचरैरपि क्रमोपजातप्रत्ययगोचरैरिव, आन्तरैरपि बहीरूपतयाऽध्यस्तैः पदार्थैश्चित्रीकृत इव (समन्वित इव) विकल्पविशेषेण शाब्दबोधनाम्नोल्लिख्यते।

यद्यप्यस्मिन् मते वाक्यार्थस्य निर्विभागत्वेन तद्विषयकबोधस्य विकल्प-रूपत्वं न युज्यते, संसर्गानवगाहित्वात्; तथापि तद्विषयस्य वाक्यार्थस्य पदार्थैश्चित्रीकृतत्वेनेव लक्ष्यमाणत्वेन पदार्थसंसर्गावभासरूपत्वेन विकल्प-विशेषरूपत्वं युज्यते। स च प्रायशः प्रतिभासोदर एव मन्तव्यः, प्रतिभाया विज्ञानाकारस्य तादृशवाक्यार्थस्य चाखण्डत्वसाम्यात्। अयं तु विशेषः— प्रतिभाया गोचरो वाक्यार्थो बहिरस्ति वस्तुभूतः, विज्ञानाकारविशेषस्तु वाक्यार्थो नास्ति बहिर्वस्तुभूत इति। अत एव प्रतिभासोदरत्वमेव तस्यो-च्यते, न तु प्रतिभात्वमेवेति। तथा चैतस्य शाक्यपक्षस्य 'प्रतिभा वाक्यार्थः' इति पक्ष एव यथाकथञ्चिदन्तर्भावोऽवान्तरभेदसत्त्वेऽपीति।

किञ्च, विज्ञानवादिमते वाक्यमपि पूर्वपूर्वेणानादिना वाक्यविषयकेण विकल्पेनोत्तरोत्तरस्मिन् वाक्यविकल्पे स्वकार्ये आहिता या वाक्यविषया वासना, तस्या यः प्रबोधः स्वविषयविषयकज्ञानरूपकार्यजननाभिमुख्यरूपः, तज्जन्यो निर्विभागोऽपि, अक्रमोपजातप्रत्ययगोचरैरपि क्रमोपजातप्रत्यय-गोचरैरिव पदैश्चित्रीकृत इव (विविधजातीयैः पदैर्घटित इव) विज्ञान-परिणामतया आन्तरोऽपि बहीरूपतयाऽध्यस्यमानः, पदानां संसर्गावगाहिना विकल्पविशेषेण गोचरीक्रियमाण आकारविशेष एवेति। तथा चान्तरोऽपि बहीरूपतयाऽध्यस्तो विज्ञानाकारविशेष एव वाक्यमिति विज्ञानवादिमतं प्रायशो बुद्ध्यनुसंहृतिर्वाक्यमित्यस्य सोदरमेवेति। अत्र सादृश्यमूलको विज्ञानवाद्यभिमते विज्ञानाकारविशेषे वाक्ये बुद्ध्यनुसंहृतिसोदरत्वारोपः। तच्च सादृश्यम् आन्तरत्वेन एकबुद्धिविषयत्वेन च। भेदस्तु विज्ञानवादिनां विज्ञानाकारविशेषो वाक्यम्। बुद्ध्यनुसंहृतिर्वाक्यमिति वादिनां त्वेकस्यां बुद्धौ अनुसंहृतानि क्रमवन्ति पदान्येव वाक्यमिति। तथा च शाक्याभिमतस्य

वाक्यार्थस्य प्रतिभायाम्, तदभिमतस्य वाक्यस्य च बुद्ध्यनुसंहृतावन्तर्भावेण न तदभिमतयोस्तयोरत्रासंग्रहः। नैयायिकादीनान्तु मते पूर्वपूर्वे ये वर्णास्तद्विषया समूहालम्बनात्मिका उत्पद्यमानावस्था एका या स्मृतिः, तत्सहकृतो योऽन्त्यो वर्णो नश्यदवस्थेन श्रावणप्रत्यक्षरूपेणानुभवेन गोचरीक्रियमाणः, स एव पदं यथा; तथा पूर्वपूर्वाणि यानि पदानि तेषां यैका समूहालम्बनात्मिकोत्पद्यमानावस्था स्मृतिस्तत्सहकृतमन्त्यमेव पदं नश्यदवस्थेन श्रावणप्रत्यक्षरूपेणानुभवेन विषयीक्रियमाणं वाक्यमिति।

इदं प्रायशः पदसंघातो वाक्यमिति पक्ष एवान्तर्भवति, वर्णानां पदानां चोच्चरितप्रध्वंसिनां युगपदवस्थानाभावेन वस्तुभूतबाह्यसंघातासंभवेऽपि पूर्वोक्तरीत्या स्मृत्यनुभवरूपाभ्यां बुद्धिभ्यां युगपदुल्लेखाद् यौगपद्योपपत्त्या बौद्धसंघातसंभवात्। विभुविशेषगुणद्वयस्य च युगपदवस्थितिर्विरुद्धेत्युत्पद्यमानावस्थया स्मृत्या विनश्यदवस्थस्यानुभवस्य न विरोधः। एवं पूर्वपूर्वपदानां येऽर्थास्तद्विषयकं यदेकं स्मरणं समूहालम्बनात्मकं तत्सहकृतेनान्त्येन पदेनोत्पद्यमाना या परस्परसंसृष्टसर्वपदार्थविषया प्रतीतिः, सैव वाक्यार्थविषयकत्वाद् वाक्यार्थ इति। इदमपि मतं प्रायशः संसर्गपक्ष एवान्तर्भवति, परस्परसंसृष्टपूर्वपूर्वपदार्थसंसृष्टस्य चरमपदार्थस्यैव वाक्यार्थत्वे पदार्थानां पदशक्यत्वेन संसर्गस्यैवान्ततो वाक्यार्थत्वात्। एवञ्च न नैयायिकसम्मतवाक्यार्थासंग्रहेणात्र वाक्यार्थलक्षणानामव्याप्तिर्भवति।

एवं पूर्वोक्तेष्वष्टसु वाक्यविकल्पेष्वनवयव एकस्मिन् स्फोटात्मके वाक्ये, षट्सु च वाक्यार्थेषु प्रतिभारूपे वाक्यार्थे वैयाकरणानां सम्मते वाक्यवाक्यार्थयोस्तादात्म्यमेवाध्यस्यमानं सम्बन्धः। तदुक्तम्—"वाक्यरूपस्य वाक्यार्थे वृत्तिरन्यानपेक्षया" (वा० २।२६४) इति। अयमर्थः—वाक्यरूपस्य एकोऽनवयवः शब्द इत्येवंलक्षणलक्षितस्य, वाक्यार्थे वृत्तिः वाक्यार्थे बोधनीये प्रवृत्तिः, वाक्यार्थबोधनाय प्रवृत्तिरिति यावत्। अन्यानपेक्षया अन्यद् वाक्यस्वरूपातिरिक्तं प्रवृत्तिनिमित्तम्, तदनपेक्षया वाक्यस्वरूपमात्रप्रवृत्तिनिमित्तापेक्षयेति यावत्। तथा च वाक्यार्थे यदि वाक्यस्वरूपस्य तादात्म्याध्यासो न स्यात्तदा वाक्यस्वरूपस्य वाक्यार्थधर्मत्वाभावाद् वाक्यस्वरूपं वाक्यस्य वाक्यार्थबोधाय प्रवृत्तौ निमित्तं न स्यात्। घटपदस्य घटबोधाय प्रवृत्तौ हि घटधर्मो घटत्वं प्रवृत्तिनिमित्तं भवतीति। 'एकोऽनवयवः शब्दः' इति पक्षातिरिक्तेषु सप्तसु पक्षेषु वाच्यवाचकभावलक्षणो योग्यताख्य एव सम्बन्धो मीमांसकदृष्ट्या। वाक्ये हि वाचकत्वयोग्यता वाचकतावच्छेदकानुपूर्वीविशेषरूपधर्मविशेषरूपा। वाक्यार्थे च वाच्यत्व-

योग्यता वाच्यतावच्छेदकतत्तद्धर्मविशेषरूपा । वाक्याद्वाक्यार्थबोधदर्शनेन तयोर्वाच्यवाचकभावरूपः सम्बन्धः कल्प्यते, असम्बद्धस्य बोध्यत्वे बोधकत्वे चातिप्रसङ्गात् । वाच्यवाचकभावरूपसम्बन्धेन च तयोर्वाच्यत्वयोग्यता वाचकत्वयोग्यता च कल्प्यते । सा तयोः स्वरूपं धर्मविशेषो वा भवतु, इत्यन्यदेतदिति । शाक्यदर्शनानुसारेण तु विज्ञानवादनयेन बौद्धे पदार्थे वाक्यार्थे वा बौद्धस्य पदस्य वाक्यस्य वा कार्यकारणभाव एव सम्बन्धः, विज्ञानाकारविशेषस्य पदस्य वाक्यस्य वा विज्ञानाकारविशेषे पदार्थे वाक्यार्थे वा तत्तद्विषयके ज्ञाने च कारणत्वात् । विशेष्यविशेषणभावादिरूपः सम्बन्धो वाक्यशक्य इत्यर्थवत्सूत्रभाष्यादिविज्ञाते वैयाकरणमते संसर्गरूपे वाक्यार्थे वाक्यस्य संकेतलक्षणः ( शक्तिरूपः ) एव सम्बन्धः ।

अन्विताभिधानवादेऽपि पदात् सामान्यरूपेण प्रतीयमानोऽपि संसर्गो विशेषरूपेण वाक्यादेव प्रतीयत इति वाक्यस्य तत्र संकेत एव सम्बन्धः । अभिहितान्वयवादिनैयायिकाद्यनुसारेण च पदद्वयसमभिव्याहारविशेषरूपाकाङ्क्षाभास्योऽपि संसर्गस्तत्तत्पदानां तत्तदर्थे शक्त्यभावे न प्रतीयेतेति परम्परया संकेतलक्षणः ( शक्तिज्ञाप्यः ) एवेत्येवमत्र वाक्यवाक्यार्थसम्बन्धानां संक्षेपतः स्वरूपम् ।

अत्र प्रागुक्तेषु अध्यास-वाच्यवाचकभाव-कार्यकारणभाव-संकेतलक्षणेषु वाक्यवाक्यार्थयोः सम्बन्धेषु वाक्यपदीये वाक्यकाण्डेऽध्यास एव वाक्यवाक्यार्थयोः सम्बन्धो दर्शितो हरिणा । पदकाण्डे तु सर्व एवैते सम्बन्धाः प्रदर्शिताः । तत्र वैयाकरणानां मतेऽखण्ड एवैकोऽनवयवः शब्दः स्फोटलक्षणो वाक्यम्, प्रतिभैव वाक्यार्थः, अध्यास एव च तादात्म्यलक्षणः सम्बन्ध इति सिद्धम् । अथातः परं प्रकृतं प्रतिभास्वरूपमेव हरिदर्शितपथेन प्रदर्श्यते ।

तत्र वाक्यव्यवहारे प्रतिभाया जन्मकालः, तस्याः स्वरूपम्, तदभिव्यक्त्युपायाश्च दर्शिता हरिणा—

> विच्छेदग्रहणेऽर्थानां प्रतिभाऽन्यैव जायते ।
> वाक्यार्थ इति तामाहुः पदार्थैरुपपादिताम् ॥ इति ।

सा च पदेभ्यो विच्छिन्नेभ्यो विच्छिन्नपदार्थबुद्ध्यनन्तरं पदार्थैरभिव्यञ्जिता वाक्यार्थत्वेन वैयाकरणैरुक्ता प्रतिभा उपजायमानाप्यन्यान् प्रति कथञ्चिदपीदं तदित्येवमनाख्येया । अन्यान् प्रत्यस्या आख्यातुमशक्यत्वेऽप्यसत्त्वन्तु नाभ्युपेयते । यतः साऽनाख्येयाऽपि प्रत्यात्मवृत्तिः स्वानुभव-

सिद्धेति नापह्नोतुं शक्यते। किञ्च, सा प्रतिभा स्वसंवेदनसमये स्वप्रतिपत्त्राऽपि नियतेन रूपेण न निरूपयितुं शक्यते, किमुतान्यैरिति सर्वस्य स्वसंवेदनसिद्धापि सा परान् प्रत्यनाख्येयैव। इदं तदिति विशेषधर्मपुरस्कारेण प्रतिभायाः स्वरूपतोऽनिर्देश्यत्वेऽपि सा फलमुखेनाश्रयमुखेनाभिव्यञ्जकमुखेन च निरूपयितुं शक्यत एव। तद्यथा—वह्निनिष्ठा शक्तिरतीन्द्रियाऽनिर्देश्याऽपि फलमुखेनाश्रयमुखेन च निर्दिश्यते। वह्नौ दाहानुकूला शक्तिरिति। अभिव्यञ्जकमुखेन च निर्दिश्यते। तद्यथा—प्रतिबन्धकमण्यादिसमवधानेऽपि य उत्तेजकेन मण्यादिनाऽभिव्यज्यते स वह्नेर्धर्मविशेषः शक्तिरिति। एवं प्रतिभायाः फलमुखेन निर्देशो यथा—या विच्छिद्य प्रतीतानां पदार्थानां परस्परमुपश्लेषं कृत्वेव प्रबोधयति सा प्रतिभेति पदार्थसंसर्गावभासरूपेण फलेन सा स्वरूपतो निर्दिश्यते। किञ्च, या सर्वस्मिन् वाक्ये सर्ववाक्यार्थरूपत्वं प्राप्तेव स्थिता सती पदोपस्थितपदार्थजन्याभिव्यक्तिविषयत्वेन वर्तते, सा प्रतिभेत्येवं तस्याः स्वरूपनिर्देश आश्रयमुखेनाभिव्यञ्जकमुखेन च। तथा हि—अत्र वाक्यं प्रतिभाया जनकत्वेनाश्रयः, पदोपस्थापिताः पदार्थाश्च तस्या अभिव्यञ्जका इति। अयं तु निष्कर्षः—पदैः पृथक् पृथगुपस्थितानामसंसृष्टानां पदार्थानां प्रतिभा मेलनं करोतीति कार्यनिर्देशमुखेन प्रतिभाया निर्देशः स्वरूपतोऽनिर्देश्याया अपि। सर्ववाक्यार्थरूपैव चासौ सर्वस्मिन् वाक्य इत्याधारनिर्देशमुखेन तस्या निर्देशः। पदोपस्थापितपदार्थानां चासावभिव्यङ्ग्यत्वेन विषय इत्यभिव्यञ्जकनिर्देशमुखेन तस्या निर्देशः। अभिव्यञ्जकत्वेन प्रतिभानिष्ठा एव पदार्थाः साफल्यं भजन्ते, पदार्थानां प्रतिभाऽनभिव्यञ्जकत्वे हि वाक्यवाक्यार्थावगमयोर्मध्ये पदतदर्थावगमौ वृथैव स्यातामिति। तदुक्तं हरिणा—

उपश्लेषमिवार्थानां सा करोत्यविचारिता।
सार्वरूप्यमिवापन्ना विषयत्वेन वर्तते॥ इति।

(वा. २।१४७)

यद्यमिदं प्रतिभास्वरूपं तत्कार्यञ्च मनसिकृत्याचार्यमण्डनो विधिविवेक एवमाह—"विच्छिन्नप्रतीतीनामपि च पदार्थानां किं कथमनुसन्धीयेतेति विचारविकल्पाप्रत्यवमृष्टपूर्वशक्तिः समाविष्टपूर्वशक्तिप्रतिभासेवोदीयमाना प्रतिभोपश्लेषं विदधाति, तादर्थ्यादनुपश्लेषे तदभावात्" इति। अत्र वाचस्पतिमिश्रा एवं विवृण्वते—विच्छिन्नप्रतिपत्तीनां तावद् ह्रदतोयादीनां सहसोपश्लेषं विदधाति" इति। अयमर्थः—सन्तापतप्ततनवो हि शीतह्रददर्शनमात्रादप्सु मिमङ्क्षवः प्रवर्तन्ते नान्तरा विचारयन्ति। दृश्यमानह्रदगता

आपस्तापमपनेतुं समर्थाः, सति शिशिरभावे तोयत्वात्, यत्तोयं शिशिरं तत्सर्वं तापापनोदनसमर्थं यथा गङ्गातोयम्, वयं च तप्तास्तदिह तत्प्रशमनाय निमज्जाम इति। न चैषां परस्परोपश्लेषमन्तरेण कर्तव्यता (बुद्धिः)। न चास्यामसत्यां स्वतन्त्रचेतनप्रवृत्तिः। नचोपश्लेषे समुदाचरद्वृत्ति किञ्चित् प्रमाणमस्ति। तस्मादसंविदितरूपा शब्दभावनैवेदमित्थमनेन कर्तव्यमिति प्रतिभाहेतुरास्थेयः। न चासौ व्यतिरिक्तविषयेत्याह—सार्वरूप्यमिवापन्नेति। तेषां सार्वरूप्यमापन्नेव, न त्वापन्ना, तेषां तदारोहिणां वस्तुसत्ताया विचारासहत्वात्। तस्मात् प्रतिभैव ताद्रूप्यमापन्ना विषयत्वेन वर्तते" इति। ताञ्च प्रतिभां न किञ्चित् प्राणिमात्रं व्यवहारेऽतिवर्तते। यतः सर्वोऽपि प्राणिमात्रस्येतिकर्तव्यतारूपो व्यवहारः प्रतिभामूलक एव। सा च प्रतिभा इदानीन्तनी प्राक्तनी च। तत्रेदानीन्तनी मनुष्याणां सङ्केतग्रहसहकृतेन शब्देन कदाचिद् व्यवहारकाले जन्यते, बहुशास्त्रश्रवणाभ्यासेन वा साक्षाज्जनिता। प्राक्तनी बालानां तिरश्चाञ्च गजवाजिप्रभृतीनाम्। प्राक्तनभावनासमुपजातप्रतिभावशेनैव ह्यशिक्षिता अपि बालाः स्ववयोऽनुरूपं वयस्यैः सह व्यवहरन्ति क्रीडन्तः। गजवाजिप्रभृतयश्च स्वजात्युचितं चेष्टन्त इति। द्विविधाऽपि सा कवित्वहेतुः कवीनाम्। तदुक्तं काव्यप्रकाशे—

> शक्तिर्निपुणता लोककाव्यशास्त्राद्यवेक्षणात्।
> काव्यज्ञशिक्षयाभ्यास इति हेतुस्तदुद्भवे॥ इति।

अत्र शक्तिर्द्विविधा प्रतिभैवेति व्याख्यातं प्रदीपे।

> साक्षाच्छब्देन जनिता भावनानुगमेन वा।
> इतिकर्तव्यता या तां न कश्चिदतिवर्तते॥
> (वा० २।१४८)

इति विधिविवेके पाठः, तट्टीकान्यायकणिकासम्मतश्च। अत्रेतिकर्तव्यतारूपस्य व्यवहारस्य हेतुत्वेन प्रतिभाया इतिकर्तव्यतात्वेन व्यपदेशः, कार्यकारणयोरभेदोपचारात्। न त्वितिकर्तव्यतैव प्रतिभा। तदुक्तं श्रीपुण्यराजेन—"तन्मूल एवेतिकर्तव्यतारूपः सर्वस्य व्यवहारः" इति। यद्यपि विधिविवेके—"कः पुनरयमर्थः। कर्तव्यमिति। न कश्चित् प्रतिभा" इति मण्डनोक्तेः प्रतिभाया इतिकर्तव्यतायाश्चाभेदोऽवगम्यते, तथापि तत्रैव—"प्रतिभानेत्रो हि लोक इतिकर्तव्यतासु समीहते। किं पुनरस्या निमित्तम्? शब्दः तत्र व्युत्पन्नानां साक्षाद् भावनामुखेन चाप्रसिद्धशब्दनिबन्धनव्यवहाराणां बालादीनाम्" इति प्रतिभाया इतिकर्तव्यताहेतुत्वं स्पष्टमेवोक्तम्। किञ्च,

सर्वो लोकः स्वां स्वां प्रतिभां प्रमाणत्वेन समनुगच्छति। तदुक्तं कविभिः—"सतां हि संदेहपदेषु वस्तुषु प्रमाणमन्तःकरणप्रवृत्तयः" इति। तिरश्चामपि पशुपक्षिणां जातमात्राणां प्रतिभाबलात् स्वस्वजात्युचिताः सर्वे समारम्भाः प्रतता जायन्त इति न नरतिर्यक्प्रसिद्धप्रतिभाऽपलापेनात्मा वञ्चनीयः। किञ्च, यथा द्रव्यविशेषाणां मधूकयवगुडादीनां परिपाकव्यतिरिक्तयत्नान्तर-निरपेक्षा मदादिशक्तयो दृष्टाः, तथा प्रतिभावतां प्रतिप्राणि प्रतिजाति प्रतिनियतप्राक्तनसंस्कारजन्याः प्रतिभा अपि अयत्नजाः स्फुटमुपलभ्यन्त एव स्वतः संवेदनाः। किञ्च, जन्मान्तराभ्याससमुपजातभावनाहेतुकाऽपीयं प्रतिभा। तद्यथा—मधुमासे पुंस्कोकिलः स्वभावादेव पञ्चमस्वरविरावी, न तु तत्र शिक्षारूपो यत्नोऽपेक्ष्यते, लूताजन्तूनां लालातन्तुभिः कुलायरचना च प्रतिभामाहात्म्यादेव दृश्यत इति। किञ्च, आहारप्रीत्यपद्वेषप्लवनादि-क्रियासु प्रतिभां विना मृगपक्षिणां कः प्रयोक्ता। तथा हि—मूषको मार्जारस्या-हार इति मार्जारः केन शिक्षितः ? शुनः स्वामिनि प्रीतिः केन शिक्षिता ? मूषकमार्जारयोः, गोव्याघ्रयोः, अहिनकुलयोः, अश्वमहिषयोश्च परस्पर-मपद्वेषः केन प्रयुक्तः ? गोमहिष्यादयो जले प्लवनक्रियायां केन शिक्षिताः ? तत्राहारप्रीत्यपद्वेषा मृगपक्षिणामन्वयप्रसिद्धाः। अन्वयोऽत्र कुलम्। प्लव-नादिक्रियास्तु जातिप्रसिद्धाः। तदेवं प्रतिप्राण्याहारादिक्रिया नियताऽनादि-प्रतिभावशादेव लोके प्रसिद्धेति सिद्धम्। अस्याश्च प्रतिभाया आसत्तिविप्र-कर्षाभ्यां शब्द एव मूलम्। तथा हि—भावनासहकारेण प्रतिभाया हेतुभूत आगमो द्विविधः—आसन्नो विप्रकृष्टश्च। तत्रासन्न इह जन्मनि, विप्रकृष्टो जन्मान्तर इत्येवमासत्तिविप्रकर्षाभ्यां शब्द एव प्रतिभायामसाधारणो हेतुः।

किञ्चेयं प्रतिभा निमित्तभेदेन षड्विधा। तथा हि—काचित् स्वभाव-हेतुका प्रतिभा, यथा कपेः शाखाप्लवनादिषु। यथा वा परस्याः प्रकृतेरव्य-क्तरूपायाः प्रथमं सत्तामात्रस्वरूपं महान्तमात्मानं प्रत्यानुगुण्यम्। स्वभावत एव हि परस्याः प्रकृतेर्महदाकारेण परिणामानुगुण्यम्। सैव प्रतिभा। सुषु-प्तावस्थस्येव पुरुषस्य प्रबोधानुगुण्यं प्रतिभारूपम्। निद्राया अपि तमःपरि-णामरूपायाः परमानन्दरूपफलसत्तामात्रं प्रत्यानुगुण्यं प्रतिभैव। तथा चात्र स्वभावः प्रतिभा इत्यायातम्। चरणनिमित्ता काचित् प्रतिभा। चरणमत्र सदाचारः, शास्त्रविहितं तपःस्वाध्यायादिकं वा। तद्यथा—चरणेनैवावधूत-भूतभविष्यद्वर्तमानविषयकप्रकाशविशेषाणां वसिष्ठादीनां प्रतिभा। अभ्यास-निमित्ता काचित् प्रतिभा। तद्यथा—कूपतटाकादिखनकानां कूपतटाकादि-खननाभ्यासनिमित्तिका प्रतिभा। अभ्यासेनैव हि ते क्षितौ तिरोहिता जल-

नाडीः परिचिन्वन्ति—अत्र कूपादिखाते जलं भविष्यति, अत्र नेति। काचित् प्रतिभा योगनिमित्ता। तद्यथा—योगिनामव्यभिचारेण पराभिप्राय-ज्ञानादिषु। तथा काचिददृष्टनिमित्ता, यथा—रक्षःपितृपिशाचानां परकाय-प्रवेशान्तर्धानादिषु प्रतिभा। काचिद् विशिष्टैस्तपोयोगादिसिद्धिसम्पन्नै-स्तत्कालमेव सन्निधापिता प्रतिभा। यथा—भारतयुद्धावसरे बहुदेशव्यापि-युद्धवृत्तसम्यग्दर्शनाय सञ्जयादीनां कृष्णद्वैपायनादिभिरुपहिता प्रतिभा।

एवं प्रतिभा बहुविधाऽपि सर्वैव आगमिकवाक्याभिव्यङ्ग्या, तन्मूलक-लौकिकवाक्यप्रतिपाद्या च। किञ्च, एवं प्रलये सर्वव्याकरणात्ययेऽपि सर्वासां भूतभौतिकशक्तीनां महाशक्तौ मायाप्रकृत्यादिपदव्यपदेश्यायां प्रत्य-स्तमये प्रत्यस्तमितर्तनिविष्टशब्दशक्तिरूपशब्दबीजकारणेऽन्तर्भूता तत्र निलीय तेन रूपेण स्थिता सर्गादौ शब्दशक्तिः स्वकार्यपदवाक्याद्यनुकूलप्रवृत्तिकाले प्रथमं सूक्ष्मेण रूपेण पश्यन्तीमध्यमानादादिरूपेण विवर्तरूपतामनुभूय क्रमेण वर्णपदवाक्यरूपाभिर्नियताभिरवस्थाभिर्विस्तारमश्नुवाना प्राप्तबीजपरि-पाकाकारा व्यवहारे पुनः पुनर्व्यक्तरूपेण प्रत्यवभासते। तदिदं सर्वं वाक्य-पदीये द्वितीयकाण्डे "विच्छेदग्रहणेऽर्थानां प्रतिभाऽन्यैव जायते" इत्यारभ्य "स्वभावचरणाभ्यासयोगादृष्टोपपादिताम्" इत्यन्ताया दशश्लोक्याः पर्या-लोचनमूलकम्। इदं त्ववधेयम्—येऽमी वाक्यवाक्यार्थविषया विकल्पाः प्राक्प्रदर्शितास्ते पुरुषाणामनेकशास्त्रभावनासमाश्रयाः, न तु वस्तुतत्त्वानु-गताः। तस्माद् वाक्यं वाक्यार्थश्चैकमेव युक्तम्। तदुक्तं हरिणा—

अविकल्पेऽपि वाक्यार्थे विकल्पा भावनाश्रयाः।
अत्राधिकरणे वादाः पूर्वेषां बहुधा गताः॥ इति।

(वा० २।११८)

तस्माद् वाक्यार्थः प्रतिभारूपतयैक एव, सर्वोऽपि शब्दः समनन्तर-कार्यावबोधरूपायाः प्रतिभाया एव हेतुः। अत एव सर्वेषां शब्दानां कार्यपर-त्वमेवेति मीमांसका आस्थिषत। "आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्था-नाम्" इति, "विधिना त्वेकवाक्यत्वात् स्तुत्यर्थेन विधीनां स्युः" इति च सूत्रद्वयं शब्दानां कार्यपरत्वे मूलम्। किञ्च, सर्वोऽपि शब्दः पदरूपो वाक्यरूपो वा, ध्वन्यात्मको वर्णात्मको वा बालानां तिरश्चामपि चाविदित-संकेतानां किमुत विदितसंकेतानां बुद्धिमतां यथार्थप्रतिपादनद्वारा व्यवहारे प्रयुज्यमानतत्तच्छब्दतदर्थग्रहाभ्यासजनितसंस्कारवशादभीष्टे प्रतिभाहेतुः। ध्वन्यात्मकोऽपि शब्दः प्रतिभाहेतुः। यथा—करतालिकाशब्दात् काकाः पलायन्ते। घण्टाशब्दाच्च छात्रा अध्यापकाश्चाध्ययनेऽध्यापने च प्रवर्तन्ते।

किञ्च, जडानामपि प्राणिनां साण्डमहिषादीनामभिमुखीकरणाय नियतपदः शब्द उदीर्यते। तेन प्रतिनियतजात्यनुसारेणैव नियतैव काचित् प्रतिभा प्रबोध्यत इति प्रतिभामूलक एव सर्वो यः कश्चित्तेषां साण्डमहिषादीनां प्रवृत्त्यादिरूपो व्यवहारः। मया दर्शितं चैतद् ब्रह्मकाण्डेऽम्बाकर्त्र्याम्—"साण्डमहिषादीनां सम्बोधनाय प्रतिनियता एव शब्दाः प्रयुज्यन्ते, तैरेव च शब्दैस्तेषां तेषामेव प्रतिभापुरःसरः प्रवृत्त्यादिरूपो व्यवहारः" इति। यत इयं प्रतिभा शब्दनिमित्ता सर्वप्राणिनां संवेद्या सर्वेषां प्राणिनां सकलव्यवहारमूलभूता च, अतोऽनपह्नवनीया। तदपह्नवे च स्वात्मैव विप्रलभ्यते। तस्मात् प्रतिभाऽभ्युपगम आवश्यकः। तदुक्तं हरिणा—

अभ्यासात् प्रतिभाहेतुः शब्दः सर्वोऽपरैः स्मृतः।
बालानाञ्च तिरश्चाञ्च यथार्थप्रतिपादने ॥ इति।

(वा० २।११९)

इदञ्च पद्यं तत्त्वसंग्रहे तावदेवं व्याचष्टे कमलशीलः—"शब्दस्य क्वचिद् विषये पुनः पुनः प्रवृत्तिदर्शनमभ्यासः। नियतसाधनावच्छिन्नक्रियाप्रतिपत्त्यनुकूला प्रज्ञा प्रतिभा। सा प्रयोगदर्शनावृत्तिसहितेन शब्देन जन्यते। प्रतिवाक्यं प्रतिपुरुषं च सा भिद्यते। स तु तस्या अपरिमाणो भेदः शब्दव्यवहारस्यानन्त्यान्न शक्यतेऽभिधातुमित्यत आह—बालानां च तिरश्चां चेत्यादि। यथैव ह्यङ्कुशाभिघातादयो हस्त्यादीनामर्थप्रतिपत्तौ क्रियमाणायां प्रतिभाहेतवो भवन्ति, तथा सर्वेऽर्थवत्सम्मता वृक्षादयः शब्दा यथाभ्यासं प्रतिभामात्रोपसंहारहेतवो भवन्ति; न त्वर्थं साक्षात् प्रतिपादयन्ति। अन्यथा हि कथं परस्परपराहताः प्रवचनभेदा उत्पाद्यकथाप्रबन्धाश्च स्वविकल्पोपरचितपदार्थभेदद्योतकाः स्युः" इति।

इदमेव पद्यं विधिविवेके न्यायकणिकायां वाचस्पतिमिश्रास्त्वेवं व्याकुर्वन्ति—"अभ्यासजनितां भावनामभ्यासशब्देनाह-कार्ये कारणोपचारात्। नाभिधानाधीनोऽर्थबोधः शब्दात्, अपि त्वभ्यासाधीनः। यथा हि खलु कशाङ्कुशाभिघातादयोऽनभिधायका अपि वाजिगजादीनामभ्यासात् स्वतः प्रवृत्तिनिवृत्तिहेतुमर्थप्रतिभासां प्रतिभां भावयन्तः प्रवर्तका निवर्तकाश्च, तथा संक्षेपतः सर्वः शब्दो व्युत्पन्नानामव्युत्पन्नानां चेह जन्मनीत्यर्थः। अयञ्च प्राग्भवीयोऽभ्यासोऽवश्याभ्युपेय इत्यत्र दृष्टान्तमाह—बालानाञ्च तिरश्चाञ्च यथार्थप्रतिपादन इति। अर्थाभासप्रतिभोत्पादनेन चार्थप्रतिपादनमुक्तम्" इति।

तदेवं बालानां तिरश्चाञ्च प्रतिभाहेतुरभ्यासः प्राग्भवीयः, शास्त्राभ्यासशिक्षादिजन्मा तु युवस्थविरादीनाम्। अयं चाभ्यासः संकेतस्वरूपः समय इष्यते कैश्चित्। स चाभ्यासः—अस्मादनन्तरमिदं कार्यमित्युपदर्शनरूपा (प्रबोधरूपा) या प्रतिभा तद्धेतुस्वभावः। यथा कशाभिघातमात्रसमनन्तरमेव वाजिनोऽतिधावन्ति, अङ्कुशाभिघातेन च गजाः। एवमन्येऽपि प्राणिनो यथास्वमनादिवासनाऽभ्यासवशेन प्रतिभातः स्वजात्यादिसमुचितं व्यवहारं कुर्वन्तो लोकयात्रां निर्वाहयन्ति। एवञ्चाखण्डमेव वाक्यम्, प्रागुक्तरूपा प्रतिभैव चाखण्डा वाक्यार्थं इति मतमेव समाश्रयणीयम्। पदपदार्थापोद्धारकल्पनया तु प्रतिनिध्यादिकल्पनं प्रासङ्गिकादिन्यायनिर्वाहश्च भविष्यतीति सर्वा व्यवस्था सूपपादा। तदेतत्सर्वं मनसिकृत्योक्तं हरिणा—

> अनागमश्च सोऽभ्यासः समयः कैश्चिदिष्यते।
> अनन्तरमिदं कार्यमस्मादित्युपदर्शनम्॥ इति।
>
> (वा० २।१२०)

श्रीवाचस्पतिमिश्रा विधिविवेके न्यायकणिकायामेतत्पद्यस्य पूर्वार्धमेवं व्याचख्युः—"अनागमश्च सोऽभ्यास इति। आगम्यते प्राप्यते कार्यमस्मादिति कारणमागमः। अविद्यमान आगमो यस्मिन्नसावनागमोऽनादिरित्यर्थः। समयः कैश्चिदिष्यत इत्यादि मतमाह—नैयायिकादयो हि ईश्वरनिर्माणं शब्दार्थसम्बन्धं समय इत्याचक्षते। स चाभ्यासस्य भावनाया विषय इत्यभ्यास उक्तः" इति।

तदेवं बहुविधविकल्पविमृष्टः प्रतिभापदार्थ एवं बुद्धौ स्फुरति। तत्रास्मादनन्तरमिदं कार्यमित्युपदर्शनम् (प्रतिभानम्) प्रतिभा। तत्र अस्मादनन्तरमिति निमित्तनिर्देशः। इदं कार्यमिति तु स्वरूपनिर्देशः। अस्याश्च निमित्तानामानन्त्येऽपि संग्रहेण षडेव निमित्तानि भवन्ति। स्वभावचरणाभ्यासयोगादृष्टानि पञ्च, षष्ठं तु विशिष्टपुरुषैर्विशिष्टशक्तेरुपधानमिति। एतेषामुदाहरणानि तु प्राक् प्रत्तानीति नेह प्रतन्यते। तत्र स्वभावादिभिर्निमित्तैः पदार्था उपस्थाप्यन्ते, उपस्थितिश्चात्र ज्ञानमात्रं स्मृतिः प्रत्यक्षमनुमित्यादिकं वा। तदनन्तरं विशिष्टार्थविषयकं कार्यताज्ञानं प्रतिभारूपं जायते, विभागेन पदार्थानां कथञ्चिदप्युपस्थितौ सत्यामनन्तरं यद् विशिष्टार्थविषयकं कार्यताज्ञानं सा प्रतिभेत्यभ्युपगमात्। यतश्च विशिष्टार्थविषयकं कार्यताज्ञानं प्रतिभा, अत एवोक्तं हरिणा—"उपश्लेषमिवार्थानां

सा करोत्यविचारिता" इति। तत्तन्निमित्तैरुपस्थापिताश्च पदार्थाः प्रतिभागोचरीभूता एव प्रवृत्तिनिवृत्तिरूपव्यवहारजननेन साफल्यं लभन्ते, नान्यथा। एतदप्युक्तं हरिणा—"सार्वरूप्यमिवापन्ना विषयत्वेन वर्तते" इति।

यतश्च विशिष्टार्थविषयकं कार्यताज्ञानं प्रतिभा, तद्गोचर एव च वाक्यार्थः, अत एव गुरवः कार्यान्वित एव पदानां शक्तिमभ्युपयन्ति। प्रतिभा वाक्यार्थ इति तु वाक्यस्य प्रयोजनमित्यभिप्रेत्य, प्रतिभाविषयस्य वाक्यार्थत्वमभिप्रेत्य वा। एवञ्च कार्यान्विते पदानां शक्तिरिति गुरुमतं न युज्यते, विशिष्टार्थस्य कार्यान्वितस्य प्रतिभाविषयत्वात्; प्रतिभायाश्च शब्दशक्तेः साक्षादनिमित्तत्वात्। कार्ये लिङादीनां शक्तिरिति तु युज्यते। यद्यपि वसन्ते पुंस्कोकिलस्य पञ्चमारावविषया प्रतिभा समुत्पद्यत इति कालोऽपि प्रतिभानिमित्तं सम्भाव्यते, देशविशेषदर्शनेन च क्षितितिरोहितजलाकरादिविषया प्रतिभा जायत इति देशोऽपि प्रतिभानिमित्तं स्यात्; तथापि प्रतिभानिमित्ताभ्यासरूपभावनासमुद्बोध एव देशकालयोर्निमित्तत्वमिति प्रतिभानिमित्तानां षाड्विध्यमेव हरिणा प्रदर्शितम्।

इदं चाप्यवधातव्यम्—प्रागुक्तेषु षड्विधेषु वाक्यार्थेषु प्रतिभैव वाक्यार्थ इति, न तु प्रतिभा वाक्यार्थ एवेति; वाक्यं विनापि स्वभावादितः प्रतिभोत्पत्तिदर्शनात्। सा च प्रागुक्ता कार्यताज्ञानरूपा प्रतिभा सर्वेषां प्राणिनां प्रवृत्तिनिवृत्तिरूपाणां सर्वेषां व्यवहाराणां जननी। तदुक्तं हरिणा—

प्रमाणत्वेन तां लोकः सर्वः समनुपश्यति।
समारम्भाः प्रतीयन्ते तिरश्चामपि तद्वशात्॥ इति।

इयञ्च कार्यताज्ञानरूपा प्रतिभा यथा कार्यपरवाक्यप्रयोगे जायते, तथा सिद्धार्थपरवाक्यप्रयोगेऽपि। इयांस्तु विशेषः—कार्यपरवाक्यप्रयोगस्थले प्रतिभा वाक्यार्थ इत्यव्यधानेन प्रतीयते, तत्र कार्यार्थकलिङादिप्रत्ययप्रयोगात्। सिद्धार्थपरवाक्यप्रयोगे तु कार्यताबोधकपदाध्याहारेण प्रतिभाया वाक्यार्थत्वमिति। तद्यथा उपनिषत्सु सच्चिदानन्दाद्वयं ब्रह्मेति बोधे जाते यत एवंभूतं ब्रह्मातः कर्मतत्फलतत्साधनानामसत्त्वेन कर्मसु प्रवृत्तेर्वैफल्येन तस्या भेदज्ञानसाध्यत्वेन तादृशब्रह्मावबोधे प्रतिबन्धकत्वेन च सर्वव्यापारोपरमविषयकः सङ्कल्पः कार्यं इति प्रतिभा पदान्यध्याहृत्य सिद्धार्थावबोधं मूलीकृत्य वा जायते। सा च वाक्यार्थज्ञानमूलकत्वात्तत्र वाक्यार्थः, यत्परः शब्दः स शब्दार्थ इत्यभियुक्तानामभ्युपगमात्। एष संकल्प एव च विविदिषा-

संन्यासपदेन सद्भिः शास्त्रेषु व्यवह्रियते, सर्वकर्मसंन्यासहेतुत्वात्। विद्वत्संन्यासस्तु आत्मतत्त्वसाक्षात्कारानन्तरं स्वतः सिद्धः सर्वकर्मनिवृत्तिरूप इति न स शास्त्रतात्पर्यगोचरः, अप्राप्ते हि शास्त्रमर्थवदित्यभ्युपगमात्। वेदान्तानां न कार्यपरत्वमिति श्रीशङ्करभगवत्पादानां निर्बन्धस्तु तादृशसंकल्पातिरिक्तकर्मपरत्वनिषेधपरोऽवगन्तव्यः, यागादिकर्मपरत्ववादिमीमांसकमतप्रत्याख्यानपरत्वात्। अत एव ज्ञानकर्मसमुच्चयवादप्रत्याख्यानमपि संगच्छत इति। लोकेऽपि 'चैत्र पुत्रस्ते जातः, कन्या ते गर्भिणी' इत्यादौ सिद्धार्थपरेऽपि वाक्ये तादृशकार्यताज्ञानरूपा प्रतिभाऽस्त्येव, तत्रापि ह्यस्मादनन्तरमिदं कार्यमिति ज्ञानस्यानुभवसिद्धत्वात्। कथमन्यथा पुत्रदर्शनादौ पुत्रसंस्कारादिकर्मणि कन्यासंरक्षणादिकर्मणि तद्भर्त्सनताडनादिकर्मणि च प्रवृत्तिः। तस्मात् सर्वत्रापि प्रतिभैव वाक्यार्थः, प्रवृत्तिनिवृत्तिरूपव्यवहारसिद्ध्यर्थमेव हि वाक्यप्रयोग इत्यभ्युपगमात्; कार्यताज्ञानञ्च विना प्रवृत्तिनिवृत्त्योरसिद्धेः। निषेधस्थले च सर्वत्रापि प्रवृत्त्यौदासीन्यरूपनिवृत्तिविषयकसंकल्पस्यैव कार्यत्वम्, "नेक्षेतोद्यन्तमादित्यम्" इत्यादौ यथेत्यलं पल्लवितेन।

इदं गुरुगिरीन्द्रजाप्रणवमन्दरान्दोलनाद्
मधु श्रुतिरसायनं मम मुखाम्बुधेरुद्गतम्।
प्रसह्य रसयन्ति ये बुधवरा मुहुः प्रातिभं
धुरं दधति बैबुधीं भुवि भवप्रसादेन ते॥

❀ इति शम् ❀



( १५ )

# जगत्सर्गप्रयोजनम्

भोगापवर्गसिद्धयर्थं जगत्सर्गं वितन्वतीम् ।
विद्याऽविद्याविभागेन परमां प्रकृतिं नुमः ।।

अथातो जगत्सर्गप्रयोजनचिन्ता । सर्वा हि प्रेक्षावत्कर्तृका सृष्टिर्लोके फलकामिनो दृष्टा । एष च जगत्सर्गो भूतग्रामसमुदायहेतुकः स्वाभाविकः, प्रकृतिकर्तृकः, चेतनावत्कर्तृको वा भवेत्; सर्वथाऽपि स्रष्टुः फलकामित्वं न संभवति, अचेतने फलकामनाया असंभवात् । चेतनेऽपि मनसाऽप्यचिन्त्यरचनारूपस्य जगतोऽस्मद्विलक्षणे सर्वज्ञे सर्वशक्तौ सर्वेश्वरे आप्तकामे स्रष्टरि तस्या असंभव एवेति । तत्प्रसिद्धया उपपादितं कविभिः—

विदितं वो यथा स्वार्था न मे काश्चित्प्रवृत्तयः ।
ननु मूर्तिभिरष्टाभिरित्थंभूतोऽस्मि सूचितः ।। इति ।

तत्र जगत्सर्गे दर्शनभेदेन बहुधा विप्रतिपत्तयो वादिनां दुरधिगमत्वादस्यार्थस्योपलभ्यन्ते । ता अनुसृत्यैव यथाक्रमं सर्गफलं प्रविचिन्त्यते । तत्रापि दर्शनानामारोहक्रमेणैव तदारभ्यते । तत्र यद्यपि सर्वेष्वपि दर्शनेषु स्रष्टरि चेतनेऽचेतने वा सर्गफलं न संभवति, तथापि स्रष्टव्ये तु संभवत्येवेति धिया तद्विविच्यते ।

## चार्वाकमतम्

तत्र प्रथमं प्रत्यक्षमात्रप्रामाण्याभ्युपगन्ता देहात्मवादी चार्वाकः समुपतिष्ठते । नास्ति कश्चनास्मदादिविलक्षणो जगत्स्रष्टा, प्रत्यक्षानुपलम्भात्; प्रत्यक्षातिरिक्तस्य च प्रामाण्यानुपगमात् प्रत्यक्षातिरिक्तप्रमाणखण्डने च प्रासङ्गिके गौरवाद् बिभ्यता उदास्यते । तत्र पृथिव्यादीनि चत्वारि भूतानि तत्त्वानि, तेभ्य एव देहाकारपरिणतेभ्यः किण्वादिभ्यो मदशक्तिवत् चैतन्यमुपजायते; तेषु विनष्टेषु सत्सु स्वयं विनश्यति । तच्चैतन्यविशिष्टो देह एवात्मा, देहातिरिक्ते आत्मनि प्रमाणाभावात् । अङ्गनालिङ्गनादिजन्यं सुखमेव भोगरूपं पुरुषार्थः । अनुमानानङ्गीकारे तत्साध्यादृष्टेश्वरस्वर्गादिकं

नास्ति। जगत्सर्गस्तु चतुर्भ्यो भूतेभ्यः स्वभावादिति। तदेतत्सर्वं समग्राहि सर्वदर्शनसंग्रहे समुद्धृतपद्यैः —

अत्र चत्वारि भूतानि भूमिवार्य्यनलानिलाः।
चतुर्भ्यः खलु भूतेभ्यश्चैतन्यमुपजायते॥
किण्वादिभ्यः समेतेभ्यो द्रव्येभ्यो मदशक्तिवत्।
अहं स्थूलः कृशोऽस्मीति सामानाधिकरण्यतः॥
देहः स्थौल्यादियोगाच्च स एवात्मा न चापरः।
अग्निरुष्णो जलं शीतं शीतस्पर्शस्तथाऽनिलः।
केनेदं चित्रितं तस्मात् स्वभावात्तद्व्यवस्थितिः॥ इति।

तथा च चार्वाकमते जगत्सर्गस्य स्वाभाविकत्वेऽपि स्रष्टव्येषु जन्तुषु भोगरूपं फलं सर्गायत्तमेवेति निष्कर्षः।

## बौद्धमतम्

बौद्धास्तु चत्वारः—वैभाषिकः, सौत्रान्तिकः, विज्ञानवादी योगाचारः, शून्यवादी माध्यमिकश्च। एष च संज्ञाभेदो भगवतस्तथागतस्य देशनाभेदेन। तथा हि बाह्येषु गन्धादिषु, आन्तरेषु रूपादिस्कन्धेषु च सत्स्वपि तत्रानास्थामुत्पादयितुं सर्वं शून्यमिति प्राथमिकात् विनेयानचीकथद् भगवान्, अपराँस्तु विज्ञानमात्रग्रहाविष्टान् विज्ञानमेवैकं सदिति, अन्याँस्तूभयं सत्यमित्यास्थितान् विज्ञेयमनुमेयमिति[1] विरुद्धां भाषाम्। सूत्रस्यान्तं पृच्छतां भवन्तश्च सूत्रस्यान्तं पृष्टवन्तः[2] सौत्रान्तिका भवन्त्विति च। तदुक्तं बोधिचित्तविवरणे—

देशना लोकनाथानां सत्त्वाशयवशानुगाः।
भिद्यन्ते बहुधा लोके उपायैर्बहुभिः किल॥

---

१. विरुद्धां भाषां वर्णयन्तो वैभाषिकाख्याताः अभिधर्मविभाषाया अभ्युपगमाद् वा। तदुक्तं स्फुटार्थायां विवृतौ [ १।२ ] कारिकाव्याख्याने—"विभाषया दीव्यन्ति चरन्ति वा वैभाषिकाः, विभाषां वा विदन्ति वैभाषिकाः" इति।

२. सूत्रस्यान्तोऽवसानमर्थनिर्णयो निर्णीतार्थस्तमधिकृत्य श्रद्धया प्रवर्तमानाः सौत्रान्तिका इति। तदुक्तं स्फुटार्थायां विवृतौ [ १।२ ] कारिकाया व्याख्यावसरे—"कः सौत्रान्तिकार्थः? ये सूत्रप्रमाणका न तु शास्त्रप्रमाणकास्ते सौत्रान्तिकाः" इति।

गम्भीरोत्तानभेदेन क्वचिच्चोभयलक्षणा।
भिन्ना हि देशनाऽभिन्ना शून्यताऽद्वयलक्षणा॥ इति।

तत्र वैभाषिकाणामस्ति विज्ञानाद् व्यतिरिक्तो बाह्योऽर्थः सामान्य-विशेषाभ्यामनेकात्मकतया प्रत्यक्षोऽनुमेयश्च। तथा हि सन्ति तावद् द्विविधाः परमाणवः सौत्रान्तिकवैभाषिकयोरुभयोरपि संमताः-द्रव्यपरमाणुः, संघातपरमाणुरिति। तत्र सौत्रान्तिकसमये परमाणुसंघातः प्रत्यक्षः। वैभाषिकमते परमाणुसंघातः सामान्यरूपेण (संघातरूपेण) प्रत्यक्षः, विशेषरूपेणानुमेयः। वस्तुमात्रस्याक्षयोग्यस्य प्रत्यक्षत्वमनुमेयत्वं चेति हि वैभाषिकसमयः। सौत्रान्तिकानां त्वक्षयोग्यः संघातः प्रत्यक्ष एव। न तु तदानीमेव तस्यानुमेयत्वमपि, विरोधात्। द्रव्यपरमाणवस्त्वसंघातरूपा अनुमेया एव।

विज्ञानवादिनां तु विज्ञानाकार एवार्थो नास्ति बाह्य इति—"विज्ञप्तिमात्रमेवैतदसदर्थावभासनात्" इति विंशतिकाप्रथमकारिकातः, "विज्ञप्तिमात्रमेवेदमित्यपि ह्युपलम्भतः" इति त्रिंशिकासप्तविंशकारिकातश्च, "सहोपलम्भनियमादभेदो नीलतद्धियोः" इत्यादितश्च सुप्रतीतमेव।

शून्यवादिनां तु शून्ये तत्त्वे भ्रान्तिकल्पिताः सर्वे भावाः। शून्यं तत्त्वमिति तूक्तमाचार्यनागार्जुनेन मध्यमककारिकायां निर्वाणपरीक्षायाम्—"विद्यादनन्तरं किञ्चित् सुसूक्ष्मं विद्यते" इति। भावानां सांवृतत्वं तु साधितं मध्यमकवृत्तौ प्रत्ययपरीक्षाप्रकरणे—"तदुक्तं भगवता नास्त्यत्र तथता वाऽवितथता वा, मोषधर्मकमप्येतत्, प्रलोपधर्मकमप्येतत्, मृषाऽप्येतत्। मायेयं बाललापिनी" इति। तथा—

फेनपिण्डोपमं रूपं वेदना बुद्बुदोपमा।
मरीचिसदृशी संज्ञा संस्काराः कदलीनिभाः॥
मायोपमं च विज्ञानमुक्तमादित्यबन्धुना। इति।

तथा च सौत्रान्तिकानां तु विज्ञानातिरिक्त एवार्थ इन्द्रिययोग्यत्वायोग्यत्वाभ्यां प्रत्यक्षश्चानुमेयश्च। विज्ञानवादिनां तु विज्ञानाकार एवार्थः, नास्ति बाह्यः। शून्यवादिनां शून्ये तत्त्वे भ्रान्तिकल्पिता एव सर्वे भावाः, अतः संवृतिसन्तः सांवृतिका वाऽभिधीयन्ते। तत्रैवं परस्परं प्रविभागे सत्यप्याभ्यन्तराः सर्वे चित्तचैत्ताश्चतुर्भिः प्रत्ययैः संवृत्याऽसंवृत्या वा समुपजायन्त इत्यत्र न विसंवादः। तदुक्तम्—"उत्पादात्यन्तविघ्नोऽन्यो निरोधोऽप्रतिसंख्यया" इत्यभिधर्मकारिकायाः स्फुटार्थायां विवृतौ—"चतुर्भिरेव

हि प्रत्ययैर्हेतुसमनन्तरालम्बनाधिपतिप्रत्ययैश्चित्तचैत्ता उत्पद्यमाना उत्पद्यन्ते, तेषामन्यतमवैकल्येऽप्यनुत्पत्तिः" इति।

तत्र चत्वारः प्रत्यया उक्ता मध्यमकवृत्तौ—

चत्वारः प्रत्यया हेतुश्चालम्बनमनन्तरम्।
तथैवाधिपतेयश्च प्रत्ययो नास्ति पञ्चमः॥ इति।

[ प्रत्ययपरीक्षा० २ का० ]

चित्ते चैत्ते चाभ्यन्तरे एतेषां प्रत्ययानां समन्वयो यथा भामत्याम्—"नीलाभासस्य चित्तस्य नीलादालम्बनप्रत्ययान्नीलाकारता। समनन्तरप्रत्ययात् पूर्वविज्ञानाद् बोधरूपता। चक्षुषोऽधिपतिप्रत्ययाद् रूपग्रहणप्रतिनियमः। आलोकात् सहकारिप्रत्ययात् स्पष्टार्थता। एवं सुखादीनामपि चैत्तानां चित्ताभिन्नहेतुजानां चत्वार्येतान्येव कारणानि" इति।

तदेवं बाह्यं भूतं भौतिकं चाभ्यन्तरं चित्तं चैत्तं च सर्वमपि चतुर्भिः प्रत्ययैर्भवतीति सिद्धम्। मध्यमकस्यैतत् प्रत्याख्यानं तु परमार्थदृष्ट्या। किञ्च, सर्वं जायमानं हेतूपनिबन्धतः प्रत्ययोपनिबन्धतश्च जायत इत्यत्रापि संवाद एव।

तत्र हेतूपनिबन्ध एकैककारणसंबन्धः, प्रत्ययोपनिबन्धः कारणसमुदायसंबन्धः। सर्वस्य च प्रतीत्यसमुत्पादरूपत्वम्। प्रतीत्यसमुत्पादपदस्य च द्विधा व्याख्या दर्शिता मध्यमकवृत्तौ चन्द्रकीर्तिना—"तत्र प्रतीत्य इति प्राप्येत्यर्थकं ल्यबन्तम्। हेतुप्रत्ययौ प्राप्य समुत्पादः प्रतीत्यसमुत्पाद इत्येकः पक्षः। एतिर्गत्यर्थः, तस्मात् कर्तरि बाहुलकाद् अच्, यन्ति गच्छन्ति विनश्यन्तीति इत्या विनाशिनः। प्रतिशब्दश्च वीप्सार्थे। प्रति प्रति इत्यानां समुत्पादः" इति। अत्रापि हेतुप्रत्ययावेव प्रत्यर्थवीप्साविषयौ, हेतुप्रत्ययौ प्रति प्रतीत्यर्थः। तदेवं प्रकारद्वयमाश्रित्यापि जगत्सर्गे कश्चन स्रष्टृत्वाभिमन्ता चेतनः प्रत्ययः पञ्चमो नास्ति, यत्र जगत्सर्गफलं कल्प्येत। तथा च बौद्धानामपि जगत्सर्गायत्तावेव भोगापवर्गौ फले जीवानाम्।

तत्र वैभाषिकस्यापवर्गस्वरूपम्—"उत्पादात्यन्तविघ्नोऽन्यो निरोधोऽप्रतिसंख्यया" इति कारिकाव्याख्याने स्फुटार्थायाम्—"तदेवंजातीयकानामनागतानां धर्माणां प्रत्ययवैकल्यात् प्रतिसंख्यामन्तरेणोत्पादस्य नियतरोधभूतो यो धर्मः सोऽप्रतिसंख्यानिरोध इत्युच्यत इति वैभाषिकाः" [ पृ० ३० ] इत्युक्त्या दर्शितम्। अत्र च धर्मत्वोक्त्याऽप्रतिसंख्यानिरोधस्य द्रव्यसत्त्वमुक्तम्।

सौत्रान्तिकास्त्वतीतानां क्लेशानामनागतानां च प्रतिसंख्याऽप्रतिसंख्या-निरोधद्वयरूपं प्रहाणम्, अतीतानां निवृत्तिरूपमनागतानां चानुत्पादरूप-मेव निर्वाणं न तु तद् द्रव्यसदिति मन्वते।

विज्ञानवादिनस्तु निर्वाणस्वरूपं विज्ञप्तिमात्रतासिद्धौ त्रिंशिकायाम्—"सममनालम्ब्यालम्बकं निर्विकल्पं लोकोत्तरं ज्ञानमेव निर्वाणम्" इति। तदुक्तम्—"कदा पुनर्विज्ञानग्राहस्य प्रहाणं चित्तमात्रतायां वा प्रतिष्ठितौ भवतीत्यत आह—

यदा त्वालम्बनं ज्ञानं नैवोपलभते तदा।
स्थितो विज्ञानमात्रत्वे ग्राह्याभावे तदग्रहात्॥"

[ त्रिंशिका, २८ ] इति।

यदेवं विज्ञप्तिमात्रतायां चित्तमवस्थितं भवति तदा कथं व्यपदिश्यत इत्याह—

अचित्तोऽनुपलम्भोऽसौ ज्ञानं लोकोत्तरं च तत्।
आश्रयस्य परावृत्तिर्द्विधा दौष्ठुल्यहानितः॥
स एवानास्रवो धातुरचिन्त्यः कुशलो ध्रुवः।
सुखो विमुक्तिकायोऽसौ धर्माऽख्योऽयं महामुनेः॥

[ त्रिंशि० २९-३० ]

माध्यमिकानां तु सर्वप्रपञ्चसंस्कारोपशम एव शान्तः शिवो निर्वाणम्। तदुक्तम्—

अनिरोधमनुत्पादमनुच्छेदमशाश्वतम्।
अनेकार्थमनानार्थमनागममनिर्गमम्॥
यः प्रतीत्यसमुत्पादं प्रपञ्चोपशमं शिवम्।
देशयामास संबुद्धस्तं वन्दे वदतां वरम्॥

[ मध्यमकवृ० ११ पृष्ठे ]

अनित्यास्ते तु संस्कारा उत्पादव्ययधर्मिणः।
उत्पद्य हि निरुध्यन्ते तेषां व्युपशमः सुखः॥

[ मध्यमकवृ० ३८ पृष्ठे ]

किञ्च, फेनपिण्डोपमं द्वयमित्यादिप्रागुक्तमध्यर्धश्लोकमुपन्यस्योक्तम्—

"एवं धर्मान् वीक्षमाणो भिक्षुरारब्धवीर्यवान्।
दिवा वा यदि वा रात्रौ संप्रजानन् प्रतिस्मृतः॥

प्रतिविध्येत् पदं शान्तं संस्कारोपशमं शिवम् ॥ इति ॥

[ मध्यमकवृ० ४२ पृष्ठे ]

## जैनमतम्

जैनास्तु जीवाजीवौ, धर्माधर्मौ, आस्रवः, संवरः, निर्जरणम्, बन्धः, मोक्षश्चेति नव तत्त्वानि। तत्र जीवा द्विविधाः–संसारिणः, मुक्ताश्च। भवाद् भवान्तरप्राप्तिमन्तः संसारिणः। ते च द्विविधाः—समनस्काः, अमनस्काश्च। तत्र संज्ञिनः समनस्काः। शिक्षाक्रियालापग्रहणरूपा संज्ञा, तद्विधुरास्त्वमनस्काः। ते चामनस्का द्विविधाः–त्रसस्थावरभेदात्। तत्र द्वीन्द्रियादयः शङ्खगण्डोलकप्रभृतयश्चतुर्विधास्त्रसाः। पृथिव्यप्तेजोवायुवनस्पतयः स्थावराः। स्थावराश्च स्पर्शनैकेन्द्रियाः। तत्र पृथिव्यादीनां चतुर्णां प्रत्येकं चत्वारो भेदाः। तद् यथा—पृथिवी, पृथिवीकायः, पृथिवीकायिकः, पृथिवीजीवः। तत्र मार्गगता धूलिः पृथिवी, इष्टकादिः पृथिवीकायः, पृथिवी कायत्वेन येन गृहीता स पृथिवीकायिकः, पृथिवीं कायत्वेन यो ग्रहीष्यति स पृथिवीजीवः। तत्र पृथिवीजीव एव स्थावरत्वेन गृह्यते, जीवत्वात्। भवान्तरप्राप्तिविधुरा मुक्ताः। धर्माधर्माकाशास्तिकायास्ते एकत्वशालिनो निष्क्रियाश्च। यतो द्रव्यस्य देशान्तरप्राप्तिहेतू धर्माधर्मौ प्रसिद्धौ। अन्यवस्तुप्रदेशमध्येऽन्यवस्तुप्रवेशोऽवगाहः, तदाकाशकृत्यम्। स्पर्शरसवर्णवन्तः पुद्गलाः। ते च द्विनिधाः—अणवः, स्कन्धाश्च। भोक्तुमशक्या अणवः, द्व्यणुकादयः स्कन्धाः। तत्र द्व्यणुकादिस्कन्धभेदादण्वादिरुत्पद्यते। अण्वादिसंघाताद् द्व्यणुकादिरुत्पद्यते। अत एव पूरयन्ति गलन्तीति पुद्गलाः। कालस्यानेकप्रदेशत्वाभावेनास्तिकायत्वाभावेऽपि द्रव्यत्वमस्ति, तल्लक्षणयोगात्। गुणपर्यायवद् द्रव्यमिति। कायवाङ्मनःकर्मयोगः कर्मवासनारूप आस्रवः। स च शुभाशुभकर्मभेदाद् द्विविधः। सकषायत्वाज्जीवः कर्मभावयोग्यान् पुद्गलानादत्ते स बन्ध इति। मिथ्यादर्शनाविरतिप्रमादकषाया बन्धहेतवः। आस्रवनिरोधः संवरः। येनात्मनि प्रविशत्कर्म प्रतिषिद्ध्यते स गुप्तिसमित्यादिः संवरः। संसारकारणाद् योगादात्मनो गोपनं गुप्तिः। आस्रवस्रोतसो द्वारं संवृणोतीति संवरः।

संसारबीजभूतानां कर्मणां जरणादिह।
निर्जरा सम्मता द्वेधा सकामाकामनिर्जरा॥
स्मृता सकामा यमिनामकामा त्वन्यदेहिनाम्॥

[ सर्वदर्शनसंग्रह, आर्हत० ]

बन्धहेतुभवहेतुनिर्जराभ्यां कृत्स्नकर्मविप्रमोक्षणं मोक्ष इति। तदनन्तर-मूर्ध्वं गच्छत्यालोकान्तात्।

ज्ञानाद्भिन्नो न चाभिन्नो भिन्नाभिन्नः कथञ्चन।
ज्ञानं पूर्वापरीभूतं सोऽयमात्मेति कीर्तितः॥

[ सर्वदर्शनसंग्रह, आर्हत० ]

कर्तुश्च सावयवत्वम्, निरवयवत्वे व्यापित्वविरोधात् परमाणुवत्। सर्वज्ञश्चार्हन्नेव। तस्य च सार्वज्ञ्यमावरणक्षयसाध्यम्। नास्ति कश्चन नित्य-सिद्धः सर्वज्ञ ईश्वरः। सप्तभङ्गीनयं चैते सर्ववस्तुषु स्वीकुर्वन्ति, तेन च सर्ववस्तूनामनैकान्तात्मकत्वम्। स्यादस्ति, स्यान्नास्ति, स्यादस्ति च नास्ति च, स्यादवक्तव्यः, स्यादस्ति चावक्तव्यः, स्यान्नास्ति चावक्तव्यः, स्यादस्ति च नास्ति चावक्तव्य इति सप्तभङ्गीनयाकारः।

अस्मिन्नपि मते सर्वज्ञस्येश्वरस्य जगत्स्रष्टुरभावाददृष्टाधीनाऽणुहेतुकैव सृष्टिरिति नास्ति स्रष्टरि सृष्टेः फलम्, स्रष्टव्येषु तु भोगापवर्गरूपं तदस्त्येव।

## न्यायवैशेषिकमतम्

नैयायिकानां तु यद्यप्यस्ति नित्यसिद्धः सर्वज्ञ ईश्वरो नित्यज्ञानेच्छा-कृतिसम्पन्नः स्रष्टा कार्यमात्रे निमित्तकारणम्। तस्य ज्ञानेच्छाकृतीनां नित्यत्वेऽपि सदा न सृष्टिः, सृज्यमानप्राण्यदृष्टानामपि कादाचित्कानां सहकारित्वात्। एतन्मतेऽप्यदृष्टवदात्मसंयोगात् परमाणुष्वाद्यक्रियाद्वारिका द्व्यणुकादिसृष्टिः। कालवशेन विपक्वानामभिव्यक्तानां वाऽदृष्टानामेव कार्यारम्भकत्वमिति संसारानादित्वेन सदाऽदृष्टसद्भावेऽपि सदा न सृष्टिः। ईश्वरस्य विग्रहाभावेऽपि मणिमन्त्रादिन्यायेनालौकिकमेव कारणत्वम्। केचित्तु परमाणव एव ईश्वरस्य शरीरमित्याहुः, तन्न; अणुषु ईश्वरस्याऽ-भिमानाभावेन तेषां भोगायतनत्वाभावेन च शरीरत्वासंभवात्, नित्यं प्रमातरि भगवति आहार्यारोपस्याप्यसंभवाच्च। प्रतिमादौ त्वस्माकमेवा-हार्यारोपरूपा शास्त्राहिता विष्ण्वादिबुद्धिः। तथा चैतन्मतेऽपि नित्यज्ञाना-दिमति भगवति न किञ्चित् सृष्टिफलं संभाव्यते। नैयायिकानां मोक्षस्वरूपं चैकविंशतिदुःखध्वंसरूपम्। "लोकवत्तु लीलाकैवल्यम्" [ २।१।३३ ] इति वेदान्तसूत्रेष्वभिहितं लीलारूपमपि सृष्टेः फलं न संभवति, अकायस्य क्रीडाया असंभवात्। वेदान्तिनां तु मायया कायसंबन्धेन लीलासंभवः। एवं च न्यायमतेऽपि स्रष्टरि न सर्गफलं किन्तु स्रष्टव्येष्वेव भोगापवर्गरूपम्।

एतत् सर्वं च वैशेषिकमतेऽपि बोध्यम्, न्यायवैशेषिकयोः प्रायः समान-तन्त्रत्वात्।

## मीमांसकमतम्

मीमांसकास्तु वेदप्रामाण्यरक्षणे बद्धपरिकरा ईश्वरसत्तामेव नोपयन्ति। ईश्वरसत्त्वे हि वेदस्य तत्कर्तृकत्वे पुरुषत्वाविशेषेण तत्रापि भ्रमादिदोष-संभवेन वेदस्याप्रामाण्यापत्तिः। पर्वतसमुद्रादीनां चन्द्रसूर्यादीनां च नोत्पत्ति-विनाशौ, किन्त्ववयवानामुपचयापचयावेवेति सर्गाभावे तत्फलचिन्ता दूरापेता।

## सांख्यमतम्

सांख्यानां तु प्रकृतिरेव जगत्स्रष्ट्री। नास्ति परमेश्वरस्तस्या जगत्सर्गे प्रवर्तकः। सृज्यमानप्राण्यदृष्टवशाच्चाचेतनापि प्रकृतिः सर्गे प्रवर्तते। तदुक्तम्—

'वत्सविवृद्धिनिमित्तं क्षीरस्य यथा प्रवृत्तिरज्ञस्य।
पुरुषविमोक्षनिमित्तं तथा प्रवृत्तिः प्रधानस्य॥

[ सां० का० ५७ ]

## योगमतम्

योगिनां तु यद्यप्यस्ति परमेश्वरः, तथाप्ययस्कान्तस्येव सन्निधानमात्रेण तस्य प्रकृतिप्रवर्तकत्वम्, असङ्गेऽपरिणामिनि च तत्र व्यापारासंभवात्। भगवत्सन्निधानं तु प्रकृतेर्यद्यपि शाश्वतिकम्, तथाप्यदृष्टानां कादाचित्कत्वेन जगत्सर्गकादाचित्कत्वनिर्वाहः। तथा च सांख्यानामिव योगिनामपि पुरुषस्य भोगापवर्गावेव जगत्सर्गप्रयोजनम्। सांख्ययोगयोर्मोक्षस्वरूपं तु विवेकख्यात्या स्वरूपसाक्षात्कारेण प्रकृतिप्रवृत्तिनिवृत्तिपूर्वकं स्वस्वरूपा-वस्थितिरूपम्।

## वेदान्तमतम्

वेदान्तिनां तु जीवेशावाभासेन करोति। "माया च अविद्या च स्वय-मेव भवति" [ नृसिंहोत्तर० ९।२ ] इति श्रुत्यनुसारेण मायाशक्त्युपहित-स्येश्वरस्य जगत्स्रष्टृत्वम्। मायया च जगत्सर्गे सर्वा अप्यनुपपत्तयः परिहृता भवन्ति। तदुक्तम्—

किमीहः किंकायः स खलु किमुपायस्त्रिभुवनं
किमाधारो धाता सृजति किमुपादान इति च।
अतर्क्यैश्वर्ये त्वय्यनवसरदुःस्थो हतधियः
कुतर्कोऽयं कांश्चिन्मुखरयति मोहाय जगतः ॥ इति।
[ महिम्नस्तोत्रे, श्लो० ५ ]

एतन्मते स्रष्टरि भगवति जगत्सर्गफलं केवलं लीलैव। तथा च प्रागुपदर्शितं पारमर्षं सूत्रम्—"लोकवत्तु लीलाकैवल्यम्" [ ब्रह्मसू० २।१।३३ ] इति।

गौडपादास्त्वाहुः—

देवस्यैव स्वभावोऽयमाप्तकामस्य का स्पृहा। [ मा० का० १।९ ] इति। गौडपादकारिकासु चाजातिवाद एव श्रुतिसम्मतत्वेन व्यवस्थापितः। तथा चाद्वैतिनां मायिक ईश्वरः, मायिकी सृष्टिः, भोगापवर्गरूपं च स्रष्टव्येषु फलम्। अद्वैतिनामपवर्गस्तु—"निवृत्तिरात्मा मोहस्य ज्ञातत्वेनोपलक्षितः" इत्युक्तलक्षणः सच्चिदानन्दात्मरूपः।

## पुराणमतम्

पुराणेषु तु सर्गप्रकरणे क्वचित् सांख्यं क्वचिच्चाद्वैतवेदान्तशास्त्रं समाश्रितम्। यथा श्रीमद्भागवते "जन्माद्यस्य यतः" इत्यादिमे श्लोकेऽद्वैतसिद्धान्त एव समाश्रितः। मातरं प्रति कपिलस्योपदेशे सांख्यशास्त्रं समालम्बितम्।

## धर्मशास्त्रमतम्

धर्मशास्त्रेऽपि मन्वादिषु सांख्यप्रक्रियैव समादृता। एवञ्च पुराणधर्मशास्त्रादिप्रतिपादितसर्गफलमपि सांख्यशास्त्रवेदान्तशास्त्रपद्धत्या बोध्यम्।

अन्ते च प्रत्यक्षतोऽद्वैतमतानुसारि परोक्षतश्चावसरपाठेन न्यायमतमनुसरदिदमुदयनवाक्यं जगत्सर्गे फलप्रतिपादनोद्यतमुपन्यस्य विरम्यते—

कारं कारमलौकिकाद्भुतमयं मायावशात् संहरन्
हारं हारमपीन्द्रजालमिव यः कुर्वन् जगत् क्रीडति।
तं देवं निरवग्रहस्फुरदभिध्यानानुभावं भवं
विश्वासैकभुवं शिवं प्रति नमन् भूयासमन्तेष्वपि ॥
[ न्यायकुसुमाञ्जलौ २।४ ]



# ज्ञान-साधनाश्च उपायाः

या विद्या परमा मुक्तेर्हेतुभूता सनातनी ।
संसारबन्धहेतुश्च याऽविद्या सा प्रसीदतु ॥
अपरोक्षभ्रमो नश्येन्नैव शास्त्रोत्थविद्यया ।
अतोऽपरोक्षबोधस्य हेतुरत्र प्रदर्श्यते ॥
यद्विधेयं मुमुक्षूणां यच्च हेयं प्रयत्नतः ।
तदत्र दर्शयिष्येऽहं यथाशास्त्रमतन्द्रितः ॥
विधानेन मनःशुद्धिः शुद्धे मनसि दर्शनम् ।
विहानेन निषिद्धस्य प्रत्यवायापुनर्भवः ॥

तत्र मुमुक्षुः शुक्लं सुकृतं ज्ञानानुकूलं समुपार्जयिष्यन् शीतोष्णादिद्वन्द्व-प्रतीकारोपायार्जने आयासं मनोविक्षेपञ्च ज्ञानप्रतिकूलं परिहरिष्यन् द्वन्द्वानि तितिक्षेत, न तु प्रतिचिकीर्षेत् । यथारब्धलब्धेन वा प्रतिकुर्यात्, सिद्ध्यसिद्ध्योः समो भूत्वा (*२।१४-१५) गृहस्थश्चेन्मुमुक्षुः स्वधर्म-मनुतिष्ठेत् । अकरणे प्रत्यवायो ज्ञानप्रतिबन्धकः (२।३१-३८) ।

मुमुक्षुः काम्यं कर्म न कुर्यात् (२।४२-४४) । सात्त्विकाहारविहार-सेवया सत्त्वं समुपार्जयेत् । ज्ञानसिद्धये प्रारब्धक्षयमीक्षमाणो योगक्षेमार्थं नासक्त्या यतेत (२।४५) विषयेषु क्षयित्वाशुचित्वानित्यत्वादिदोषदृष्ट्या कामान् प्रजह्यात्, परमं सन्तोषमास्थाय च (२।५५) दुःखेषु प्राप्तेषु नोद्विजेत तदनित्यतामवेक्षमाणः; सुखेभ्यश्च न स्पृहयेत तत एव । विषयेषु रागम्, अनिष्टेभ्यो भयम्, कामप्रतिघाते क्रोधञ्च परित्यजेत यथाक्रमं दोष-दृष्ट्या तत्त्वावमर्शनेन कामपरिवर्जनेन च (२।५६) इष्टे प्राप्ते न प्रहृष्येत, अनिष्टे च न द्विष्यात् तत्र चित्तविक्षेपरूपं दोषं ज्ञानप्रत्यवायमवेक्षमाणः (२।५७) । इन्द्रियाणि इन्द्रियार्थेभ्यो बलान्निगृह्णीयात्, अनिग्रहे चित्त-विक्षेपदोषमवेक्षमाणः (२।५९-३१) । निशायां जगतः प्रस्वापकाले जागृयात् आत्मनि मनः समाधातुं, दिने च प्रस्वपेत् (२।६९-८६) ।

---

* अस्मिन्प्रबन्धे प्रायो भगवद्गीतामाश्रित्यैव उपाया विवेचिताः, अतः 'गीता-गीता' इति सर्वत्रानुल्लिख्य केवलं स्थलनिर्देशः कृतोऽस्ति ।

गृहस्थो मुमुक्षुर्ज्ञानेन्द्रियैः सह मनो विषयेभ्योऽवरुध्य सक्तिरहितः कर्मेन्द्रियैः कर्मयोगं भगवत्प्रीत्यर्थमारभेत ( ३।६ )। अहरहः पञ्चयज्ञशिष्टमन्नं सर्वकिल्बिषनिवृत्त्यर्थं भुञ्जीत, न त्वात्मार्थमेव पचेत् ( ३।१३ )। आत्मदर्शनात् प्राक् स्वस्ववर्णाश्रमविहितं, कर्म निष्कामः चित्तशुद्ध्यै कुर्यात् ( ३।१७।१९ )। नैष्कर्म्योपदेशेन अज्ञान् कर्मभ्यो न निवर्तयेत् ( ३।२६ )। यतिर्विषयेभ्यो निवर्तितचित्तः त्यक्तसर्वपरिग्रहः शरीरयात्रामात्रोपयोगि केवलं भिक्षाटनादि कर्म कुर्यात् । एवं सति चित्तविक्षेपाभावे चित्तसमाधानं भवति ( ४।३१ )। गृहस्थोऽपि यदृच्छालाभसन्तुष्टः शीतोष्णादिद्वन्द्वातीतः प्रकृष्टपरपुरुषेषु विमत्सरः कर्मफले निःस्पृहो विष्णुप्रीतये कर्म कुर्यात् ( २।२३ )। कर्म कर्माङ्गाणि च ब्रह्मैवेति पश्यन् कर्म कुर्यात्, तद्धि न बन्धकं भवति ( ४।२४ )

गृहस्थश्चेन्मुमुक्षुः स्वस्वेष्टदेवताबुद्ध्या भगवन्तमुपासीत सगुणं निर्विशेषे ब्रह्मणि मनःसमाधानेऽशक्तः। निर्विशेषभगवद्रूपदर्शने समर्थश्चेत्तत्रैव मनः समादधीत ( ४।२५ )। श्रोत्रादीनीन्द्रियाणि विषयेभ्यो बलात् संयच्छेत् । अथवा रागद्वेषवियुक्तैरिन्द्रियैरसक्तो विषयान् शब्दादीनुपभुञ्जीत ( ४।२६ )। आत्मनि मनः समाधाय सर्वाणि इन्द्रियकर्माणि प्राणकर्माणि च निरुन्ध्यात् ( ४।२७ )। आत्मनि मनसो निरोधाशक्तौ प्राणानेव गुरूपदिष्टमार्गेण निरुन्ध्यात् ( ४।२९-३० )। श्रोत्रियं ब्रह्मनिष्ठं च आचार्यं प्रणिपातेन सेवया च अनुकूलय्य परिप्रश्नेन आत्मानं जिज्ञासीत (४।३४)। गुरुवेदान्तवाक्येषु श्रद्धावान् ज्ञानार्जने तत्परश्च भवेत् ( ४।३९ )।

श्रुतिस्मृतीतिहासपुराणानि गुरूपदेशञ्चानुसृत्य आत्मतत्त्वं रहसि विचारयेदित्येकः साङ्ख्यमार्गः। गुरूपदिष्टमार्गेण प्राणानायच्छेदित्यपरो योगमार्गः ( ५।४-५ )। इन्द्रियार्थेषु इन्द्रियेषु प्रवर्तमानेष्वपि नाहं किञ्चित् करोमि ममेन्द्रियभेदादिति समाहितो मन्येत ( ५।८-९ )। आविद्वद्ब्राह्मणाद् आश्वचाण्डालगोखरं सर्वत्रैव जन्तुषु समं समवस्थितमात्मानं पश्येत् ( ५।१८ )। प्रियं प्राप्य न प्रहृष्येत, अप्रियं प्राप्य नोद्विजेत् ( ५।२० )। स्रक्चन्दनवनितागृहयानाद्युपभोगानामर्जने सेवने च दुःखयोनित्वेन मनोरतिं न कुर्यात् ( ५।२२ )। कामक्रोधयोर्वेगं तितिक्षेत चात्मसुखमभीप्सन् (५।···)। यतेन्द्रियमनोबुद्धिर्मुनिर्बाह्यविषयेभ्यो मनो निवर्त्य चक्षुश्च भ्रुवोरन्तरे कृत्वा नासाभ्यान्तरचारिणौ प्राणापानौ च कुम्भकेनैकदेशे निरुद्ध्यात् (५।२३)।

चित्तजयेन समो भूत्वा शीतोष्णसुखदुःखेषु तथा मानापमानयोः मनसः समाधानं सम्पादयेत् ( ६।७ )। योगसिद्धये सर्वव्यवहारेषु उदासीनो विजि-

तेन्द्रियः समलोष्ठाश्मकाञ्चनं आत्मविषयकशास्त्रीयपरोक्षज्ञानतदनुभवरूप-विज्ञानतृप्तचित्तश्च भवेत् (६।८)। सुहृन्मित्रायुदासीनमध्यस्थद्वेष्यबन्धुषु साधुष्वपि च पापेषु समबुद्धिर्भवेत् (६।९)। योगी एकाकी रहसि स्थितो वशीकृतचित्तबुद्धिः निर्मनोरथोऽपरिग्रहो नियतबाह्येन्द्रियक्रियः शुचौ देशे नात्युच्छ्रितं नातिनीचं चैलाजिनकुशोत्तरमात्मनः स्थिरमासनं प्रतिष्ठाप्य तत्रोपविश्यैकाग्रं मनः कृत्वा स्थिरः सन् सममचलञ्च कायशिरोग्रीवं धारयन् स्वं नासिकाग्रं संप्रेक्ष्य दिशश्चानवलोकयन् प्रशान्तात्मा विगतभीर्ब्रह्मचारि-व्रतस्थो भगवति समाहितचित्तो भगवत्परो मनःशुद्धये कुम्भकेन प्राणान् नियच्छन् आत्मनि मनः समादधीत (६।११-१४)। योगसिद्धये तद्बाधक-मत्यशनमेकान्तमनशनमतिस्वापमतिजागरणञ्च वर्जयेत् (६।१६)। योग-काले यतो यतो निश्चरति मनश्चञ्चलमस्थिरम्, ततस्ततो नियम्यैत-दात्मन्येव वशं नयेत् (६।२६)। मुमुक्षुः सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि पश्येत् (६।२९)। आत्मौपम्येन सर्वप्राणिषु सुखं दुःखं वा पश्येत् (६।३२)। योगसिद्धयेऽभ्यासवैराग्याभ्यां मनो नियच्छेत् (६।३५)।

गीतोपदिष्टं ज्ञानं गीतागुरूपदेशतः सम्पादयेत्। तद्यथा—भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव अहंकार इत्यष्टधा भिन्ना भगवतः प्रकृतिः सर्वभूतकारणम्। जीवभूता तु हिरण्यगर्भाख्या भगवतः प्रकृतिर्जगतो धारणकारणम्। अत एव हिरण्यगर्भः सूत्रात्मा प्राण इति च वेदान्तेषु व्यवह्रियते। भगवानेव सर्वस्य जगत उपादानकारणम्। तस्योपादान-कारणं नास्ति। स एवाप्सु रसः, शशिसूर्ययोः प्रभा, सर्ववेदेषु प्रणवः, खे शब्दः, नृषु पौरुषम्। पृथिव्यामुत्तमो गन्धः, अग्नौ तेजः, सर्वभूतेषु जीवि-तम्। तपस्विषु तपः। बुद्धिमतां बुद्धिः, तेजस्विनां तेजः। बलवतां काम-रागविवर्जितं बलम्। भूतेषु धर्माविरुद्धः कामः। सर्वे च सात्त्विका राजसाः तामसाश्च भावास्तत एव समुद्भूतास्तत्रैव स्थिताः, न तु भगवान् तेषु स्थितः; कारणत्वेन अकारणकत्वात्। भगवन्तं गुणत्रयविवर्जितं विचारेण विजानीयात्। त्रिगुणात्मिकां भगवन्मायां तरीतुं भगवन्तं कायवाङ्मनोभिः प्रपद्येत। भगवन्तं स्वाभेदेन भजेत। 'वासुदेवः सर्वम्, सर्वञ्च वासुदेवः' इति भावयेत् (अध्यायः ७)।

अन्तकाले च भगवन्तं सगुणं निर्गुणं वा स्मरेद् भगवद्भावप्राप्त्यै (८।५)। सर्वेन्द्रियाणि मनश्च हृदि निरुद्ध्य संयम्य योगधारणया मूर्ध्नि आत्मनः प्राणानाधाय ओमित्येकाक्षरं ब्रह्म व्याहरन् भगवन्तमनुस्मरन्

प्राणांस्त्यजेत् ( ८।१२-१३ )। अनन्यचेताः अनन्यभक्त्या सततं नित्यशो भगवन्तमनुस्मरेद् भगवत्प्राप्त्यै ( ८।१४-२२ )।

सर्वाणि कर्माणि लौकिकानि शास्त्रीयाणि च सर्वं भक्ष्यं भोज्यञ्च सर्वाणि होमकर्माणि दानानि तपांसि च सर्वाणि भगवते समर्पयेत् (९।२७) भगवन्मना भगवद्भक्तो भगवद्याजी भगवन्नमस्कृत् भगवत्परायणश्च भवेत् ( ९।३४ )।

जगति एषु भावेषु भगवन्तं चिन्तयेत् सर्वेषां भूतानामाशयेषु आत्मरूपेण स्थितम्—आदित्येषु विष्णुरूपेण ( वामनरूपेण ), देवेषु वासवरूपेण, इन्द्रियेषु मनोरूपेण, यक्षरक्षःसु वित्तेशरूपेण, वसूनां पावकरूपेण, शिखरिणां मेरुरूपेण, पुरोधसां वृहस्पतिरूपेण, सेनापतीनां स्कन्दरूपेण, सरसां सागररूपेण, महर्षीणां भृगुरूपेण, शब्दानां प्रणवरूपेण, यज्ञानां जपयज्ञरूपेण, स्थावराणां हिमालयरूपेण, वृक्षाणामश्वत्थरूपेण, देवर्षीणां नारदरूपेण, गन्धर्वाणां चित्ररथरूपेण, सिद्धानां कपिलमुनिरूपेण, अश्वानामुच्चैःश्रवोरूपेण, गजेन्द्राणामैरावतरूपेण, नराणां नराधिपरूपेण, आयुधानां वज्ररूपेण, सर्पाणां वासुकिरूपेण, नागानामनन्तरूपेण, पितॄणामर्यमरूपेण, संयमयतां यमरूपेण, दैत्यानां प्रह्लादरूपेण, कलयतां ( गणनासाधनानां ) कालरूपेण स्थितं भगवन्तं चिन्तयेत्। मृगाणां मृगेन्द्ररूपेण ( सिंहरूपेण ), पक्षिणां वैनतेयरूपेण, पवतां ( शोधकानाम् ) वायुरूपेण, पावयितॄणां पवनरूपेण, शस्त्रभृतां रामरूपेण परशुरामरूपेण), मत्स्यानां मकररूपेण, नदीनां जाह्नवीरूपेण, सर्गाणामाद्यन्तमध्यरूपेण, विद्यानामध्यात्मविद्यारूपेण, प्रवदतां वादरूपेण, अक्षराणामकाररूपेण, समासेषु द्वन्द्वरूपेण, कालानां मासादीनामक्षरकालरूपेण, सर्वतोमुखं सर्वजगत्स्रष्टृरूपेण, सर्वहरमृत्युरूपेण, भविष्यतामुद्भवरूपेण, नारीणां कीर्तिश्रीवाक्स्मृतिमेधाधृतिक्षमारूपेण, साम्नां बृहत्सामरूपेण, छन्दसां गायत्रीरूपेण, मासानां मार्गशीर्षरूपेण, ऋतूनां कुसुमाकररूपेण, छलयतां द्यूतरूपेण, तेजस्विनां तेजोरूपेण, पुरुषेषु जय-व्यवसायरूपेण, सत्त्ववतां सत्त्वरूपेण, वृष्णीनां वासुदेवरूपेण, पाण्डवानां धनञ्जयरूपेण, मुनीनां व्यासरूपेण, कवीनामुशनोरूपेण, दमयतां दण्डरूपेण, जिगीषतां नीतिरूपेण, गुह्यानां मौनरूपेण, ज्ञानवताञ्च ज्ञानरूपेण स्थितं भगवन्तं चिन्तयेत्। किं बहुना, सर्वप्राणिनां बीजं भगवानेव। यद्यत् सत्त्वं प्राणी विभूतिमत्, श्रीमद्, ऊर्जितञ्च तत्तद् भगवद्रूपेणैव चिन्त्यम् ( अध्यायः १० )।

गीतायामेकादशेऽध्याये अर्जुनाय प्रदर्शितं भगवतो विश्वात्मकं सगुणं रूपं ध्यायेत्, मनःशुद्ध्यै अर्जुनोक्तपद्यैः स्तूयाच्च भगवन्तम्।

भगवतोऽव्यक्तरूपध्यायिनान्तु अधिकतरक्लेशाः ( १२।५ )। भगवति मन आधत्स्व, भगवति बुद्धिं निवेशय, भगवदुपासनाभ्यासयोगेन भगवन्तमाप्तुं प्रयतस्व, भगवत्कर्मपरमो भव। भगवदयोगमाश्रितः सर्वकर्मफलत्यागं कुरु, एतच्च पूर्वंपूर्वमभ्यर्हितमसामर्थ्यं उत्तरोत्तरम् ( १२।८–११ )। सर्वभूतानामद्वेष्टा मैत्रः करुणः सर्वत्र निर्ममः निरहङ्कारः समदुःखसुखः क्षमावान् सन्तोषसम्पन्नः, भगवद्योगभावितः तच्चित्तः भगवति दृढनिश्चयः, भगवत्यर्पितमनोबुद्धिः भगवति भक्तिमान् भवेत् ( १२।१३-१४ )। लोकानामुद्वेजको न भवेत्, लोकेभ्यश्च नोद्विजेत। हर्षामर्षभयोद्वेगैर्मुक्तो भवेत्। ( १२।१५ )। सर्वविधाकाङ्क्षारहितः कायवाङ्मनःशुद्धिसम्पन्नः, अध्यात्मदर्शनोपयुक्ते कर्मणि श्रवणादौ दक्षो विषयोदासीन अनिष्टप्राप्तौ गतव्यथः सर्वारम्भपरित्यागी भवेत् ( १२।१६ )। इष्टं प्राप्य न हृष्येत्, अनिष्टे च द्वेषं न कुर्यात्, नष्टं न शोचेत्, अप्राप्तं न काङ्क्षेत्। शुभाशुभे उभे अपि कर्मणी भगवद्भक्तिसम्पन्नः परित्यजेत्। ( १२।१७ )। शत्रुमित्रयोर्मानापमानयोः शीतोष्णसुखदुःखेषु समः सर्वत्र सङ्गविवर्जितश्च भवेत् (१२।१८)। तुल्यनिन्दास्तुतिर्मौनी भवेत्। येन केनचिदन्नेन वस्त्रेण वा सन्तुष्येत्। अनिकेतः भगवद्ध्यानादौ स्थिरचित्तो भगवति भक्तिमांश्च भवेत् ( १२।१९ )।

एते च ज्ञानप्राप्त्युपाया गीतायां वर्णिताः। तथा हि—अमानित्वम्, अदम्भित्वम्, अहिंसा, क्षमा, आर्जवम्, सरलता, आचार्योपासनम्, कायवाङ्मनसां शौचम्, मनसः स्थैर्यम्, मनोनिग्रहः, इन्द्रियविषयेषु वैराग्यम्, अहङ्काराभावः, जन्म-मृत्यु-जरा-व्याधिदुःखरूपदोषानुदर्शनम्, विषयेषु अनासक्तिः, पुत्रदारगृहादौ ममताया अभावः, समचित्तता, भगवति च अव्यभिचारिणी अभेदभक्तिः, निर्जनदेशसेवित्वम्, जनसमूहेऽरुचिः, अध्यात्मज्ञानार्जने तत्परता, तत्त्वज्ञानार्थमेव इतरसकलज्ञानार्जनमिति। ( १३।७–११ )। मनोनिरोधेन ध्यानमात्मदर्शनोपाय इति केचित्। अपरे तु—आत्मानात्मनोर्विचार इति। अन्ये तु—प्राणनिरोधरूपो योगस्तदुपाय इति। एके तु निष्कामकर्मयोगस्तदुपाय इति वदन्ति। अन्ये च—एतत्सर्वमजानन्तोऽन्येभ्य आत्मतत्त्वं कथञ्चित् श्रुत्वोपासते तेऽपि आत्मदर्शनेन मृत्युमतितरन्ति। इति ( १३।२४–२५ )।

सत्त्वादिगुणत्रयरूपबन्धविनिवृत्तये जन्ममृत्युजरादुःखानां विनिवृत्तये च समदुःखसुखस्वरूपः समलोष्टाश्मकाञ्चनः, तुल्यप्रियाप्रियो धीरस्तुल्यनिन्दात्मसंस्तुतिः, मानापमानयोस्तुल्यस्तुल्यो मित्रारिपक्षयोः, सर्वारम्भपरित्यागी च सन् अव्यभिचारेण भक्तियोगेन भगवन्तं सेवेत ( १४।२०, २४–२६ )।

सुविरूढमूलं संसाराश्वत्थमसङ्गशस्त्रेण दृढेन छित्त्वा प्रपत्त्या चाद्यं पुरुषं प्रसाद्य यद्गत्वा भूयो न निवर्तन्ते, सूर्यशशाङ्कपावकानवभास्यत्वेऽपि स्वप्रकाशं तत्परमं पदं परिमार्गयेत् ( १५।३, ४, ६ )। आदित्ये चन्द्रमसि अग्नौ च भगवत्तेजो ध्यायेत्। क्षितिमन्तः प्रविश्य भूतानि धारयन्तम्, रसात्मकसोमरूपेण व्रीहियवौषधीः पुष्णन्तम्, सर्वप्राणिदेहान्तःस्थितवैश्वानररूपेण प्राणापानसंधुक्षितेन भक्ष्यं भोज्यं लेह्यं चोष्यं चतुर्विधमन्नं पचन्तं भगवन्तं ध्यायेत्। 'क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते' इति शास्त्रप्रतिपाद्यक्षराक्षरात्मना उत्तमं पुरुषं पुरुषोत्तमपदाभिधेयं संशयविपर्यासराहित्येन स्वाभेदेन विदित्वा स्वस्य सर्वविधं बुद्धिमत्त्वं कृतकृत्यत्वञ्च सम्पादयेत्। ( १५।१६–२० )।

विमोक्षाय दैवीं सम्पदं सम्पादयेत्। संसाररूपबन्धफलाञ्चासुरीं सम्पदं परिवर्जयेत्। दैवीसम्पच्च—'अभयं सत्त्वसंशुद्धिर्ज्ञानयोगव्यवस्थितिः। दानं दमश्च यज्ञश्च स्वाध्यायस्तप आर्जवम्। अहिंसा सत्यमक्रोधस्त्यागः शान्तिरपैशुनम्। दयाभूतेष्वलोलुप्त्वं मार्दवं ह्रीरचापलम्। तेजः क्षमा धृतिः शौचमद्रोहो नातिमानिता' इति। आसुरीसम्पच्च—'दम्भो दर्पोऽभिमानः क्रोधः पारुष्यम् अज्ञानञ्च' इति। किञ्च असुरा जना विहिते कर्मणि प्रवृत्तिं निषिद्धाच्च निवृत्तिं न जानन्ति। शौचाचारसत्यानि तेषु न विद्यन्ते। ते जगत् असत्यम् ( शून्यम् ), अप्रतिष्ठम्, सत्याश्रयरहितम्, अनीश्वरम्, कामकृतम्, स्त्रीपुरुषसंयोगमात्रसमुद्भूतमाहुः। ते दुष्पूरं काममाश्रिताः दम्भमानमदान्विता अशुचिव्रताश्च भवन्ति। अपरिमेयां चिन्तां प्रलयान्तामुपाश्रिताः कामोपभोगमेव परमं पुरुषार्थं मन्वते। आशापाशशतैर्बद्धाः कामक्रोधपरायणाः कामभोगार्थमन्यायेनार्थसञ्चयान् ईहन्ते। लाभे सन्तोषरहिताः सदा भूतद्रोहपरा ऐश्वर्यभोगसिद्धीनां धनाभिजनयोस्तथा बलसौन्दर्ययोरभिमानञ्च परमं समुपाश्रिताः, यज्ञदानकृतं मोदं भरिष्यामीति मोहिताः, प्रसक्ताः कामभोगेषु पतन्ति नरकेऽशुचौ। आत्मसंभाविताः स्तब्धा धनमानमदान्विताः, दम्भेनाविधिपूर्वकं यज्ञैर्यजन्ते। अहङ्कारं बलं दर्पं कामं क्रोधं च संश्रिताः। मामात्मपरदेहेषु प्रद्विषन्तोऽभ्यसूयकाः।

( १६-१-२० )। कामः क्रोधः लोभश्चेति त्रिविधं नरकस्य द्वारम्। तस्मादेतत् त्रयं त्यजेत्। तत्र विषयाणामसङ्कल्पेन कामं त्यजेत्, कामविवर्जनात् क्रोधं त्यजेत्। अर्थानर्थेक्षया लोभं त्यजेत्। शास्त्रं प्रमाणीकृत्य कर्मसु प्रवर्तेत, निषिद्धेभ्यश्च कर्मभ्यो निवर्तेत। ( १६। २१-२४ )।

सात्त्विकाहारसेवया सात्त्विकं मनो भवति। सात्त्विके मनसि च सात्त्विकी श्रद्धा भवति। अतः सात्त्विकाहारसेवया सात्त्विकीं श्रद्धां भावयेत्। श्रद्धा च गुरुवेदान्तवाक्येषु विश्वासरूपा। सात्त्विकाहाराश्च रस्या हृद्याः स्थिराः स्निग्धा इति। कट्वम्ललवणात्युष्णतीक्ष्णरूक्षविदाहिनः, आहारा राजसस्येष्टा दुःखशोकामयप्रदाः ( १७।७-८ )। यातयामं गतरसं पूति पर्युषितञ्च यत्, उच्छिष्टमपि चामेध्यं भोजनं तामसप्रियम् (१७।१०)।

राजसतामसाहारान्न सेवेत। निष्कामविहितकर्मानुष्ठानं सात्त्विकम्। फलार्थं दम्भेन च विहितं कर्मानुष्ठानं राजसम्। विधिहीनमन्नदानरहितं मन्त्रहीनं दक्षिणारहितं श्रद्धाविरहितं च कर्म तामसम्। तस्मान्निष्कामं कर्म कुर्यात् ( १७।११-१३ )। त्रिविधं तपः सेवेत—शारीरं वाङ्मयं मानसमिति। तत्राद्यम्—देवद्विजगुरुप्राज्ञपूजनं शौचमार्जवं ब्रह्मचर्यमहिंसा च। द्वितीयम्—अनुद्वेगकरं वाक्यं सत्यं प्रियहितं च यत्, स्वाध्यायाभ्यसनञ्चेति। तृतीयं पुनः मनःप्रसादः सौम्यत्वं मौनमात्मविनिग्रहः, भावसंशुद्धिरिति ( १७।१४-१६ )। निष्कामं परया श्रद्धया तप्तमेतत् त्रिविधं तपः सात्त्विकम्। सत्कारमानपूजार्थं दम्भेन च तप्तं राजसम्। मौढ्यमूलकेन हठेनात्मनः पीडया परस्योत्सादनार्थं वा क्रियमाणं तपस्तामसम् (१७।१७–१९)। देशे तीर्थादौ, काले पर्वादौ च अनुपकारिणे पात्राय च विद्यावृत्ततपःसम्पन्नाय दातव्यमिति बुद्ध्या, न तु प्रत्युपचिकारयिषया दीयमानं दानं सात्त्विकम्। प्रत्युपकारार्थं स्वर्गादिफलेच्छया परिक्लेशेन वा क्रियमाणं दानं राजसम्। अदेशे श्मशानादौ, अकाले मीनार्कधनुरर्कादिषु, अपात्रेभ्यो विद्यावृत्ततपोवर्जितेभ्यो यदसत्कारेण अवज्ञया ( तिरस्कारेण ) च दीयते तत्तामसमुदाहृतम् (१७।२०–२२)। मुमुक्षुः ॐ तत्सत् इति प्रणवं व्याहृत्य निष्कामं सात्त्विकं च यज्ञं दानं तपो वा कुर्यात्; यतः 'ॐ तत् सत्' इति त्रिविधो ब्रह्मणो निर्देशः। ओमिति निर्देशो यथा भवति तथा माण्डूक्योपनिषदोऽवधार्यम्। तत् इति श्रुत्यादिप्रसिद्धं सर्वत्र व्याप्तं वा ब्रह्म। सत् इति सदा विद्यमानं शोभनं प्रशस्तं वा। अतो यद् ब्रह्म तदेव सत्, सदा विद्यमानं शोभनं प्रशस्तं वा, नान्यत्। कर्मफलं न सत् इत्यतः कर्म-

फलमनभिसन्धाय सात्त्विकश्रद्धया यज्ञदानतपःक्रिया मुमुक्षुभिः कर्तव्या, न तु फलाभिसन्धानेन; बन्धकत्वात् । नाप्यश्रद्धया, असद्रूपत्वात् ।

गृहस्थो मुमुक्षुर्यज्ञदानतपोरूपाणि सात्त्विकानि कर्माणि आसक्तिं रागद्वेषौ च विहाय कुर्यादेव । सर्वभूतेषु च परस्परं विभक्तेषु घट-शरावादिष्विव मृदादिकं सर्वत्र समन्वितं अविभक्तमेकमविनाशि सर्वस्य जगतः स्वस्य सत्तया भानेन आनन्दात्मकेन च रूपेण सत्ताभानप्रियत्वापादकं वस्तुतत्त्वं पश्येदित्यादेशः । भेददृष्टिर्यतो भयहेतुः, 'द्वितीयाद्वै भयं भवति' इति श्रुतेः ।

कर्म कुर्वन् तत्र धृत्युत्साहौ सिद्ध्यसिद्ध्योर्विकाराभावञ्च समाश्रयेत् । धृतिश्चात्र मनःप्राणेन्द्रियक्रियानिरोधकरी योगानुकूला सात्त्विकी समाश्रयणीया । कर्मणि आसक्तिं कर्तृत्वाभिमानं कर्मफले लोभं पशूनां हिंसां कायवाङ्मनसाशौचं हर्षशोकौ कर्मणि आलस्यं दीर्घसूत्रतामनवधानतामतत्परतां विवादं च परित्यजेत् । मुमुक्षुरात्मबुद्धिप्रसादजं सात्त्विकं सुखमग्रे विषमिव भासमानं परिणामेऽमृतोपमं सर्वदुःखविध्वंसाय निषेवेत, न तु विषयेन्द्रियसंयोगजं राजसम्, न वा निद्रालस्यप्रमादजं तामसम् । आत्मविषया या बुद्धिस्तस्याः प्रसादोऽभ्यासेन नैर्मल्यं तज्जन्यं सुखमात्मबुद्धिप्रसादजपदार्थः । सहजं स्वजात्युचितं कर्म सदोषमपि न त्यजेत् । तेन हि भगवत्प्रीतिः प्रत्यवायानुत्पत्त्या चित्तप्रसादश्च ज्ञानानुकूलौ ।

तत्र मोक्षप्राप्तौ क्रमः—स्वजात्युचितेन भगवत्प्रीत्यर्थमनुष्ठितेन कर्मणा बुद्धिशुद्धिः । विशुद्धबुद्धियुक्तो धृत्या सात्त्विक्या मनःप्राणेन्द्रियाणि निरुध्य बाह्यविषयेभ्यः शब्दादिभ्यः; तेषु रागद्वेषौ च विहाय नदीतटारण्यादिरूपैकान्तदेशसेवनपरो हितमितमेध्यलघ्वाहारो नियतवागादिर्ध्यानयोगतत्परो वैराग्यं परमाश्रितः विचारेण सर्वत्र निरहङ्कारो निर्ममश्च लघ्वाहारेण दुर्बलः, अत एव दर्पकामक्रोधशून्यः कन्थाकौपीनातिरिक्तपरिग्रहवर्जितः सर्वभूतेषु साम्यदृष्टिः भगवद्भक्तिं लभते । भक्त्या भगवतो याथात्म्यमभिजानाति, भगवत्तत्त्वज्ञानाच्च भगवन्तं प्रविशति इत्येकः क्रमः ।

भगवन्तं सर्वान्तर्यामिणं सर्वात्मना प्रपन्नो निष्कामबुद्ध्या भगवत्प्रीत्यर्थं सर्वकर्माणि कुर्वाणोऽपि भगवत्प्रसादात् शाश्वतं पदं मोक्षाख्यं प्राप्नोतीति द्वितीयः क्रमः ।

भगवति भक्तिमान् भगवत्पूजापरो नित्यं भगवन्नमस्कारपरो भगवत्मनाश्च पुरुषो भगवन्तं सच्चिदानन्दघनमाप्नोतीति तृतीयः क्रमः ।

सर्वधर्मपरित्यागपूर्वकं सर्वात्मना भगवन्तं शरणं प्रपद्येत। ततः सर्वप्रत्यवायप्रक्षयेण मुक्तो भवतीति चतुर्थो मोक्षक्रमः। मुमुक्षूणां कृते एष आदेशः, एष उपदेशः, एषा उपनिषद्।

अथ अन्यान्यपि मुमुक्षूणां विधेयानि। यथा—

(१) भूतैर्वाङ्मनःकायैराक्रम्यमाणोऽपि भिक्षुर्न स्वमार्गात् प्रशान्तिलक्षणात् क्षमालक्षणाच्च विचलेदिति क्षितिव्रतं धारयेत्।

(२) सदा परार्थसर्वचेष्टः परार्थमात्रजन्मा साधुरिमं पर्वतव्रतं पर्वतात् शिक्षेत्।

(३) भिक्षुर्यत्किञ्चिदाहारादिकं स्वाद्वस्वादु वा प्राणधारणार्थं कुर्यात्, न तु इन्द्रियाणां तर्पणार्थम्। तथा कृते नात्मज्ञानं नश्यति, न वाऽस्य वाङ्मनसे विषयेषु व्यतिकीर्येते। प्राणो वायुर्यथा स्वादु अस्वादु वा गृह्णाति स्वतृप्त्यै, इन्द्रियं तु रसनं स्वाद्वेव गृहीत्वा तृप्यति इत्येकं प्राणवायुव्रतम्। (४) योगी नानाधर्मेषु विषयेषु संसृज्यमानस्तेषां गुणदोषौ मनसा उपेक्षमाणस्तेषु नावसज्जेत। यथा वायुः पूतेऽपूते सुरभावसुरभौ च विषये संसृज्यमानस्तयोर्गुणदोषौ न गृह्णाति एकान्ततः, इत्यपरं वायुव्रतम्। (५) पार्थिवेषु देहेषु प्रविष्ट आत्मदृष्टिर्योगी देहधर्माऽपि देहधर्मान्नात्मनि गृह्णाति वायुर्विषयगन्धानिवेति तृतीयं वायुव्रतम्।

(६) मुनिः स्थावरजङ्गमेषु मृदादिवत् समन्वयन् सर्वत्रानुगतं दिग्देशकालानवच्छिन्नमसङ्गं व्योमवद्वितततं ब्रह्म तदभिन्नमात्मानञ्च भावयेदित्येकं नभोव्रतम्। (७) कालसृष्टैर्मेघाद्यैरार्तववायुप्रेरितैर्यथा नभो न लिप्यते, तथा कालसृष्टैर्देहेन्द्रियादिभिः पुरुषो न लिप्यते इति भावना द्वितीयं नभोव्रतम्।

(८) स्वच्छो बाह्याभ्यन्तरतः स्वभावतः स्निग्धः मधुरः नृणां तीर्थभूतः वीक्षणोपस्पर्शनकीर्तनक्रियाभिः स्वसङ्गिनो जीवान् मुनिर्जलवत् पावयेदिति मुनेर्जलव्रतम्।

(९) तेजस्वी तपसा प्रदीप्तः वशीकृतचित्तो मुनिः सर्वभक्षोऽपि दुर्धर्षे स्वोदरभाजने अग्निवत् कस्यचिन्मलं नादत्ते इति अग्नेर्व्रतम्। (१०) यथाऽग्निः क्वचिच्छन्नो मलादिना क्वचिच्च स्पष्टो हविर्दातॄणामशुभं दहति, भिक्षुरपि क्वचिच्छन्नरूपः क्वचिच्च स्पष्टरूपः उपासितो भिक्षादिदातॄणामशुभं दहतीत्यपरमग्निव्रतं भिक्षोः। (११) भगवान् स्वमायासृष्टे सदसल्लक्षणे परोक्षापरोक्षे भूतपञ्चके एधसि अग्निरिव प्रविष्टो

ध्यानाद्युपायैश्चाभिग्राह्य इति तृतीयमग्निव्रतम्। (१२) यथाऽग्नेः प्रज्वलतोऽर्चिषां नित्यावपि प्रभवाप्ययौ नैरन्तर्येण हेतुना न लक्ष्येते, तथा प्रवाहवेगेन कालेन भूतानामात्मनो नित्यावपि प्रभवाप्ययौ न लक्ष्येते इति भावना चतुर्थमग्नेर्व्रतम्।

(१३) यथा चन्द्रस्य कलानां विसर्गाद्याः क्षयान्ता भावा अव्यक्तमार्गेण कालेन कृतास्तथा विसर्गाद्याः श्मशानान्ता देहस्य भावास्तादृशेन कालेन अनित्यस्य परिणामिनो देहस्यैव कृताः, न तु नित्यस्यापरिणामिन आत्मन इति भावना भिक्षोश्चन्द्रव्रतम्।

(१४) यथा सूर्यो नित्यं किरणैर्वर्षाभिन्नेषु ऋतषु भूमिष्ठं पय उपादत्ते, किरणैरेव च वर्षाकाले भुवि मुञ्चति, न तु जातु कथञ्चिदपि तैः पयोभिः संसृज्यते, तथैव योगी इन्द्रियैरिन्द्रियविषयानुपादत्ते, स्वापादौ च तान् विमुञ्चति, न तु स्वयं तेषु विषयेषु सज्जते, इत्येषा भावना भिक्षोः सूर्यव्रतमेकम्। (१५) स्थूलमतिभिः शरावादौ प्रतिबिम्बभूतः सूर्यो बिम्बादभेदेन न गृह्यते, किञ्च शरावादिस्थो लक्ष्यते, तथा अन्तःकरणे ब्रह्मप्रतिबिम्बो जीवः स्थूलमतिभिः ब्रह्माभेदेन न गृह्यते, बुद्धिस्थश्च लक्ष्यते। कुशाग्रमतिस्तु बुद्ध्या विमृश्य जीवब्रह्मणोरैक्यबुद्धिं सम्पादयति इत्यपि भिक्षोरादित्यात् शिक्षितव्यम्।

(१६) क्वापि केनचित्सहातिस्नेहः प्रसङ्गो वा न कार्यः, कुर्वन् सन्तापं विन्दति कपोत इव। कथानकश्चायं भागवते भारते च वर्णितः।

(१७) ऐन्द्रियकं सुखं दुःखवत्सर्वत्र भाग्यानुसारेण लभ्यत एवेति तन्नेच्छेत्, किन्तु यथारब्धलब्धं भुञ्जीत।

(१८) मुनिर्वृत्त्यर्थमक्रियो यदृच्छयाऽऽपतितं सुमृष्टं विरसं वा महान्तं स्तोकं वा ग्रासं भुञ्जीत, तदेतदाजगरव्रतम्। (१९) यदि ग्रासो न प्राप्नुयात् तदा भूरिदिनानि अजगर इव शयीत निराहारो निरारम्भः प्रारब्धं भुञ्जानः। तदेतदपि आजगरव्रतम्।

(२०) तेजोबलसमन्वितं शरीरं बिभ्रदपि यतिः किञ्चिन्नारभेत, दिवा शयीत निशि च वीतनिद्रो भवेत् मनःसमाधानाय।

(२१) मुनिः समुद्र इव प्रसन्नगम्भीरो परैर्दुरवगाहचित्तः पश्यतामनन्तपारः कामादिवातैरक्षोभ्यः शान्तोद इव शान्तचित्तो भवेदिति मुनेः सामुद्रव्रतम्। (२२) सदा नारायणं ध्यायन् मुनिः सरिद्भिः संयुक्तो वियुक्तैश्च सागर इव समृद्धकामः स्वमार्गान्न विचलेत्। काम्याहारादिहीनश्च न शुष्येत। तदपि सामुद्रव्रतम्।

(२३) अग्नौ पतङ्गवत् स्त्रियामासक्तो विनश्यति ज्ञानाप्राप्त्या, तस्मात्तत्र न सज्जेत इति पतङ्गात् शिक्षितव्यम्।

(२४) मुनिरेकस्मिन्नेव गृहे न भिक्षेत। तेन गृहस्थस्य हिंसा भवति, अतः पञ्च सप्त वा गृहान् भिक्षेत। स्तोकयैव भिक्षया देहवृत्तिं कुर्यात् कामादिजयाय, तदेतन्माधुकरं व्रतम्। (२५) अणुभ्यो महद्भ्यश्च शास्त्रेभ्यः सारमेवाददीत, पुष्पेभ्यः षट्पद इव, तदेतदपि माधुकरं व्रतम्।

(२६) मुनिः सायंकाले भोक्तुं परदिने वा भोक्तुं भिक्षितमन्नं न संगृह्णीयात्, यथा मक्षिका मधु संगृह्णाति; संगृह्णन् मक्षिकेव विनश्यति। ततश्च पाणिपात्र उदरामत्रो भवेत्। तदेतन्मक्षिकातः शिक्षितव्यम्।

(२७) भिक्षुर्दारवीमपि स्त्रियं पदादपि न स्पृशेत्। स्पृशन् करिण्यामनङ्गवशं गतः करीव निबध्येत्। किञ्च तादृशो गजोऽन्यगजैर्वा बलाधिकैरिव स्त्रीसक्तः पुमान् बलाधिकैर्हन्येदिति तदेतद् गजात् शिक्षितव्यम्।

(२८) यल्लुब्धैर्दुःखेन सञ्चितं तद्वस्तु यतिना नादेयं न चोपभोग्यम्, तत्त्यागे तस्य दुःखजननात्। तस्य तत्सञ्चितं तु अन्यः कश्चिद् भोक्ष्यत्येव। यथा मधुहा मधु मक्षिकां निहत्य। एतदपि मक्षिकातः शिक्षितव्यम्।

(२९) संचयं विनापि अन्नं संचितवतां गृहस्थानामग्रतो यतिर्भुङ्क्ते इति भिक्षुणा संचयो न कर्तव्यः।

(३०) ग्राम्यगीतं शृण्वन् वनचरो मुनिर्मृगयुगीतं शृण्वन् मृग इव बध्यते इति पाशबद्धात् हरिणात् शिक्षेत। योषितां ग्राम्यगीतं शृण्वन् ऋष्यशृङ्गो मृगीसुतो योषितां वश्यः क्रीडनक इव बभूवेति इतिहासपुराणयोः प्रसिद्धिः।

(३१) यथा रसविमोहितो मीनो बडिशैर्मृत्युं प्राप्नोति तथा मधुरादिरसविमोहितो नरो मृत्युमृच्छतीति मीनात् शिक्षेत।

(३२) इन्द्रियजयोपायस्तु आहाराल्पत्वम्, परं तेनापि रसनेन्द्रियजयो न भवति। अतो रसनेन्द्रियजयो महता यत्नेन निरोधाभ्यासेन वैराग्येण च सम्पाद्यः।

(३३) पिङ्गलेव निर्वेदेन देहादौ ममताम्, आशापाशशतञ्च छित्त्वा सन्तोषश्रद्धे पुरस्कृत्य यथारब्धलब्धेन जीवनाय व्यवहरेत्।

(३४) भिक्षुरप्रमत्तः कालाहिना ग्रस्तं समस्तं जगत् पश्येत्। तदेतत्परमविरागकरणमात्मदर्शनोपायतत्परत्वे च कारणम्।

( ३५ ) सामिषं कुररं जघ्नुः पक्षिणो ये निरामिषाः, ततः सामिषात् कुररात्परिग्रहो न कर्तव्य इति शिक्षेत।

( ३६ ) भिक्षुर्मानापमानबुद्धिशून्यः सर्वविधचिन्ताविनिर्मुक्त आत्मरतिर्बालवद् विचरेत्। तदेतद् बालतः शिक्षेत।

( ३७ ) वासे बहूनां कलहो द्वयोर्वार्ता भवेद् ध्रुवम्। अत एक एव चरेद् विद्वान् कुमार्या इव कङ्कणः इति कुमारीतः शिक्षेत।

( ३८ ) इषुकारवदात्मनि भगवति भावं निरुन्ध्यात् इति इषुकारात् शिक्षितव्यम्।

( ३९ ) यतिरनियतवासः सर्प इव परकृतं वेश्म प्रविश्य शयीत, स्वप्नान्ते तच्च जह्यात्, गृहारम्भस्य दुःखकरत्वादनियतत्वाच्च वासस्य।

( ४० ) स्नेहाद् द्वेषाद् भयाद्वा क्वचिदासक्तं मनो निवर्त्य भगवत्यात्मनि वा युञ्जीत; अन्यथा तत्तद्भावप्राप्तिः। यथा पेशस्कृतं ध्यायन् कुड्ये तेन प्रवेशितः। कीटः तत्समतां याति पूर्वरूपमसंत्यजन्। तदेतत्तस्मात् शिक्षितव्यम्।

काशीनाथतनूजेन हरिनाथानुजन्मना।
बलियामण्डलान्तःस्थे छाताग्रामे जनुर्भृता॥ १॥
मुमुक्षूणां भवारण्ये मार्गं मृगयतां मुहुः।
सौभद्ररघुनाथेन कृता पद्धतिरुत्तमा॥ २॥



# गुरुविनेयधर्मविमर्शः

सह नाववतु सह नौ भुनक्तु सह वीर्यं करवावहै ।
तेजस्वि नावधीतमस्तु मा विद्विषावहै ॥

अथातो गुरुविनेयधर्मान् व्याख्यास्यामः । यतः स्वाध्यायाध्ययनसिद्धिस्त एते धर्माः । तत्र उपनयनम्, शौचाचारशिक्षणम्, अध्यापनम्, समावर्त्तनं चेति मुख्या आचार्यधर्माः । तत्र मानं तु—"अष्टवर्षं ब्राह्मणमुपनयीत तं वेदमध्यापयीत, द्वादशवर्षं राजन्यम्, पञ्चदशवर्षं वैश्यम्" इत्यादयः श्रुतयः । "वसन्ते ब्राह्मणमुपनयीत, ग्रीष्मे राजन्यम्, शरदि वैश्यम्", "गर्भाष्टमेषु ब्राह्मणम्", "गर्भैकादशेषु राजन्यम्", "गर्भद्वादशेषु वैश्यम्" (आपस्तम्बधर्मसूत्रे प्र० १ क० ) सप्तमे ब्रह्मवर्चसकामम्-२१, अष्टमे आयुष्कामम्-२२, नवमे तेजस्कामम्-२३, दशमेऽन्नाद्यकामम्-२४, एकादशे इन्द्रियकामम्-२५, द्वादशे पशुकामम्-२६ ।

उपनयनकालावधिश्च तत्रैवोक्तः—"ततः परं व्रात्यसंस्कारोऽपि प्रायश्चित्तरूपः, आषोडशाद् ब्राह्मणस्यानात्याय, आद्वाविंशात् क्षत्रियस्याचतुर्विंशाद् वैश्यस्य यथा व्रतेषु समर्थः स्याद् यानि वक्ष्यामः ॥ २७ ॥ अतिक्रान्ते सावित्र्या ऋतुं त्रैविद्यकं ब्रह्मचर्यं चरेत् ॥ २८ ॥" इत्यादि ।

उपनयनलक्षणं तु—उपनयनं विद्यार्थस्य श्रुतितः संस्कारः ॥ ९ ॥ (आपस्तम्बधर्मसूत्रे प्र० १ क० १ ) विद्या अर्थः प्रयोजनं यस्य स विद्यार्थस्तस्यायं श्रुतिविहितः संस्कारः, उपनयनं नाम। विद्यार्थस्येति वचनान्मूकादेर्न भवति । तथा च शङ्खलिखितौ "नोन्मत्तमूकान् संस्कुर्यात्" इति । लिङ्गस्याविवक्षितत्वत् स्त्रिया अपि न भवति । यद्यपि तस्या अपि "अग्ने गृहपते" इत्यादिकया विद्यया अर्थः । श्रुतित इति वचनं तदतिक्रमे श्रौतातिक्रमप्रायश्चित्तार्थमिति तद्व्याख्यातारः । यद्यपि प्रागुक्तं शङ्खलिखितवचनमिदानीन्तनमुद्रितपुस्तकेषु नोपलभ्यते, तथापि विद्यार्थस्येति वचनाद् विद्याग्रहणसमर्थानामेवोपनयनाधिकारो नोन्मत्तमूकादीनां तदसमर्थानामिति गम्यत एव । यद्यपि गुरुसमीपदेशाधिकरणकं पित्रादिकर्तृकं बटुकर्मकं प्रापणमुपनयनपदस्य शक्यार्थः, तथापि तत्साध्ये संस्कारे तत्पदस्य

लक्षणा, न तूपनयनपदं तत्र पारिभाषिकम्; आधुनिकसंकेतस्य परिभाषात्वात्, उपनयनस्य च श्रुत्यादिप्रसिद्धत्वेनानादित्वात्। श्रुतावप्युपनयीतेत्यस्योपनयनेन संस्कुर्यादित्यर्थः। उपनयनप्रकारस्तु प्रासङ्गिकत्वाद् विस्तृतत्वात् प्रसिद्धत्वाच्चात्रोपेक्ष्यते।

यद्यपि प्रतिवेदाध्ययनं व्रतानि भिद्यन्ते, तथाप्युपनयनं न भिद्यते।

त्रिभ्य एव तु वेदेभ्यः पादं पादमदूदुहत्।
तदित्यृचोऽस्याः सावित्र्याः परमेष्ठी प्रजापतिः॥ इति मनुः।

ततश्चोपनयने यत्सावित्र्या अनुवचनं तन्मुखेन सर्वे वेदा अनूक्ता भवन्तीत्यगृह्यमाणविशेषत्वादेकमेवोपनयनं सर्वार्थमिति। एकस्मिन् वेदेऽधीतेऽप्याथर्वणस्य वेदस्य तु पृथगुपनयनं कर्तव्यमेव। तथा च तत्रैव पठ्यते—नान्यत्र संस्कृतो भृग्वङ्गिरसोऽधीयीतेति। एतच्चोपनयनमाचार्यधर्मं इत्युक्तं प्राक्। आचार्यलक्षणं तु—

उपनीय तु यः शिष्यं वेदमध्यापयेद् द्विजः।
सकल्पं सरहस्यं च तमाचार्यं प्रचक्षते॥ (मनु० २।१४०)

उपाध्यायलक्षणं तु—

एकदेशं तु वेदस्य वेदाङ्गस्यापि वा पुनः।
योऽध्यापयति वृत्त्यर्थमुपाध्यायः स उच्यते॥ (मनु० २।१४१)

गुरुलक्षणं तु—

निषेकादीनि कर्माणि यः करोति यथाविधि।
सम्भावयति चान्नेन स विप्रो गुरुरुच्यते॥ (मनु० २।१४२)

यो ब्राह्मणः शिष्यमुपनीय कल्परहस्यसहितां वेदशाखां सर्वामध्यापयति तमाचार्यं पूर्वे मुनयो वदन्ति। कल्पो यज्ञविद्या। रहस्यमुपनिषद्। वेदत्वेऽप्युपनिषदः प्राधान्यविवक्षया पृथङ्निर्देशः॥ १४०॥ वेदस्यैकदेशं मन्त्रं ब्राह्मणञ्च वेदरहितानि व्याकरणादीन्यङ्गानि यो वृत्त्यर्थमध्यापयति स उपाध्याय उच्यते॥ १४१॥ निषेको गर्भाधानं तेन पितुरयं गुरुत्वोपदेशः। गर्भाधानादीनि संस्कारकर्माणि पितुरुपदिष्टानि। यथाशास्त्रं यः करोति, अन्नेन च संवर्धयति स विप्रो गुरुरुच्यत इति तद्व्याख्यातारः॥ १४२॥ एवमेते आचार्योपाध्यायगुरवो यद्यपि परस्परमसङ्कीर्णास्तथाप्यध्यापनधर्मेण सामान्येन गौण्या वृत्त्या लोके शास्त्रे च क्वचित् कदाचित् सङ्कीर्यन्तेऽपि।

उपनयनानन्तरं प्रागुक्तगुरुत्रयकर्तृकं शौचाचारशिक्षणं गुरुधर्मः—"उपनीय गुरुः शिष्यं शौचाचारांश्च शिक्षयेत्" इति । तत्र शौचाचाराः शिष्यधर्मा अग्रे निरूपयितव्याः । तन्निरूपणनिरूप्यमेव तु तच्छिक्षणमिति तन्नेह प्रतन्यते । अध्यापनकर्तृत्वं तु ब्राह्मणस्यैव, पूर्वोदाहृतमनूक्तश्लोकत्रये उपक्रमोपसंहारश्लोकयोर्द्विजविप्रशब्दश्रवणात्, मध्येऽपि सन्दंशन्यायेनानुकर्षणापकर्षणाभ्यां वा तच्छब्दसम्बन्धसम्भवात् । अध्यापनकर्मत्वं तु ब्राह्मणक्षत्रियवैश्यानां त्रयाणाम् । विप्रस्यैवाध्यापनकर्तृत्वे प्रमाणं तु—

षण्णां तु कर्मणामस्य त्रीणि कर्माणि जीविका ।
याजनाध्यापने चैव विशुद्धाच्च प्रतिग्रहः ॥ इति ।

अत्रास्येतिपदं विप्रबोधकम्, प्रकरणात् । ब्राह्मणेनावश्यं शब्दा ज्ञेयाः" इति पस्पशाह्निकस्थभाष्यव्याख्यावसरे कैयटोऽप्याह —"अध्यापनं च ब्राह्मणस्य वृत्तिर्न ह्यव्याकरणज्ञमुपश्लिष्यन्ति शिष्याः" इति । अध्याप्यानध्याप्यत्वे तु यद्यपि शिष्यधर्मौ, तथाप्यध्यापनसम्बन्धादत्रैव निरूपयिष्येते । यद्यपि भृतकाध्यापनाध्ययने निषिद्धे—

भृतकाध्यापको यश्च भृतकाध्यापितस्तथा ।
शूद्रशिष्यो गुरुश्चैव वाग्दुष्टः कुण्डगोलकौ ॥ इति ।

( मनु० ३।१५६ )

तथापि तत्र शिष्याद् भृतिग्रहणपूर्वकमध्यापनं शिष्यस्य च भृतिदानेनाध्ययनं निषिद्धमित्यन्यतो भृतिग्रहणेन शिष्याध्यापने गुरोः शिष्यस्य चाध्ययने न कोऽपि प्रत्यवाय इति शिष्टसम्मतः पन्थाः । कीदृशः शिष्योऽध्याप्यस्तत्राह मनुः—

आचार्यपुत्रः शुश्रूषुर्ज्ञानदो धार्मिकः शुचिः ।
आप्तः शक्तोऽर्थदः साधुः स्वोऽध्याप्या दश धर्मतः ॥

( २।१०९ )

आचार्यपुत्रः, परिचारकः, ज्ञानान्तरदाता, धर्मवित्, मृद्वार्यादिषु शुचिः, बान्धवः, ग्रहणधारणसमर्थः, धनदाता, हितेच्छुः, ज्ञातिः, दशैते धर्मणाध्याप्या इति तद्व्याख्यातारः । अन्येऽप्यध्यापने नियमा मनुना प्रदर्शिताः—

नापृष्टः कस्यचिद् ब्रूयान्न चान्यायेन पृच्छतः ।
जानन्नपि हि मेधावी जडवल्लोक आचरेत् ॥
अधर्मेण च यः प्राह यश्चाधर्मेण पृच्छति ।
तयोरन्यतरः प्रैति विद्वेषं वाधिगच्छति ॥

धर्मार्थौ यत्र न स्यातां शुश्रूषा वापि तद्विधा ।
तत्र विद्या न वप्तव्या शुभं बीजमिवोषरे ॥
विद्ययैव समं कामं मर्तव्यं ब्रह्मवादिना ।
आपद्यपि हि घोरायां न त्वेनामिरिणे वपेत् ॥
विद्या ब्राह्मणमेत्याह शेवधिस्तेऽस्मि रक्ष माम् ।
असूकाय मां मा दास्तथा स्यां वीर्यवत्तमा ॥
यमेव तु शुचिं विद्यान्नियतब्रह्मचारिणम् ।
तस्मै मां ब्रूहि विप्राय निधिपायाप्रमादिने ॥

( मनु० २।११०-११५ )

तत्र प्रघट्टके प्रथमश्लोके कस्यचिदित्यस्य शिष्यातिरिक्तस्येति शेषः । शिष्यस्य तु अपृष्टोऽपि हितं ब्रूयादित्यर्थः । अन्यायश्चात्र भक्तिश्रद्धादिरूप-प्रश्नधर्मोल्लङ्घनरूपः । द्वितीयश्लोके म्रैति = म्रियते इत्यर्थः । तृतीये पद्ये धर्मार्थौ यत्र न स्यातामित्युक्त्वा भृतकाध्यापकत्वदोषप्रसङ्गस्तु न, यद्येता-वन्मह्यं दीयते तदैतावदध्यापयामीति नियमाभावात् । यद्यपि समावर्तनं स्वगृह्योक्तविधिना स्नानविशेषप्रयोज्यविद्याव्रतसमाप्तिरूपं शिष्यधर्मस्तथापि तत्प्रयोजकत्वरूपं तद् हेतुमण्णिचि गुरुधर्मः । तच्च स्नातकत्रैविध्यात् त्रिविधम् । स्नातकत्रैविध्यं त्वाह हारीतः—"त्रयः स्नातका भवन्ति विद्या-स्नातको व्रतस्नातको विद्याव्रतस्नातकश्च" इति । यः समाप्य वेदमसमाप्य व्रतानि समावर्तते स विद्यास्नातकः । यः समाप्य व्रतानि असमाप्य वेदं समावर्तते स व्रतस्नातकः । उभयं समाप्य समावर्तते यः स विद्याव्रत-स्नातक इति तदभिप्रायः ।

तथाविधसमावर्तने प्रमाणं तु मनुः—

तं प्रतीतं स्वधर्मेण ब्रह्मदायहरं पितुः ।
स्रग्विणं तल्प आसीनमर्हयेत्प्रथमं गवा ॥ ( ३।३ )
गुरुणानुमतः स्नात्वा समावृत्तो यथाविधि ।
उद्वहेत द्विजो भार्यां सवर्णां लक्षणान्विताम् ॥ ( ३।४ )

अत्र प्रथमश्लोके "अर्हयेत्' इत्यस्य कर्ता पितुरध्यापकत्वे पितैव, अन्यथा तु आचार्यः । एवं निरूपिताश्चत्वार उपनयनादय आचार्यधर्माः समाप्ताः, किन्तु सन्त्यन्येऽप्यध्यापनाङ्गभूता आचार्यधर्माः, ते विशेषेणास्मिन् कराले सर्वधर्मदृष्टिविलोपिनि कालेऽपेक्षिता इत्युपन्यस्यन्ते । तथा हि—

अहिंसयैव भूतानां कार्यं श्रेयोऽनुशासनम् ।
वाक्चैव मधुरा श्लक्ष्णा प्रयोज्या धर्ममिच्छता ॥

(मनु० २।१५९)

अत्र भूतानां शिष्याणामित्यर्थः, प्रकरणात् । अहिंसया अनतिहिंसया ।

सत्यधर्मार्यवृत्तेषु शौचे चैवारमेत् सदा ।
शिष्यांश्च शिष्याद् धर्मेण वाग्बाहूदरसंयतः ॥

(मनु० ४।१७५)

"पुत्रमिवैनमनुकाङ्क्षन् सर्वधर्मेष्वनपच्छादयमानः सुयुक्तो विद्यां ग्राहयेत्" (आपस्तम्बधर्मसूत्रे, कण्डिका ८ सूत्रसं० २५)। एनं शिष्यं पुत्रमिवास्याभ्युदयः स्यादित्यनुकाङ्क्षन् सर्वेषु धर्मेषु किञ्चिदप्यनपच्छादयमानोऽगूहन्, सुयुक्तः सुष्ठु अवहितः, तत्परो भूत्वा विद्यां ग्राहयेदिति तद्व्याख्यातारः ।

"न चैनमध्ययनविघ्नेनात्मार्थेषु उपरुन्ध्यादनापत्सु" (तत्रैव-२६), "अन्तेवास्यनन्तेवासी भवत्यविनिहितात्मा गुरावनैपुणमापद्यमानः" (तत्रैव-२७) नानेन गुरुणायं प्रदेशः सम्यगुक्त इति योऽन्तेवासी गुरावनैपुणमापादयति, सोऽन्तेवासी न भवति, त्याज्य इत्यर्थः ।

"आचार्योऽप्यनाचार्यो भवति श्रुतात् परिहरमाणः" (तत्रैव २८) श्रुतात्परिहरमाणस्तेन तेन व्याजेन विद्याप्रदानमकुर्वन् आचार्योऽपि त्याज्यो भवतीत्यर्थः । "अपराधेषु चैनं सततमुपालभेत" (तत्रैव-२९) अपराधेषु कृतेषु एनं शिष्यं सततमुपालभेत । इदमयुक्तं त्वया कृतमित्यादिरूपेणेत्यर्थः। "अभित्रास उपवास उदकोपस्पर्शनमदर्शनमिति दण्डा यथामात्रमानिवृत्तेः" (तत्रैव ३०) अभित्रासो भयोत्पादनम्, उपवासो भोजनलोपः, उदकोपस्पर्शनं शीतोदकेन स्नापनम्, अदर्शनं यथात्मानं न पश्यति तथा करणम्, गृहप्रवेशनिषेध इत्यर्थः । इत्येते शिष्यस्य दण्डा यथापराधं यावदसावपराधान्न निवर्तत इत्यर्थः । इति समासेन गुरुधर्माः ।

अथावसरप्राप्ता विनेयधर्माः—"आचार्याधीनः स्यादन्यत्र पतनीयेभ्यः" (आपस्तम्बधर्मसूत्रे, कण्डिका सूत्रसं० १९) पतनीयेभ्यः पापकर्मभ्यो ब्रह्मवधादिभ्योऽन्यत्रेत्यर्थः । पापकर्मसु न गुरुपराधीनः शिष्य इत्यर्थः । "हितकारी गुरोरप्रतिलोमयन् वाचा" (तत्रैव २०) वाचा प्रातिलोम्यमकुर्वन् इत्यर्थः । "अधासनशायी" (तत्रैव २१) गुरुसन्निधावध आसीत, अधः शयीतेत्यर्थः । "असन्नश्लाघः" (तत्रैव २७) श्लाघात्र शोभा म्रक्षणादिना मुखादिकमुज्ज्वलं न कुर्यादित्यर्थः । "जटिलः" (तत्रैव ३१)

शिखाजटो वा वापयेदितरान् ( ३२ ), "अनृतदर्शी" ( आपस्तम्बधर्मसूत्रे, कण्डिका ३ सूत्रसं० ११ ) "समाजाँश्चागन्ता" ( तत्रैव १२ ) धूर्तादिस्थानं सभाऽत्र, उत्सवादिषु समवायः समाजः, ताः सभाः समाजाँश्च, अगन्ता ताच्छील्येन न गच्छेत्, यदृच्छया गमने न दोषः। "अजनवादशीलः" ( तत्रैव १३ ) जनवादः परिवादः निन्दा, लोकवार्ता वा, तच्छीलो न स्यादित्यर्थः। "रहःशीलः" ( १४ ) सति समये रहःशीलः स्यात्। "गुरोरुदाचारेष्वकर्ता स्वैरकर्माणि" ( १५ ) येषु प्रदेशेषु गुरुः पौनःपुन्येन चरति तेषु प्रदेशेषु स्वैरकर्माणि मित्रैः सह हासादिकं न कुर्यादित्यर्थः। "स्त्रीभिर्यावदर्थं सम्भाषी" ( १६ ) यावत्प्रयोजनं तावदेव भाषेत। अतिबालाभिरतिवृद्धाभिश्च न दोषः। "मृदुः" ( १७ ) क्षमावान् इत्यर्थः। "शान्तः" ( १८ ) इन्द्रियाणामसद्विषये प्रवृत्त्यभावः शमः, तद्वानित्यर्थः। "दान्तः" ( १९ ) विहितेषु कर्मस्वग्लानिर्दमः। तद्वानित्यर्थः। "ह्रीमान्" ( २० ), "दृढधृतिः" ( २१ ) इष्टेऽनिष्टे वा धृतावेवावस्थितः स्यात्, न हृष्येन्न विषीदेदित्यर्थः। "अग्लास्नुः" ( २२ ) उत्साहसम्पन्न इत्यर्थः। "अक्रोधनः" ( २३ ) "अनसूयुः" ( २४ ) पराभ्युदयानुसन्तापः असूया, तच्छीलो न स्यात्। "न चोच्छिष्टं कुर्यात्" ( ३७ ) यावच्छक्नोति भोक्तुं तावदेव भोजनपात्रे कृत्वा भुञ्जीत। अशक्तौ भूमौ निखनेत्" ( ३८ ) अप्सु वा प्रवेशयेत्।

"अथाहरहराचार्यं गोपायेद् धर्मार्थयुक्तैः कर्मभिः" ( आपस्तम्बधर्मसूत्रे, कण्डिका ४ सूत्रसंख्या २३ )। आचार्यस्य धर्मकृत्येष्वर्थकृत्येषु च साहाय्यकरणेनाचार्यं गोपायेदित्यर्थः। "प्रमादादाचार्यस्य बुद्धिपूर्वं वा नियमातिक्रमं रहसि बोधयेत्" ( २५ ) इत्थमयं नियमः पूज्यपादैरतिक्रम्यत इति रहस्याचार्यं बोधयेन्न जनसमक्षम्।

शिष्यधर्मा लक्षणतस्त्रिविधाः—गुरुप्रसादनीयानि कर्माणि स्वस्त्ययनमध्ययनसंवृत्तिरिति ( आपस्तम्बधर्मसूत्रे, कण्डिका ५ सूत्रसंख्या ९ )। गुरुप्रसादनीयानि गुरुपादप्रक्षालनादीनि। स्वस्त्ययनं त्रिविधम्—दृष्टार्थमदृष्टार्थमुभयार्थञ्च। दृष्टार्थं बाहुनदीतरणादिनिषेधः। अदृष्टार्थं क्षारादिभोजननिषेधः। उभयार्थं भिक्षाचरणादि। अध्ययनसंवृत्तिः, अधीतस्याभ्यास इति।

एवमत्र गुरुविनेयधर्माः संक्षेपत उक्ताः प्रसक्तानुप्रसक्तं च किञ्चित्। विशेषजिज्ञासुभिरापस्तबम्धर्मसूत्रप्रभृतयो धर्मशास्त्रग्रन्था अवलोकनीया इति शम्॥

( १८ )

# गैरिकसूत्राणि

सवृत्तिकानि

( जम्बुपनामकगङ्गारामोन्नीतानि )

**श्रीगणेशाय नम इति सर्वत्र ॥ १ ॥**

इतिशब्दात् [1]सरस्वत्या इत्यादि ॥ १ ॥

## विवरणम्

मूले—सर्वत्रेति। आदौ रञ्जयेदिति शेषः। ग्रन्थारम्भे प्रकरणारम्भ इति तदर्थः। सर्वत्रेत्यस्य सर्वेषु पदेष्वित्यर्थः। वृत्तौ—इतिशब्दादिति। सादृश्यकार्थादिति शेषः। तथा चेदं फलितम्—श्रीगणेशाय नम इत्येतत्सदृशे सरस्वत्यै नम इत्यादिके वाक्येऽपि सर्वत्र गैरिकं लापनीयमित्येतद्वाक्योन्नीतेन कुत्र कुत्र गैरिकं लापनीयमिति प्रश्नवाक्येनैकवाक्यतया लभ्यते ॥ १ ॥

**प्रतीकस्याद्यन्तयोरन्यतरत्र ॥ २ ॥**

व्याख्येयव्याख्यानयोरावापोद्वापाभ्यामुद्भूतावयवभावं [2]हि प्रतीकमुच्यते। किमुच्यते? भुजावष्टब्धो भुजखण्ड इति। अमुं योगं भङ्क्त्वा सर्वत्रेत्येकवाक्यतया व्याख्याय सूत्रशृङ्खलितमहाभाष्यादौ सूत्रादौ सर्वत्रेत्यपि पक्षः समर्थिता [ तः ] समासपक्षेण [3]ज्ञाप्यते। [4]यथासम्प्रदायं व्यवस्थासिद्धयेऽन्यतरग्रहणम् ॥ २ ॥

## विवरणम्

वृत्तौ—व्याख्येयव्याख्यानयोरिति। आवापोद्वापाभ्यां व्याख्येयव्याख्यानयोरुद्भूतावयवभावं हि प्रतीकमुच्यत इति योजना। यत् स्वस्य व्याख्यान-

---

1. अत्र 'सरस्वत्यै इत्यादि' इति च्छेदः। 'सरस्वत्यादि' इति-ख०।
2. 'हि' नास्ति-क०।
3. न ज्ञाप्यते-क०।
4. तथा-क०।

वाक्ये आवापेन, व्याख्येयवाक्यात् स्वस्य उद्वापेन उद्धरणेन व्याख्येय-वाक्यघटकेतरांशस्य त्यागेन वा, व्याख्येयव्याख्यानवाक्ययोरवयवत्वेन स्फुटं प्रतीयते तत्प्रतीकमित्यर्थः। किमुच्यत इति। प्रतीकस्योदाहरणं किमुच्यत इति प्रश्नः। उत्तरम्—भुजावष्टब्धो भुजखण्ड इति। अत्र भुजावष्टब्ध इति व्याख्येयत्वेन प्रतीकम्। भुजखण्ड इति तस्य व्याख्यानम्। अत्र भुजखण्डशब्दे व्याख्यानभूते भुजशब्दस्यावापः, अवष्टब्धशब्दस्य च व्याख्येयगतस्योद्वापः। भुजेन भुजे वाऽवष्टब्धः संश्लिष्टो भुजावष्टब्धः। भुजं च हस्ताग्रमात्रमुच्यते, भुज्यते येन तद्भुजमिति व्युत्पत्त्या। भुजखण्ड इति भुजसंश्लिष्टः शरीरस्य खण्डविशेषः पूर्णो हस्त उच्यते। भुजदण्ड इति वा व्याख्येयम्। अमुं योगमिति। अमुं योगं प्रतीकस्याद्यन्तयोरन्यतरत्रेति सूत्रम्, भङ्क्त्वा प्रतीकस्येति पदं सूत्रात् पृथक्कृत्य, सर्वत्रेत्येकवाक्यतया पूर्वसूत्रघटकेन सर्वत्रेत्यनेनानुवृत्त्यैकवाक्यतया, व्याख्याय प्रतीकस्य सर्वत्र रञ्जनीयमिति व्याख्याय, योगविभागस्येष्टसिद्धयर्थत्वेन सूत्रशृङ्खलितमहाभाष्यादौ सूत्ररूपेण प्रतीकेन नियन्त्रिते तद्व्याख्यानभूते महाभाष्यादौ महाभाष्ये वृत्तौ च, सूत्रादौ प्रतीकस्य सूत्रस्य आदौ, सर्वत्र महाभाष्ये वृत्तौ च रञ्जनीयमित्यादिपदाध्याहारेण व्याख्येयमित्यपि पक्षः समर्थितः। समासपक्षेण, समासः संक्षेपस्तद्रूपेण पक्षेण ज्ञाप्यते, इमं योगं भङ्क्त्वा संक्षेपेणायमपि पक्षः समर्थितो ज्ञाप्यत इति लब्धम्। यथासम्प्रदायमिति। सूत्रेऽन्यतरत्रेत्यत्र यथासम्प्रदायमित्यध्याहृत्य यथासम्प्रदायं व्यवस्थितमेवान्यतरत्र रञ्जनं विधीयते, न तु स्वेच्छाहेतुकमव्यवस्थितम्। रञ्जनं व्यवस्थापयितुं प्रवृत्तस्य सूत्रकृतस्तथाविधानानौचित्यादिति भावः ॥ २ ॥

**शङ्कामतान्तरयोस्तयोर्द्वयोः ॥ ३ ॥**

अनुवृत्त्यैव सिद्धे तयोर्ग्रहणमन्तर्गतयोस्तयोर्यथा स्यात्। 'निषेधस्य च' [ सू० ५ ] इत्यनेनैव सिद्धे द्वयोर्ग्रहणम् 'आहुः' आदिषु यथा स्यात् ॥ ३ ॥

## विवरणम्

मूले—शङ्कामतान्तरयोरिति। शङ्का—ननु, न च, अथ, स्यादेतद् इत्यादिशब्दोपक्रमेण पूर्वपक्षोपन्यासः। मतान्तरम्—यद्वा, अथवा, परे तु, केचित्तु, अन्ये तु, इत्यादिशब्दैः पक्षान्तरोपन्यासः। तयोरिति। तत्पदेन प्रागुक्तयोराद्यन्तयोः परामर्शः। तथा च शङ्कामतान्तरयोर्द्वयोरप्याद्यन्तयो रञ्जनीयमित्यर्थः संपद्यते। वृत्तौ—अनुवृत्त्यैव सिद्ध इति। पूर्वसूत्रादाद्यन्त-

योरित्यस्यानुवृत्त्यैव सिद्ध इत्यर्थः। अन्तर्गतयोस्तयोर्यथा स्यादिति। यत्र महावाक्यघटकाऽवान्तरवाक्यगता शङ्का मतान्तरं वा तथाविधं तत्रापि शङ्कामतान्तराद्यन्तयोर्यथा स्यादित्यर्थः। अन्यथा यत्र शङ्कामतान्तरयोः स्वातन्त्र्येणोपादानं तत्रैव निरतिशयाऽऽदित्वाऽन्तत्वसत्त्वेन तत्रैव स्यादिति भावः। निषेधस्य चेत्यनेनैव सिद्ध इति। 'निषेधस्य च' इत्यग्रिमसूत्रे चकारेण शङ्कामतान्तरयोः समुच्चयेनैव सिद्ध इत्यर्थः। द्वयोर्ग्रहणमिति। शङ्कामतान्तरयोर्द्वयोः पृथक् सूत्रे ग्रहणमित्यर्थः। आहुरादिषु यथा स्यादिति। अयं भावः—शङ्कामतान्तरयोर्द्वयोः पृथक् सूत्रे उपादाने निषेधस्य चेति चकारेण आहुरादीनां समुच्चयो भवति। अन्यथा तु शङ्कामतान्तरयोरेव मतान्तरप्रतिक्षेपरूपत्वेन निषेधसजातीययोः समुच्चयः स्यात्, न त्वाहुरादीनामतद्रूपाणाम्। तयोरन्यत्रोक्तौ तु परिशेषात्तेषामेव समुच्चय इति ॥ ३ ॥

## संमतेरपि व्यञ्जके ॥ ४ ॥

ॐ, तदाहुः, यदाहुः। अपिशब्दात् 'अत्र ब्रूमः' इत्यादावुपसंहारादौ च यथा स्यात् ॥ ४ ॥

### विवरणम्

अत्र तयोरित्यनुवर्तते। संमतिव्यञ्जकानि दर्शयति वृत्तौ—ओम्, तदाहुः, यदाहुरिति। सूत्रेऽपिशब्दाद् अत्र ब्रूमः, अयं भावः, अत्रेदं तत्त्वम्, वस्तुतस्त्वित्यादिरूपाणि समाधानादिवाक्यानि, अन्यानि चोपसंहारोदाहरणादिवाक्यानि यथासम्प्रदायं संग्राह्याणि ॥ ४ ॥

## निषेधस्य च ॥ ५ ॥

तच्चिन्त्यम्, तन्न। चकाराद् एतेन, अत एव, अपास्तम्, अलमादौ च यथा स्यात् ॥ ५ ॥

### विवरणम्

निषेधोदाहरणमाह वृत्तौ—तच्चिन्त्यम्, तन्नेति। सूत्रस्थचकारेण संग्राह्याणि दर्शयति—एतेनेत्यादि। अत्रापि तयोरित्यनुवर्तते। तेन तन्नेत्यादिघटितवाक्यस्याद्यन्तयो रञ्जनीयमित्यर्थः ॥ ५ ॥

## [1]पक्षान्तरदोषान्तरयोः पदे ॥ ६ ॥

---

1. 'व्यञ्जकपक्षा...' इति क०।

यद्वा, अथवा, किञ्च, अपि चेत्यादि ॥ ६ ॥

विवरणम्

सूत्रे—पद इति । जात्यभिप्रायेणैकवचनम् । पक्षान्तरबोधकं दोषान्तरबोधकं च पदं रञ्जनीयमित्यर्थः । पक्षान्तरबोधकं पदम्—यद्वा, अथवेति । दोषान्तरबोधकम्—किञ्च, अपि चेत्यादि ॥ ६ ॥

## ग्रन्थदेवतयोर्नाम्नि ॥ ७ ॥

स्पष्टम् ॥ ७ ॥

विवरणम्

अत्र सूत्रे नाम्नि इति जात्यभिप्रायेणैकवचनम् ॥ ७ ॥

## [1]इतिश्र्यादौ सर्वत्र व्यवधानेन ॥ ८ ॥

आदिशब्दः प्रकारे तेन तत्तुल्याध्यायसर्गसंग्रहः[2] । 'ग्रन्थदेवतयोः' [ सू० ७ ] इत्यनेन स्वनामासंग्रहादयमारम्भः । [3]तत्रैव स्वशब्दपूरणे तु तन्मात्रे पर्यवस्येत् । अत्र च यद्यलङ्कार इत्यवक्ष्यत्तर्हीतिहासादौ पर्वणि पर्वण्येवाभविष्यन्नाध्यायेऽध्याये[4] । अनुवृत्त्यैव सिद्धे सर्वत्रग्रहणं छन्दसीत्यर्द्धं[थं] गृह्णाति । व्यवधानेनेति रुचिविशेषाभिप्रायम् । अत एव वाक्यघटकपदार्थविशेषरुचिर्नास्त्येवेति सर्वत्रैवोक्तं प्राक् ॥ ८ ॥

विवरणम्

वृत्तौ—तत्तुल्याध्यायेत्यादि । ग्रन्थसमाप्तितुल्याध्यायसर्गसंग्रह इत्यर्थः । तत्तुल्याध्यायसर्गान्तसंग्रह इति यावत् । अत्राध्यायान्तादौ तुल्यता चावसानत्वरूपधर्मसाम्येन । तत्रैवेति । पूर्वसूत्र एवेत्यर्थः । तन्मात्र इति । इतिश्र्यादौ स्वनाममात्र एव गैरिकं लापनीयमिति पर्यवस्येदित्यर्थः । अत्र चेति । अत्र सूत्रे यदि 'इतिश्र्यादौ' इत्यपनीय तत्स्थाने 'अलङ्कारे' इत्यवक्ष्यत्, तर्हि अलङ्क्रियते अलंशब्द उच्चार्यते यत्रेति व्युत्पत्त्या समाप्तिरूपोऽर्थः

---

१. इतिश्र्यादौ-क० ।

२. 'सर्ग' नास्ति-क० ख० ।

३. तत्र-ग० ।

४. 'अध्याये' नास्ति-ग० ।

स्यात् । सा च समाप्तिर्भारतादाविति‌हासे पर्वरूपैव गृह्येत, न त्वध्यायरूपा । प्रकृतार्थसंबद्धस्याध्यायान्तरस्यापि वक्तव्यत्वेनाध्यायेऽलंशब्दप्रयोगायोगात् । पर्वणि त्वलंशब्दप्रयोगो युज्यते, तत्रैव पर्वणि तत्प्रकृतार्थसमाप्तेः । यथा भीष्मादिपर्वस्वेव भीष्मादिचरितानां समाप्तिः । अनुवृत्त्यैवेति । सर्वत्रेत्यस्य प्रथमसूत्रान्मण्डूकप्लुतिन्यायेनानुवृत्त्यैवेत्यर्थः । छन्दसीत्यर्द्धमिति । छन्दसीत्यर्थमिति पाठो भाति । छन्दसीत्यस्य पद्य इत्यर्थः । गृह्णातीत्यस्य संगृह्णातीत्यर्थः । रुचिविशेषाभिप्रायमिति । अत्र व्यवधानेन रञ्जन एकद्वित्र्यादिपदव्यवधाननियमो नास्ति, किन्तु रुचिविशेष एव नियामक इति भावः । अत एव, व्यवधानेनेत्यस्य रुचिविशेषाभिप्रायकत्वादेव । वाक्यघटकपदार्थविशेषेत्यादेरादौ प्रायेणेति शेषः । प्रायेण इतिश्र्यादिवाक्यघटकपदार्थविशेषरुचिर्वाचकानां नास्त्येव, तेषां ग्रन्थप्रतिपाद्यपदार्थविशेष एव रुचेः संभवादिति मत्वा प्रकृतसूत्रे पूर्वं सर्वत्रेत्येवोक्तम् । पश्चात्तु तादृशवाक्यघटकपदार्थविशेषविषयकवाचकविशेषगतरुचिविशेषस्यापि क्वचित् कदाचित् संभवाभिप्रायेण व्यवधानेनेत्युक्तमित्यर्थः ॥ ८ ॥

अङ्केऽङ्के ॥ ९ ॥

[1]इति जड्युपमामकगङ्गारामकृतगैरिकसूत्राणि समाप्तानि ॥[1]

---

प्रत्येकप्राप्तये कृता वीप्सा समाप्तिमप्याह । अक्षरपुस्तके स्वतो व्यावृत्तत्वादङ्कपुस्तकेऽवान्त[ र ]व्यावृत्त्यभावाद् न (?) ज्योतिःशास्त्रगोचरता ॥ ९ ॥

[2]गैरिकसूत्राणि । अत्र गैरिकं पुस्तके कुत्र लापनीयमित्युन्नीतप्रश्नकपरं गैरिकपदम् । तानि च तानि सूत्राणि च गैरिकसूत्राणीत्यर्थः । तथा च गैरिकं पुस्तकेऽत्रात्र लापनीयमिति वाक्यार्थः प्रश्नोत्तरयोरेकवाक्यतया संपद्यत इति न न्यूनपदतादोषः ।

---

१-१. इत्येतानि गैरिकसूत्राणि समाप्तानि—क० ।
२. 'गैरिकसूत्राणि' इत्यारभ्य 'न न्यूनपदतादोषः' इत्यन्तो भागो नास्ति—क० ग० ।

समूलमपि निर्मूलं यदहं प्रललाप तत्।
विश्वचक्रं भ्रामयितुर्यन्तुर्विलसितं भवेत् ॥

॥ इति श्री जड्युपनामकगङ्गारामोन्नीता[1] गैरिकसूत्रवृत्तिः ॥

---

## विवरणम्

अङ्केऽङ्के प्रत्येकमङ्के गैरिकं लापनीयमित्यर्थः। यद्यप्यत्र प्रत्येकमङ्के गैरिकलापनप्राप्तये वीप्सा कृता, अन्यथा क्वचिदेव तत् स्यात्; तथापि प्रकृतगैरिकसूत्रसमाप्तौ कृता वीप्साऽन्यत्रेवात्रापि ग्रन्थसमाप्तिमप्याहेवेत्यर्थः। विनिगमनाविरहादुभयपरत्वमेव वीप्साया इति भावः। अक्षरपुस्तकेऽङ्कानां लेखनेऽक्षरवैजात्येन स्वतो व्यावृत्तत्वाद् गैरिकलापनं विनैव व्यावृत्तत्वात्। अङ्कपुस्तके गणितपुस्तकेऽङ्कानां साजात्येनावान्तरव्यावृत्त्यभावाद् अङ्कपुस्तके 'अङ्केऽङ्के' इत्यस्य सूत्रस्य ज्योतिःशास्त्रगोचरतेत्यर्थः। अयं भावः—यथा क्वचित् १२ इति संख्याद्वयाभिप्रायेण लिखितम्, अन्यत्र द्वादशाभिप्रायेण तथैव लिखितम्। तत्र रञ्जनं विना संदेहः स्यात्। रञ्जने तु न संदेहः, यतो हि यदा प्रत्येकं पृथग् रञ्जनं तदा संख्याद्वयप्रतीतिः, यदि तु समुदायरञ्जनमविभागेन तदा द्वादशसंख्याप्रतीतिरिति। अत्र वृत्तौ—'न ज्योतिःशास्त्रगोचरता' इति नञ्घटितः पाठोऽसाधुः, तन्मात्रगोचरत्वस्यैव सत्त्वात् ॥९॥

गैरिकसूत्राणि समाप्तानीत्यत्र गैरिकपदं येषां सूत्राणां दर्शनेन "कुत्र गैरिकं लापनीयम्" इति प्रश्न उन्नीतस्तादृशसूत्रपरमित्यर्थः। उन्नीतप्रश्नकेत्यत्र उन्नीतः प्रश्नो यैरिति विग्रहः। तथा च गैरिकपदस्योन्नीततादृशप्रश्नके तात्पर्यानुपपत्त्या लक्षणा। इति वाक्यार्थं इति। अयं वाक्यार्थस्तादृशप्रश्नस्य सूत्रनवकरूपस्य समाधानवाक्यसमुदायस्य चैकवाक्यतया संपद्यत इति समाधानवाक्ये लापनीयमिति पदानुक्त्या यो न्यूनपदत्वदोषः स प्रश्नवाक्यात्तल्लाभान्नेत्यर्थः।

समूलमपीति। रञ्जनसम्प्रदायसत्त्वेन समूलमपि, इतः प्राग् रञ्जनविधायकसूत्राभावान्निर्मूलमिदं गैरिकरञ्जनसूत्रं यदहं प्रललाप प्रकर्षेण ललाप। न तु प्रलापं कृतवान्। "प्रलापोऽनर्थकं वचः" [ अमर० १।६।१५ ] इति प्रलापवचनस्यानर्थक्यादस्य च सार्थक्यात्। तदिदं विश्वचक्रं भ्रामयितुर्यन्तुः सर्वान्तर्गतत्वेन चराचरजगन्नियन्तुर्विलसितं भवेदित्यहं संभावयामि। अन्तर्यामिप्रेरणयैवेदं सूत्रं मया व्यरचीत्यर्थः। अत्र यन्तुर्विलसितमित्युक्त्या

---

१. गङ्गारामकृता क०।

स्वकर्तृकप्रलापक्रियायां परोक्षत्वोपपत्तिः। अत एव चेदं प्रकृष्टं लपनं न त्वनर्थकं वचः।

गङ्गारामोन्नीतगैरिकसूत्रवृत्तिरिति । गङ्गारामोन्नीतानां तेनैव स्वबुद्ध्या यथासम्प्रदायमुत्प्रेक्षितानाम्, न तु शास्त्रान्तरावलम्बनेन प्रणीतानामित्यर्थः।

इति श्री बलियामण्डलान्तर्गत-छाता-ग्रामाभिजनविद्याजनुर्गुरुब्रह्मीभूत-
श्रीकाशीनाथपदाराधनावाप्तसन्मतिश्रीरघुनाथशर्मकृतं
गैरिकसूत्रतद्वृत्तिव्याख्यानं सम्पूर्णम्।



# वासनानां विलसितम्

अथातो वासनातत्त्वजिज्ञासा। यतो वासनात्रयमूलकः संसारः। तथा हि—प्रायणात्प्राक् परिग्रहीष्यमाणजन्मानुरूपाणां कर्मवासनानामुद्भवे प्रेत्य जन्तुस्तादृशमेव जन्म लभते। जातश्चानुभववासनाभिः प्राग्भवीयाभिस्तदानीमुद्भूताभिस्तज्जन्मानुरूपमेव चेष्टतेऽशिक्षितोऽपि। अविद्यावासनाभिश्चानादिभवसञ्चिताभिर्देहगेहादौ 'अहं मम' इत्यध्यस्यति। आत्मतत्त्वदृष्ट्या च वासनापरिक्षय एव मोक्षः। तथा हि—आत्मतत्त्वदृष्ट्याऽविद्यातद्वासनाकल्पितबाह्याध्यात्मिकाशेषप्रपञ्चाधिष्ठानतत्त्वसाक्षात्काररूपयाऽविद्यातद्वासनानां विनिवृत्तिः, अधिष्ठानरज्जुसाक्षात्कारेण सर्पादिवासनानामिव। तदुक्तं मुण्डकोपनिषदि—

> भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः।
> क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे॥ इति।

अत्र हृदयाश्रिता वासना हृदयग्रन्थिपदेनाभिधीयते। जात्यभिप्रायेणैकवचनम्। अत्र च हृदयग्रन्थिपदेनाऽविद्यावासनैवाभिप्रेता, "छिद्यन्ते सर्वसंशयाः" इत्येतत्समभिव्याहारात्; संशयस्याविद्यावासनामूलकत्वात्। अविद्यावासनानामात्मदर्शनेन प्रक्षये चेतरस्य वासनाद्वयस्य कर्मानुभवजनितस्यापि प्रक्षयः, तस्य वासनाद्वयस्याविद्यावासनामूलकत्वात्। तत्र कर्मवासनानां धर्माधर्मरूपाणामविद्यावासनाजन्यत्वमुक्तं कारिकावल्याम्—"इमौ तु वासनाजन्यौ ज्ञानादपि विनश्यतः" [ १६४ ] इति। "इमौ धर्माधर्मौ मिथ्याज्ञानजन्यवासनाजन्यौ" इति व्याख्यातं मुक्तावल्याम्। मिथ्याज्ञानं त्वविद्या। तदेवोच्यते—"क्षीयन्ते चास्य कर्माणि" इति। अत्र च कर्मपदेन कर्मवासनाः पुण्यापुण्यरूपाः। अत्र चकारेण चानुक्ता अप्यनुभववासनाः समुच्चीयन्ते। इत्येवमात्मदर्शनेन वासनात्रयनाशः संगृहीतो भवति।

वासनात्रयस्य संसारमूलत्वं तत्प्रक्षयस्य च मोक्षरूपत्वमभिहितं योगवासिष्ठे लघौ—

"अशेषेण परित्यागो वासनानां य उत्तमः।
मोक्ष इत्युच्यते सद्भिः स एव विमलक्रमः॥"
[ वैरा० १।९ ] इति।

"भोगभावनया याति बन्धो दार्ढ्यमवस्तुजः।
तयोपशान्तया याति बन्धो जगति तानवम्॥"
[ वैरा० ३।५७ ]

"वासनातानवं राम मोक्ष इत्युच्यते बुधैः।
पदार्थवासनादार्ढ्यं बन्ध इत्यभिधीयते॥"
[ वैरा० ३।५८ ]

"यस्य निर्वासनो बोधः स जीवन्मुक्त उच्यते।
[ उत्पत्ति० १।९२ ]

"मनसा भाव्यमानो हि देहितां याति देहकः।
देहभावनया मुक्तो देहधर्मैर्न बाध्यते॥"
[ उत्पत्ति० ५।३ ]

"अविद्यया वासनया तयान्तश्चित्तसत्तया।
विलीनया त्यागवशात् परं श्रेयोऽधिगम्यते॥"
[ उत्पत्ति० ९।२७ ]

"बन्धो हि वासनाबन्धो मोक्षः स्याद् वासनाक्षयः।
वासनां त्वं परित्यज्य मोक्षार्थित्वमपि त्यज॥"
[ स्थिति० ५।२० ]

"विचारितमलं शास्त्रं चिरमुद्ग्राहितं मिथः।
संत्यक्तवासनान्मौनादृते नास्त्युत्तमं पदम्॥"
[ स्थिति० ५।२९ ]

"हे चित्त वासनाजालं बन्धाय भवतोऽभितः।
यदि शाम्यसि तत् त्यक्त्वा तदाऽनन्तो जयस्तव॥"
[ उपशम० ६।५७ ]

"उन्मत्तताण्डवस्थस्य चेतश्चेत् क्षीणवासनम्।
तदस्योन्मत्तनृत्यं तु समं बुद्धसमाधिना॥
अकर्तृ कुर्वदप्येतच्चेतः प्रतनुवासनम्।
दूरंगतमना जन्तुः कथासंश्रवणे यथा॥

अकुर्वदपि कर्त्रेव चेतः प्रघनवासनम् ।
निष्पन्दाङ्गमपि स्वप्ने श्वभ्रपातस्थिताविव ॥
अवासनं स्थिरं प्रोक्तं मनोध्यानं तदेव च ।
स एव केवलीभावः शान्ततैव च तत्सदा ॥
घनवासनमेतत्तु चेतःकर्तृत्वभावनम् ।
सर्वदुःखप्रदं तस्माद् वासनां तनुतां नयेत् ॥"
[ उपशम० ७।११, १३-१४, १७, १९ इति ।]

बाह्या अप्येतदाहुः । तदुक्तं कर्मफलपरीक्षाप्रकरणे 'कार्यकारणभूताश्च तत्राविद्यादयो मताः' इति कारिकाव्याख्यावसरे तत्त्वव्याख्यायां पञ्जिकायाम्—

"चित्तमेव हि संसारो रागादिक्लेशवासितम् ।
तदेव तैर्विनिर्मुक्तं भवान्त इति कथ्यते ॥" इति ।

नन्वात्मविद्यया वासनाप्रक्षयस्वीकारे जीवन्मुक्तस्य भिक्षाटनाध्यात्मविद्योपदेशादिप्रवृत्तिर्न संभवति, प्रवृत्तेः कामनामूलकत्वात्, कामस्य वासनारूपरागमूलकत्वात्, "यद् यद्धि कुरुते जन्तुस्तत्तत्कामस्य चेष्टितम्" इत्यभियुक्तोक्तेः । तथा हि—जानाति, इच्छति, यतते, चेष्टत इति क्रमः । तत्रापेक्षात्मकज्ञाने ( इष्टसाधनत्वप्रकारकज्ञाने ) सति तद्विषयेच्छा भवति नान्यथेत्यनुभवसिद्धम् । तादृशेन ज्ञानेन चावश्यं वासना जन्यते, अत एव तद्विषयविषया नियमेन स्मृतिरग्रे । तथा चेदमायातं ज्ञानं वासनासमुत्पादक्रमेण कामे हेतुरिति । वासनाकामयोः कार्यकारणभावसत्त्वादेव च "भिद्यते हृदयग्रन्थिः" [ २।२।८ ] इति मुण्डकमन्त्रव्याख्यावसरे शाङ्करभाष्ये "यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः" [ २।३।१४ ] इति काठकवाक्यमुपन्यस्य कामपदेन वासना गृह्यत इत्युक्तम्, कार्यकारणयोरभेदात् । तथा च जीवन्मुक्ते वासनाऽभावात् कामाभावः, कामाभावात् प्रवृत्त्यभाव इति चेन्न; जीवन्मुक्तेऽपि संभृष्टबीजवद् वासनाऽस्तीति स्वीकारात् । तथा हि जीवन्मुक्तेऽविद्यावासनाप्रक्षयात्तन्मूलकसर्ववासनाप्रक्षयेण विषयेष्वपेक्षाबुद्धेरभावेऽपि जीवननिदानप्रारब्धजनितेच्छाधीनमिष्टसाधनत्वप्रकारकं ज्ञानमाहार्यं तस्योपजायते, तेन च ज्ञानेन वासनाप्यनुत्कटा उपजायते, अत एव सा न रागरूपा, स्वाश्रयारञ्जकत्वात् । तया च वासनया तदनुरूपा इच्छानुत्कटैव । ततश्च प्रवृत्तिरपि तादृश्येवेति न तस्याः प्रवृत्तेर्धर्माधर्मजनकत्वमिति । मिथ्याज्ञानापाये रागादिदोषापायः,

तदपाये प्रवृत्त्यपाय इत्यभिप्रयतां न्यायसूत्रकृतां तदनुगामिनां च सर्वेषामत्रैव तात्पर्यं प्रतीयते। न तु जीवन्मुक्तिर्नास्तीत्यत्र, श्रुत्यादिषु तदुपलब्धेः। प्रवृत्त्यपाये धर्माधर्माभावेन जन्मापाय इत्यग्रिमवाक्येन च पूर्वत्र जन्महेतुप्रवृत्तेरेव निषेधोऽभिप्रेत इति गम्यते। शास्त्रान्तरे तु 'जीवन्मुक्तस्य वासनास्ति शुद्धा' इत्युक्तम्। तथा च लघुयोगवासिष्ठे—

"भृष्टबीजोपमा भूयो जन्माङ्कुरविवर्जिता।
हृदि जीवद्विमुक्तानां शुद्धा वसति वासना॥"

[ उपशम० ४।१३२ ]

अत्र वासनाया भृष्टबीजोपमायां 'भूयो जन्माङ्कुरविवर्जिता' इति हेतुः। शुद्धत्वं च तस्या मिथ्याज्ञानजन्यवासनाऽननुविद्धत्वात्। एतदप्युक्तं लघुयोगवासिष्ठे—

"वासना द्विविधा प्रोक्ता शुद्धा च मलिना तथा।
मलिना जन्मनो हेतुः शुद्धा जन्मविनाशिनी॥
अज्ञानसुघनाकारा घनाऽहङ्कारशालिनी।
पुनर्जन्मकरी प्रोक्ता मलिना वासना बुधैः॥
पुनर्जन्माङ्कुराँस्त्यक्त्वा स्थिता संभृष्टबीजवत्।
देहार्थं ध्रियते ज्ञातज्ञेया शुद्धेति चोच्यते॥"

[ वैराग्य० १।१०-१२ ]

पुनर्जन्माङ्कुरान् अविद्याप्रत्ययजन्यवासनारूपानिति भावः।

श्रीशङ्करभगवत्पदानुगास्तु जीवन्मुक्तस्य आत्मदर्शनरूपया विद्ययाऽविद्यातत्प्रत्ययानां यावत् प्रारब्धक्षयं बाध एव, न तु निवृत्तिः। यथैन्द्रजालिकप्रदर्शितवस्तुविषयप्रत्ययानां तन्मिथ्यात्वनिश्चयेऽपि न निवृत्तिः। तथा च बाधिता अविद्याप्रत्ययास्तज्जन्या वासनाश्च तत्र सन्तीति न काऽप्यनुपपत्तिः। तादृशप्रत्ययवासनाजनिताश्च प्रवृत्तयो न धर्माधर्मफलाः, जीवन्मुक्तस्य कर्तृत्वाभिमानराहित्यात्। तदुक्तं गीतासु—

"यस्य नाहंकृतो भावो बुद्धिर्यस्य न लिप्यते।
हत्वापि स इमान् लोकान्न हन्ति न निबध्यते॥"

[ १८।१७ ] इति।

श्रुतौ च "अरुन्मुखान् यतीन् शालावृकेभ्यः प्रायच्छं लोमाऽपि मे नाहीयत" [ कौषी० ३।१ ] इति।

सिद्धान्तलेशे [ चतुर्थे परिच्छेदे ] तु जीवन्मुक्तिसत्त्वेऽविद्यालेशानुवृत्ति प्रकारत्रयेणोक्त्वा जीवन्मुक्तिश्रुतेरर्थवादत्वमन्ते उक्तम् । तथा हि—

"अथ कोऽयमविद्याया लेशो यदनुवर्तनात् ।
देहादेः प्रतिभासेन जीवन्मुक्तिरिहोच्यते ॥ १ ॥

ज्ञानेनावरणे नष्टे विक्षेपांशोऽनुवर्तते ।
प्रारब्धप्रतिबन्धेन स लेशस्तेन जीवनम् ॥ २ ॥

क्षालितेष्विव हिङ्ग्वादिपात्रेष्वन्ये तु वासनाम् ।
नष्टानुवृत्तिमाचख्युरन्ये दग्धपटे यथा ॥ ३ ॥

विरोधिन्युदिते शेषासंभवादर्थवादताम् ।
सर्वज्ञात्मगुरुः प्राह जीवन्मुक्तिश्रुतेः स्फुटम् ॥ ४ ॥" इति ।

अथ को नाम वासनापदार्थः । यस्मिन् सति पुरुषः साभिनिवेशं प्रवर्तते, असति तु नेति प्राप्ते उच्यते—कर्मभिः सुकृतदुष्कृतान्यतररूपैः पूर्वप्रज्ञया वा प्रमाभ्रमान्यतररूपयाऽऽत्मन्यन्तःकरणे वा जनितः कश्चन संस्कारविशेषो वासना । वास्यते स्वरूपरूषितं क्रियते स्वाश्रयो यया सेति वासयतेः करणयुचा तत्सिद्धेः । यथा पुष्पादिना तैलादिकं वास्यते, स्वगन्धाधिवासितं क्रियते । दृश्यते च पूर्वप्रज्ञासंस्कारस्मृतीनां समानविषयकत्वेन कार्यकारणभावः । पूर्वप्रज्ञया हि स्वसमानविषयकः संस्कारस्तेन च मलिनसत्त्वाश्रितेन स्वसमानविषया स्मृतिर्जन्यते । शुद्धसत्त्वाश्रितेन तु योगिनामतीताद्यर्थविषयकः साक्षात्कार एव जन्यते । एषा च वासना संस्कार इति, भावनेति, राग इति, आशय इति, प्रकृतिरिति, स्वभाव इति, शीलमिति च व्यवह्रियते तत्र तत्र । तथा हि यथा मृद्गोमयाद्यनुलेपनेन भूमिः संस्कृता भवतीति तदेव तस्याः संस्कारः, तथा वासनया स्वाश्रयः संस्कृतो भवतीति वासना तस्य संस्कारः । भाव्यते साक्षात्कार्यतेऽर्थो यया सेति व्युत्पत्त्या भावनापदेनापि सोच्यते । "कृभ्वस्तयः क्रियासामान्यवचनाः" इत्यभ्युपगमेन भवतेरत्र साक्षात्कारोऽर्थः, णिचस्तु तदनुकूलव्यापाररूपा भावनाऽर्थः । न च भावनया स्मृतिर्जन्यत इति कुतस्तस्याः साक्षात्कारानुकूलव्यापाररूपतेति वाच्यम्; योगिनामतीताद्यर्थप्रत्यक्षे, वियोगिनामविद्यमानकामिन्यादिप्रत्यक्षे, मणिरूप्यादिविदां प्रत्यक्षे च तस्याः हेतुत्वस्य क्लृप्तत्वाद् योग्यतया स्मृतिहेतावपि तत्पदप्रयोगः ।

तदेतत्सर्वमुक्तं न्यायमञ्जर्यां ९७ पृष्ठे प्रमाणप्रकरणे—

"इह विज्ञानजन्यस्तु संस्कारो व्यवतिष्ठते ।
क्रमोपचीयमानोऽसौ परातिशयकारणम् ॥···
यथानुवाकग्रहणे संस्थाभ्यसनकल्पितः ।
स्थिरः करोति संस्कारः पाठस्मृत्यादिपाटवम् ॥
तथैव भावनाऽभ्यासाद् योगिनामपि मानसम् ।
ज्ञाने सकलविज्ञेयसाक्षात्कारे क्षमं भवेत् ॥
अस्मदादेश्च रागादिमलावरणधूसरम् ।
मनो न लभते ज्ञानप्रकर्षपदवीं पराम् ॥
प्रत्यूहभावनाऽभ्यासक्षपिताशेषकल्मषम् ।
योगिनां तु मनः शुद्धं कमिवार्थं न पश्यति ॥" इति ।
"विरहोद्दीपितोद्दामकामाकुलितदृष्टयः ।
दूरस्थामपि पश्यन्ति कान्तामन्तिकवर्तिनीम् ॥"

[ न्यायमञ्जर्यां प्रमाणप्रकरणे, ८३ पृष्ठे ] इति च ।

अत्रोत्कटकामेन कान्तां भावयन्तस्तां पश्यन्तीति न विस्मर्तव्यम् । उक्तं च भामत्याम्—"शीतातुरकायकाण्डस्य गुञ्जापुञ्जे वह्निं भावयतो वह्निसाक्षात्कारो भवतीति । मणिरूप्यादिविदामपि मणिरूप्यादिप्रत्यक्षं भावनाप्रकर्षजमेव । तदुक्तं हरिणा वाक्यपदीये ब्रह्मकाण्डे—

"परेषामसमाख्येयमभ्यासादेव जायते ।
मणिरूप्यादिविज्ञानं तद्विदां नानुमानिकम् ॥" [ ३५ ] इति ।

इयं च वासना रागपदेनापि व्यह्रियते चेतसो रञ्जनाद् राग इति । अत एवोत्कटकामेन स्त्र्यादिविषयकरागप्रकर्षे पुरुषो रक्त इत्युच्यते ।

अत एव च विविधवासनोपरक्तं चित्तं माहारजनपटेन्द्रगोपादिदृष्टान्तैरुपवर्णितं बृहदारण्यके । तथाहि—"यथा माहारजनं वासो यथा पाण्ड्वाविकं यथेन्द्रगोपो यथाऽग्न्यर्चिर्यथा पुण्डरीकं यथा सकृद्विद्युत्तम्" [ बृह० २।३।६ ] इति । अत्र भाष्यम्—"यथा लोके महारजनं हरिद्रा तया रक्तं माहारजनं यथा वासो लोके । एवं स्त्र्यादिविषयसंयोगे तादृशं वासनारूपं रञ्जनाकारमुत्पद्यते चित्तस्य, येनाऽसौ पुरुषो रक्त इत्युच्यते वस्त्रादिवत् । यथा च लोके पाण्ड्वाविकम्, अवेरिदमाविकमूर्णादि । यथा च तत् पाण्डुरं भवति तथान्यद् वासनारूपम् । यथा च लोके इन्द्रगोपोऽत्यन्तरक्तो भवति, एवमस्य वासनारूपम् । क्वचिद् विषयविशेषापेक्षया रागस्य तारतम्यम्,

क्वचित्पुरुषचित्तवृत्त्यपेक्षया। यथा च लोकेऽग्न्यर्चिर्भास्वरं भवति, तथा क्वचित् कस्यचिद् वासनारूपं भवति। यथा पुण्डरीकं शुक्लं तद्वदपि च कस्यचिद् वासनारूपं भवति। यथा सकृद्विद्युत्तं, यथा लोके सकृद् विद्योतनं सर्वतः प्रकाशकं भवति, तथा ज्ञानप्रकाशविवृद्ध्यपेक्षया कस्यचिद् वासनारूपमुपजायते। नैषामादिरन्तो मध्यं संख्या वा देशः कालो निमित्तं वाऽवधार्यते। असंख्येयत्वाद् वासनाया वासनाहेतूनामानन्त्यात्। दृष्टान्तास्त्विमे प्रकारप्रदर्शनार्थाः" इति। अत्र भाष्ये रागस्य तारतम्यं क्वचिद् विषयविशेषापेक्षया, क्वचित्पुरुषचित्तवृत्त्यपेक्षयेत्युक्तम्। तस्यायमाशयः—यथा लोके काचिदनवद्या प्रकृतिसुन्दरी वनिता यथा वा तादृश एव पुरुषः, तत्र ममत्वाभिमानरहितस्यापि भवति रक्तं चेत इति तत्र विषयविशेषापेक्ष एव रागः। यत्र तु स्वभार्यापुत्रादौ प्रकृत्याऽशोभनेऽपि रक्तं चेतो भवति, तत्र रागे ममत्वालम्बना चित्तवृत्तिरेव हेतुरिति।

एवं विषयाणामपि सात्त्विकादिभेदेन चित्तवृत्तीनामपि तथाविधभेदेन रागतारतम्यं द्रष्टव्यम्। तथा च स्त्रीपुत्रादावविद्याकृतो रागः पुरुषचित्तवृत्त्यपेक्षः स्वाभाविको दुरपनोदः। तत्रेन्द्रगोपादिः सहजरक्तो दृष्टान्तः। शोभनेषु विषयेषु रागस्तु विषयविशेषापेक्षः कृत्रिमस्तत्र दोषदृष्ट्या निवर्तते। तत्र कृत्रिमराग उदाहरणं यथा माहारजनं वास इति। अत्र स्वभावशुद्धं वासो हरिद्रासम्बन्धाद् रक्तमुदाहरणम्। अत्र वाससो रागः कृत्रिमः। अत्र सहजरागस्य बहून्युदाहरणानि तु रागप्रकर्षाप्रकर्षद्योतनाय। यथा सकृद्विद्युत्तमित्युदाहरणं तु हिरण्यगर्भस्य वासनाप्रदर्शनाय। हिरण्यगर्भस्य हि बुद्धिसमष्टिरुपाधिरिति सर्वप्राणिनां बुद्धिवासनास्तत्र संस्थिता इति सकृत् सर्वार्थप्रकाशः संभवति। उक्तं चैतत् पञ्चदश्याम्—"अशेषप्राणिबुद्धीनां वासनास्तत्र संस्थिताः" [ ६।१६१ ] इति पद्येनेति। आशय इति व्यपदेशस्तु आ अतिशयेन अत्यन्तं शेते निर्व्यापारस्तिष्ठति अनभिव्यक्तिकाले स्वाश्रय इति व्युत्पत्त्या। अत्राङ्पूर्वात् शेतेः पचाद्यच्। अन्याऽन्याशयपदस्य व्युत्पत्तिरग्रे योगवैशारद्युक्ता प्रदर्शयिष्यते। आशयशब्दस्य वासनायां प्रयोगस्तु—"क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः" [ १।२४ ] इत्यत्र योगसूत्रे। वासनायाः प्रकृतिपदेन व्यवहारस्तु प्रक्रियते जन्म ययेति व्युत्पत्त्या बाहुलकात् करणे क्तिन्प्रत्ययमाश्रित्य। तदुक्तं कविभिः—"सतीव योषित् प्रकृतिः सुनिश्चला पुमांसमभ्येति भवान्तरेष्वपि" [ माघ० १।७२ ] इति।

वासनानां जन्मनिमित्तत्वं चोक्तं बृहदारण्यके—"तं विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा च" [ ४।४।२ ] इति। अत्र शाङ्करभाष्यम्—"तं परलोकाय गच्छन्तमात्मानं विद्याकर्मणी विद्या च कर्म च विद्याकर्मणी। विद्या सर्वप्रकारविहिता, प्रतिषिद्धा, अविहिताऽप्रतिषिद्धा च। तथा कर्म विहितं प्रतिषिद्धं चाविहितमप्रतिषिद्धं च। समन्वारभेते सम्यगन्वारभेते अन्वालभेते अनुगच्छतः। पूर्वप्रज्ञा च पूर्वाऽनुभूतविषया प्रज्ञा पूर्वप्रज्ञा, अतीतकर्मफलानुभववासनेत्यर्थः। सा च वासनाऽपूर्वकर्मारम्भे कर्मविपाके चाङ्गं भवति। तेन ता अप्यन्वारभते। नहि तया वासनया विना केनचित् कर्म कर्तुं फलं चोपभोक्तुं शक्यते। न ह्यनभ्यस्ते विषये कौशलमिन्द्रियाणां भवति। पूर्वानुभववासनाप्रवृत्तानां त्विन्द्रियाणामिहाभ्यासमन्तरेण कौशलमुपपद्यते। दृश्यते हि केषाञ्चित् कासुचित् क्रियासु चित्रकर्मादिलक्षणासु विनैवेहाभ्यासेन जन्मत एव कौशलम्। कासुचिदत्यन्तसौकर्ययुक्तास्वप्यकौशलं केषाञ्चित्। तथा विषयोपभोगेषु स्वभावत एव केषाञ्चित् कौशलाकौशले दृश्येते। तच्चैतत् सर्वं पूर्वप्रज्ञोद्भवानुद्भवनिमित्तम्। तेन पूर्वप्रज्ञया विना कर्मणि वा फलोपभोगे वा न कस्यचित्प्रवृत्तिरुपपद्यते। तस्मादेतत्त्रयं शाकटिकसंभारस्थानीयं परलोकपथ्यदनं विद्याकर्म पूर्वप्रज्ञाऽऽख्यम्। यस्माद् विद्याकर्मणी पूर्वप्रज्ञा च देहान्तरप्रतिपत्त्युपभोगसाधनं तस्माद् विद्याकर्मादि शुभमेव समाचरेत्। यथेष्टदेहसंयोगभोगोपभोगौ स्यातामिति प्रकरणार्थः" इति।

अत्र विद्यापदेनोपासनाजन्या वासना, कर्मपदेनापि तज्जन्या वासना धर्माधर्माख्या। पूर्वप्रज्ञापदेन च पूर्वानुभवजन्या वासना गृह्यते। देहान्तरपरिग्रहकाले तत्त्रयस्य स्वरूपेण स्थित्यसंभवात्। तृणजलूकेव च प्रायणात् प्राक् प्रतताभिर्वासनाभिरेष जीवः शरीरान्तरं गृहीत्वा ( साक्षात्कृत्य ) वासनाद्वारा प्रसृतमात्मानं पुनरुपसंहरति। सर्वात्मकानि तावत् कारणानि, सर्वात्मकप्राणसंश्रयाच्च तेषामाध्यात्मिकाधिभौतिकपरिच्छेदः प्राणिकर्मज्ञानभावनानिमित्तः, अतस्तद्वशात् स्वभावतः सर्वगतानामनन्तानामपि प्राणानां ( इन्द्रियाणाम् ) कर्मज्ञानवासनानुरूप्येणैव देहान्तरारम्भवशात् प्राणानां वृत्तिः संकुचति विकसति च। तथा चोक्तम्—"समः प्लुषिणा समो मशकेन समो नागेन सम एभिस्त्रिभिर्लोकैः समोऽनेन सर्वेण" इति। तथा चेदं वचनमनुकूलम्—"अथ यो हैताननन्तानुपास्ते" [ बृह० १।५।१३ ] इत्यादि, "तं यथा यथोपासते इति च" [मुद्गलो० ३।३] इति। अत्रत्यया

श्रुत्या तद्भाष्येण च विद्याकर्मपूर्वप्रज्ञाजनितवासनानां देहान्तरारम्भकत्वं स्फुटं प्रतीयते।

इयं च वासना प्रकृतिपदेनेव स्वभावपदेनापि व्यपदिश्यते। स्वभावशब्दस्य प्रकृतिपर्यायत्वात्। एवं स्वभावपर्यायाः शीलशब्दादयोऽपि तत्र द्रष्टव्याः।

यथा बृहदारण्यके प्रागुदाहृते वासनानां माहारजनादिरागसाम्यं दर्शितं तथा काठकमुण्डकादिषु ग्रन्थिरूपत्वमपि दर्शितम्। तथा हि काठकोपनिषदि–

"यदा सर्वे प्रभिद्यन्ते हृदयस्येह ग्रन्थयः।
अथ मर्त्योऽमृतो भवत्येतावद्ध्यनुशासनम्॥
[ २।३।१५ ]।

अत्र भाष्यम्—"हृदयस्य ग्रन्थयः = अविद्याप्रत्यया दृढबन्धरूपाः" इति। अत्रापि प्रत्ययजन्या वासना विवक्षिता।

मुण्डके च—

"भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः।
क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे॥"
[ २।२।८ ]।

भाष्यमत्र—"भिद्यते हृदयग्रन्थिरविद्यावासनाप्रचयो बुद्ध्याश्रयः कामः, 'यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः' [ काठक० २।३।१४; बृह० ४।४।७ ] इति श्रुत्यन्तरात्। हृदयाश्रयोऽसौ नामात्माश्रयः" इति। उपनिषद्भाष्ये चान्यत्र यथा मत्स्याऽऽनायः ( मत्स्यग्रहणार्थं जालकम् ) सर्वतः सूक्ष्माभिस्तन्तुग्रन्थिभिरनुविद्धस्तथान्तःकरणमपि वासनारूपग्रन्थिभिरित्युक्तम्। अत्र यद्यपि वासनानां नीलपीतादिरागरूपत्वं ग्रन्थिरूपत्वं च सादृश्येनाध्यारोपितं न तु वास्तवमिति भाष्यबलात् प्रतीयते, तथापि स्वरूपतोऽपि तासां ते संभवत इतीदानीमुपपादयितुं प्रयत्यते। तथा हि मनसोऽन्नविकारत्वम् "अन्नमयं सोम्य मनः" [ छा० ६।६।५ ], "यदणिष्ठं तन्मनः" इत्यादिश्रुतिषूपलभ्यते। अनुभूयते च भुक्तानां गीतोदाहृतसात्त्विकराजसतामसान्नानां मधुरकट्वम्लादिरसादिभेदभिन्नानां प्रभावो मनसि। अन्नस्य च पार्थिवस्य सर्वरूपवत्त्वसंभवेन तद्विकारे मनसि तद्विकारभूतासु वृत्तिसु तद्विकारभूतासु वासनासु च सर्वरूपसंभव इति। एवं ग्रन्थिरूपत्वं च वासनानामुपपद्यते, प्राणाघाताभिनिष्पन्नरेखारूपग्रन्थिमद्हृदयपिण्डपुण्डरीकसमाश्रितमनस्समवेतत्वात् वासनानाम्। तथा हि—

"वासनावशतः प्राणस्पन्दस्तेन च वासना।
जायते चित्तबीजस्य तेन बीजाङ्कुरक्रमः॥
(उपशम० १०।६५)।
"द्वे बीजे चित्तवृक्षस्य वृत्तिव्रततिधारिणः।
एकं प्राणपरिस्पन्दो द्वितीयं दृढवासना॥"
(उपशम० १०।३८) इति।

अथेदानीं वासनानां भेदाः सह कारणभेदैः कार्यभेदैश्च सप्रमाणं प्रदर्श्यन्ते। यद्यपि वासनाभेदा अनन्ता इति स्वरूपतः संख्यातुमशक्या इति प्रागुपपादितम्, तथापि समासतः कथञ्चित् प्रदर्श्यन्ते। तत्र विद्यावासना, अविद्यावासना, कर्मवासना, पूर्वप्रज्ञावासनेति तस्याः प्रथमं चत्वारो भेदाः।

तत्र विद्या उपासना ध्यानमिति यावत्। तत्र प्रत्ययैकतानता ध्यानम्। नैरन्तर्येण सजातीयप्रत्ययप्रवाह इति यावत्। तत्र विद्याजन्यवासनया वस्तुसाक्षात्कारो भवति यथाऽऽत्मविद्याजन्यवासनयाऽऽत्मसाक्षात्कारः। मणिरूप्यादिविद्याजन्यवासनया मणिरूप्यादिसाक्षात्कारस्तद्विदाम्। स्वरविद्याजन्यवासनया षड्जादिस्वरसाक्षात्कारो गान्धर्वशास्त्राभ्यासवताम्। विद्या च द्वेधा—सदर्थविषया, असदर्थविषया चेति।

तत्र गुञ्जापुञ्जे वह्निविद्याजन्यवासनया वह्निसाक्षात्कारः शीतातुरकायकाण्डस्य। मरुमरीचिकासु तोयविद्याजन्यवासनया उच्चलत्तुङ्गतरङ्गभङ्गेयमभ्यर्णमवतीर्णा मन्दाकिनीति प्रत्ययः पिपासितस्येति तत्र तत्र भामत्यां प्रदर्शितम्। क्वचित्तु अनागतार्थविषयकविद्याजन्यवासनया तद्विषयकं प्रातिभं ज्ञानं जायते प्रमाणभूतम्। यथ मुमूर्षोः कस्यचिन्मरणज्ञानम्। यथा वा भगिन्या भ्रात्रागमनज्ञानम्—अद्य मे भ्राता आगमिष्यतीति। तथा योगिनामपि विद्याजन्यभावनाप्रकर्षादेवातीतानागताद्यर्थसाक्षात्कारः। तदुक्तं प्रमाणप्रकरणे न्यायमञ्जर्याम्—

"तथैव भावनाभ्यासाद् योगिनामपि मानसम्।
ज्ञाने सकलविज्ञेयसाक्षात्कारे क्षमं भवेत्॥...
तदेवं क्षीणदोषाणां ध्यानावहितचेतसाम्।
निर्मलं सर्वविषयं ज्ञानं भवति योगिनाम्॥
अपि चानागतज्ञानमस्मदादेरपि क्वचित्।
प्रमाणं प्रातिभं श्वो मे भ्राताऽऽगन्तेति दृश्यते॥

नानर्थजं न संदिग्धं न बाधविधुरीकृतम् ।
न दुष्टकारणं चेति प्रमाणमिदमिष्यताम् ॥
क्वचिद् बाधकयोगश्चेदस्तु तस्याप्रमाणता ।
यत्रापरेद्युरभ्येति भ्राता तत्र किमुच्यताम् ॥
काकतालीयमिति चेन्न प्रमाणप्रदर्शितम् ।
वस्तु तत् काकतालीयमिति भवितुमर्हति ॥''
(पृ० ९८)

इति । भावि भ्रात्रागमनं भावित्वेन गृह्णदिदं प्रातिभं ज्ञानं प्रमाणमित्यर्थः ।

अथ साम्प्रतमवसरप्राप्ताऽविद्यावासना निरूप्यते । तत्र दर्शनान्तरेष्वनात्मन्यात्मख्यातिरविद्येति । अद्वैतदर्शने तु—

"अनादि भावरूपं यद् विज्ञानेन विलीयते ।
तदज्ञानमिति प्राज्ञा लक्षणं संप्रचक्षते ॥''

इति चित्सुखोक्ताऽनादिभावरूपा । तत्कार्यभूताऽनात्मन्यात्मख्यातिरूपाः प्रत्यया अपि । क्वचित्तु तज्जन्यवासना अप्यविद्यापदेन व्यपदिश्यन्ते । तत्राद्या मूलाविद्येति । इतरत्त्वविद्याद्वितयं तूलाविद्या, अवस्थाऽज्ञानमिति च तत्र तत्र व्यवह्रियते । तत्राद्वैतदर्शन आत्मनो वाङ्मनसागोचरत्वान्निर्धर्मकत्वाच्च सर्वेऽप्यात्मविषयाः प्रत्यया अविद्याप्रत्यया एव । तत्र पूर्वः प्रत्ययो वासनासमुत्पादक्रमेणोत्तरप्रत्यये हेतुः । सर्वे च विभ्रमाः पूर्वानुभवजनितवासनामूलका एव । स च पूर्वानुभवो भ्रमः प्रमा वा भवत्वित्यत्र नाभिनिवेशोऽद्वैतवादिनां लाघवं पश्यताम् । अहं ममेत्याद्यविद्याप्रत्ययजन्यवासनैव प्रवृत्तिद्वारा धर्माधर्मजननेन संसारहेतुत्वाद् बन्ध इत्युच्यते । तदपायेऽपवर्ग इति सर्वसंमतः पन्थाः ।

अथ कर्मवासनाः । तत्र कर्म तावत् त्रिविधम्—विहितम्, प्रतिषिद्धम्, अविहितमप्रतिषिद्धं चेति । तत्रान्तिमं न धर्माधर्मरूपवासनाजनकम् । स्वाभाविकत्वेन रागद्वेषादिरूपक्लेशानपेक्षया प्रवृत्तत्वात् । कर्माशयस्य तु क्लेशमूलकत्वं योगसूत्रोक्तमनुपदमेव प्रपञ्चयिष्यते । तत्र विहितं कर्म धर्मजनकम्, प्रतिषिद्धं त्वधर्मजनकम् । तत्र माघकर्षणेन यथा शालिक्षेत्रे कोऽप्यतिशयो जन्यते, तथाऽऽत्मनि विहितप्रतिषिद्धकर्मभिरित्यदृष्टसाधनावसरे कुसुमाञ्जल्यामुदयनाचार्याः । अत्र यदि कर्मादृष्टयोः सामानाधिकरण्यानुपपत्त्या कार्यकारणभावो नोपपद्यत इति संभाव्यते, तदा तत्तत्क-

र्मानुकूलकृतेरेव धर्माधर्माजनकत्वमस्तु। स्वानुकूलकृतिद्वारा वा सामानाधिकरण्यमुपपाद्यम्। कर्मणां धर्माधर्मजनकत्वं तु कामलोभमोहक्रोधरूपरागसत्त्व एव। किञ्च धर्माधर्मयोर्जात्यायुर्भोगरूपस्वफलजनकत्वमपि तत्सत्त्व एव, नान्यथा; जीवन्मुक्तेषु तददर्शनात्। तथा च साधनपादे योगसूत्रम्—"क्लेशमूलः कर्माशयो दृष्टादृष्टजन्मवेदनीयः" (२।१२) इति। क्लेशास्तु—अविद्याऽस्मितारागद्वेषाभिनिवेशाः पञ्च। भाष्ये व्याख्यातं च—"तत्र पुण्यापुण्यकर्माशयः कामलोभमोहक्रोधप्रभवः। स दृष्टजन्मवेदनीयश्चादृष्टवेदनीयश्च। तत्र तीव्रसंवेगेन मन्त्रतपःसमाधिभिर्निर्वर्तित ईश्वरदेवतामहर्षिमहानुभावानामाराधनाद्वा यः परिनिष्पन्नः स सद्यः परिपच्यते पुण्यकर्माशय इति। तथा तीव्रक्लेशेन भीतव्याधितकृपणेषु विश्वासोपगतेषु वा महानुभावेषु वा तपस्विषु कृतः पुनः पुनरपकारः। स चापि कर्माशयः सद्य एव परिपच्यते। यथा नन्दीश्वरः कुमारो मनुष्यपरिणामं हित्वा देवत्वेन परिणतः। तथा नहुषोऽपि देवानामिन्द्रः स्वकं परिणामं हित्वा तिर्यक्त्वेन परिणत इति। तत्र नारकाणां नास्ति दृष्टजन्मवेदनीयः कर्माशयः। क्षीणक्लेशानामपि नास्त्यदृष्टजन्मवेदनीयः कर्माशय इति" इति।

तत्र वैशारद्याम्—"क्लेशो मूलं यस्योत्पादे च कार्यकरणे च स यथोक्तः" इति क्लेशमूलपदस्य व्याख्यानम्। आशेरते देहगेहादावहं ममाभिमानवन्तो भवन्ति सांसारिकाः पुरुषा यस्मिन् सति स आशयः। कर्मणामाशयौ धर्माधर्मौ। कामात्काम्यकर्मप्रवृत्तौ स्वर्गादिहेतुर्धर्मो भवति, एवं लोभात् परद्रव्यापहारादावधर्मः, एवं मोहादधर्मे हिंसादौ धर्मबुद्धेः प्रवर्तमानस्याधर्म एव, न त्वस्ति मोहजो धर्मः। अस्ति तु क्रोधजो धर्मः, तद् यथा ध्रुवस्य जनकावमानजन्मनः क्रोधात् तज्जिगीषयाऽऽहितेन कर्माशयेन पुण्येनान्तरिक्षलोकवासिनामुपरि स्थानम्, अधर्मस्तु क्रोधजो ब्रह्मवधादिजन्मा प्रसिद्ध एव भूतानाम्। तस्य च पुण्यापुण्योभयरूपस्य कर्माशयस्य दृष्टजन्मवेदनीयत्वादृष्टजन्मवेदीयत्वाभ्यां द्वैविध्यम्। तत्र दृष्टजन्मवेदनीयः सद्य परिपाकी पुण्यरूपः कर्माशयो नन्दीश्वरस्योदाहृतो भाष्ये। तादृश एवापुण्यरूपः कर्माशय उदाहृतो नहुषस्य। येन कर्माशयेन कुम्भीपाकादयो नरकभेदाः प्राप्यन्ते तत्कारिणां तु नास्ति दृष्टजन्मवेदनीयः कर्माशयः, नहि मनुष्यशरीरेण तत्परिणामभेदेन वा सा तादृशी वत्सरसहस्रादिनिरन्तरोपभोग्या वेदना संभवति।

ननु क्षीणाऽविद्यादिक्लेशानामपि नास्त्यदृष्टजन्मवेदनीयः कर्माशय इत्युक्तं भाष्ये । तत्र कर्माशयस्याविद्यामूलत्वे विद्योत्पादे सत्यविद्याविनाशाद् विद्यावतां कर्म आशयान्तरं वा मा चैषीत्, तथापि प्राक्तनकर्माशयानामनादि-भवपरम्परासंचितानामसंख्यातानामनियतविपाककालानां भोगेन क्षपयि-तुमशक्यत्वादशक्योच्छेदः संसार इत्याशङ्का सूत्रेण समाहिता—"सति मूले तद्विपाको जात्यायुर्भोगाः" [ २।१३ ] इत्यनेन । व्याख्यातं च भाष्ये—"सत्सु क्लेशेषु कर्माशयो विपाकारम्भी भवति नोच्छिन्नक्लेशमूलः । यथा तुषावनद्धाः शालितण्डुला अदग्धबीजभावाः प्ररोहसमर्था भवन्ति, नाप-नीततुषा दग्धबीजभावा वा; तथा क्लेशावनद्धः कर्माशयो विपाकप्ररोही भवति, नापनीतक्लेशो न प्रसंख्यानदग्धबीजभावो वा" [ तत्रैव ] इति । स च विपाकस्त्रिविधो जातिरायुर्भोग इति । तत्र योगभाष्ये यथा कर्माश-यस्य क्लेशमूलत्वं तथा तद्विपाकस्यापि क्लेशमूलत्वमिति प्रसाध्य विकल्पितम् । तथा हि—किमेकं कर्मैकस्य जन्मनः कारणम्, अथैकं कर्मानेकं जन्माऽऽ-क्षिपतीति प्रथमो विकल्पः । किमनेकं कर्मानेकं जन्म निर्वर्तयति, अथानेकं कर्मैकं जन्म निर्वर्तयतीति द्वितीयो विकल्पः । तत्र पक्षत्रये दोषानुपन्यस्य सिद्धान्तितम्—अनेकं कर्मैकस्य जन्मनः कारणमिति [ २।१३ ] । तस्मा-ज्जन्मप्रायणान्तरे कृतः पुण्यापुण्यकर्माशयप्रचयो विचित्रः प्रधानोपसर्जन-भावेनावस्थितः प्रायणाभिव्यक्त एकप्रघट्टकेन मिलित्वा मरणं प्रसाध्य संमूर्छित एकमेव जन्म करोति । तच्च जन्म तेनैव कर्मणा लब्धायुष्कं भवति । तस्मिन्नायुषि तेनैव कर्मणा भोगः संपद्यते । असौ कर्माशयो जन्मायुर्भोगहेतुत्वात् त्रिविपाकोऽभिधीयते ।

स चायं कर्माशय ऐकभविकः, जन्मादिप्रायणान्तैकभवमात्रवृत्ति-रित्यर्थः । तत्र भव इत्यत्र भवनं सत्त्वमेव न तूत्पत्तिः, तत्र जात इत्यनेन पौनरुक्त्यात् । इत्थमदृष्टजन्मवेदनीयस्यैकभविकस्य कर्माशयस्य त्रिविपाकत्व-मुक्तम् । दृष्टजन्मवेदनीयस्तु कर्माशयो न त्रिविपाकः, किन्त्वेकविपाकारम्भी द्विविपाकारम्भी वा । तदप्युक्तमत्रैव भाष्ये—"दृष्टजन्मवेदनीयस्त्वेकविपाका-रम्भी, भोगहेतुत्वात् । द्विविपाकारम्भी वा, आयुर्भोगहेतुत्वात्, नन्दीश्वर-वन्नहुषवद्वा" [ तत्रैव ] इति । ननु यथैकभविकः कर्माशयस्तथा यदि क्लेशवासनाः भोगानुकूलाश्च कर्मविपाकानुभववासना अप्यैकभविक्यस्तदा मनुष्यस्तिर्यग्योनिमापन्नो न तज्जातीयोचितं भुञ्जीत तिर्यग्जातीयोचित-भोगवासनानामेकभविकत्वेनात्र जन्मन्यसत्त्वादित्याशङ्कायां समाहितं भाष्ये—"क्लेशकर्मविपाकानुभवनिर्वर्तिताभिस्तु वासनाभिरनादिकालसंमू-

ञ्छितमिदं चित्तं चित्रीकृतमिव सर्वतो मत्स्यजालं ग्रन्थिभिरिवाऽऽततमित्येता अनेकभवपूर्विका वासनाः। यस्त्वयं कर्माशय एष एवैकभविक उक्तः'' [ तत्रैव ] इति।

ये संस्काराः स्मृतिहेतवस्ता वासनाः, ताश्चानादिकालीना इति। किञ्च, कर्माशयस्यापि दृष्टजन्मवेदनीयस्य नियतविपाकस्यैवैकभविकत्व-नियमो न त्वदृष्टजन्मवेदनीयस्यानियतविपाकस्य। यतस्तस्य त्रयी गतिः— कृतस्याविपक्वस्य नाशः, प्रधानकर्मण्यावापगमनं ( उपसर्जनीभावः ) वा, नियतविपाकप्रधानकर्मणाऽभिभूतस्य वा चिरमवस्थानमिति। तत्र कृतस्या-विपक्वस्य नाशो यथा तपःस्वाध्यायादिसाध्यशुक्लकर्माशयोदयादिहैव नाशः कृष्णस्य। कर्माशयस्यादत्तफलस्य प्रधानकर्मण्यावापगमनं यत्रेदमुक्तम्— "स्यात् स्वल्पः संकरः सपरिहारः सप्रत्यवमर्षः'' [ यो० भा० २।१३ ] इत्यादि। नियतविपाकप्रधानकर्मणाऽभिभूतस्य वा चिरमवस्थानमित्यत्र हेतुः—अदृष्टजन्मवेदनीयस्य नियतविपाकस्यैव कर्मणो मरणं समानमभि-व्यक्तिकारणमुक्तम्, न त्वदृष्टजन्मवेदनीयस्यानियतविपाकस्य। तथा च यदनियतविपाकमदृष्टजन्मवेदनीयं कर्म तन्नश्येदावापं वा गच्छेदभिभूतं वा चिरमप्युपासीत, यावत्समानं कर्माभिव्यञ्जकमस्य निमित्तं नैव विपाकाभि-मुखं करोतीति। तद्विपाकस्यैव देशकालनिमित्तानवधारणादियं कर्मगति-र्विचित्रा दुर्विज्ञाना चेति। तदित्थं समासतो निरूपिताः कर्मवासनाः।

पूर्वप्रज्ञावासना त्वनुभवाज्जायते संशयान्यज्ञानमात्राद्वेत्यस्ति पक्षद्वयम्। किन्तूपेक्षानात्मकत्वमपि पक्षद्वये वासनाकारणे विशेषणतया देयम्, उपेक्षात्मकनिश्चयेन वासनाया अजननात्। तदुक्तम्—

भावनाख्यस्तु संस्कारो जीववृत्तिरतीन्द्रियः।
उपेक्षानात्मकस्तस्य निश्चयः कारणं भवेत्॥
[ कारिकावल्याम्, १६० ]

"स्मरणं प्रत्युपेक्षाऽन्यनिश्चयत्वेन कारणत्वम्'' इति तत्र मुक्ता-वली। अनुभववासनानां कार्यं यथा स्मृतिस्तथा धर्माधर्मावपि। एतदप्युक्तं तत्रैव—"इमौ तु वासनाजन्यौ ज्ञानादपि विनश्यतः'' [ १६४ ] इति। "इमौ धर्माधर्मौ'' इति मुक्तावली। "ईश्वरे मिथ्याज्ञानजन्यवासनाविरहान्न धर्मादेरुत्पत्तिः'' इति दिनकरी। तथा च तुल्यन्यायाज्जीवन्मुक्तेऽपि मिथ्याज्ञानवासनानां देहधारणार्थमनुवृत्तावपि विद्यया बाधितत्वान्न प्रवृत्त्या धर्मादेरुत्पत्तिः। बाधिता अप्यविद्याप्रत्यया-

स्तद्वासनाश्चानुवर्तन्त एव, यथेन्द्रजालिकवस्तुविषयाः प्रत्ययास्तद्वासनाश्च। न चैन्द्रजालिकप्रत्ययानां स्वविषयमिथ्यात्वबुद्ध्या बाधितत्वेनोपेक्षात्मकत्वात् कथं तेभ्यो वासनासमुद्भव इति वाच्यम्; ऐन्द्रजालिकप्रत्ययानां प्रागुक्तरीत्या बाधितत्वेऽप्यपेक्षात्मकबुद्धिरूपत्वात्। तथा हि—हेयत्वेनोपादेयत्वेन वाऽपेक्षितो यस्तद्विषया बुद्धिरपेक्षाबुद्धिरभिमता। तत्रैन्द्रजालिकवस्तूनां हेयत्वेनाऽपेक्षितत्वम्। न च चरमधीरूपे आत्मसाक्षात्कारे वासनाजनकत्वमस्ति, न वा ? यद्यस्ति, तदा वासनायाः कथं नाशः, वासनामुत्पाद्य वृत्तेर्विनाशात्। यदि न तस्य वासनाजनकत्वम्, तदा कथमुपेक्षान्यनिश्चयत्वेन वासनां प्रति कारणतेति वाच्यम्; तस्य वासनाजनकत्वाभ्युपगमात्। वासनानाशस्तु सुन्दोपसुन्दन्यायेन परस्परेण परस्परस्य नाशाभ्युपगमात्। यद्वा वृत्तिनाशस्यैवागत्या वासनानाशकत्वम्। यद्वा कतकरजोन्यायेन यथा वृत्तेः स्वनाशकत्वमभ्युपेयते तथा स्वजन्यवासनानाशकत्वमपि। वासनानाशानुरोधेन चापेक्षाबुद्धिवत्तस्याः क्षणत्रयावस्थायित्वमभ्युपेयत इति।

अथेदानीं कारणोत्कर्षापकर्षाभ्यां वासनानामुत्कर्षापकर्षौ दिङ्मात्रेण प्रदर्श्येते। यथा विद्याप्रकर्षापकर्षाभ्यां मणिरूप्यादिसाक्षात्कारे स्वरादिसाक्षात्कारे वा हेतूनां वासनानां प्रकर्षापकर्षौ तत्कार्यप्रकर्षापकर्षाभ्यां कल्प्यौ, यथा वाऽविद्याप्रत्ययानां बाधितत्वाबाधितत्वरूपापकर्षप्रकर्षाभ्यां संसारहेतुवासनानामपकर्षप्रकर्षौ। ततो हि ज्ञानिनोऽदृढः संसाररूपो बन्धस्तात्कालिकः, अज्ञस्य तु दृढोऽविच्छिन्नश्च स इति। यथा वा कर्मणां प्रकर्षापकर्षाभ्यां तज्जन्यवासनानां धर्माधर्मरूपाणां प्रकर्षापकर्षौ धर्मशास्त्रेषु दृष्टौ विपाकानुभवेन वा कल्प्यौ। यथा वा प्रत्यक्षानुभवजनितवासनानां प्रकर्षः, परोक्षानुभवजनितवासनानामपकर्षस्तत्कार्यस्मृतिप्रकर्षापकर्षाभ्यां कल्प्यत इति।

अथ वासनानामुद्बोधकानि। तत्रैकभवसंपादितविद्याऽविद्याऽनुभववासनानामुद्बोधकानि सजातीयान्येव। तानि समासत उक्तानि न्यायमञ्जर्यां प्रमाणप्रकरणे—

"आकारः स्मृत्युपारूढः प्रायेण स्फुरति भ्रमे।
स्मृतेस्तु कारणं किञ्चित् कदाचिद् भवति क्वचित्॥
क्वचित् सदृशविज्ञानं कामशोकादयः क्वचित्।
क्वचित्त्वदर्शनाभ्यासः तिमिरं चक्षुषः क्वचित्॥

क्वचिन्निद्रा क्वचिच्चिन्ता धातूनां विकृतिः क्वचित् ।
अलक्ष्यमाणे तद्धेतावदृष्टं स्मृतिकारणम् ॥"
[ पृ० ८३-८४ ] ।

अत्र सदृशविज्ञानादीनि वासनोद्बोधकत्वेन स्मृतिकारणानि द्रष्टव्यानि । अनेकभवसंचितानां तु प्रागुक्तवासनानां कर्मवासनानां च मरणमभिव्यञ्जकमिति प्रागुक्तशाङ्करभाष्य-योगभाष्यादितो ज्ञेयमिति ।

अथ मातापित्रादिवासनानां पुत्रादौ संक्रमः । दृश्यते हि शास्त्रेषु तत्र तत्र मातापित्रादिवासनानां पुत्रादौ संक्रमः । तथा हि—

"नैतच्चित्रं त्वयि क्षत्तर्बादरायणवीर्यजे ।
गृहीतोऽनन्यभावेन यत्त्वया हरिरीश्वरः ॥"
[ ३।५।१९१ ] इति भागवते ।

अस्यायमर्थः—हे क्षत्तर्विदुर बादरायणवीर्यजे व्यासवीर्यप्रभवे त्वयि नैतच्चित्रम् । एतत्पदार्थमेव दर्शयत्युत्तरार्धेन गृहीत इत्यादिना । यत्त्वया अनन्यभावेन अनन्यत्वेन अभेदेनेश्वरो हरिर्गृहीत इति यद् यदिदं ग्रहणं नैतच्चित्रमित्यर्थः । अयं भावः—व्यासेन हि स्वाभेदेनेश्वरो हरिर्गृहीत इति तद्वीर्यप्रभवे त्वय्यपि तदुपपद्यत इति नैतच्चित्रम्; अन्यवीर्यप्रभवे त्वेतादृशं विज्ञानं चित्रं भवेदिति । अत्र स्वाभेदेन ज्ञाने बादरायणवीर्यप्रभवत्वं विशेषणविधया हेतुरुपात्तो न तु बादरायणानुशिष्टत्वम् । अत एवात्र परिकरालङ्कारः । एवं पराशरस्य गर्भ एव वेदप्रतिभानम् । तदुक्तमादिपर्वणि महाभारते—

पुत्रि कस्यैष साङ्गस्य वेदस्याध्ययनस्वनः ।
पुरा साङ्गस्य वेदस्य शक्तेरिव मया श्रुतः ॥ [ १७७।१४ ] इति ।

न चेदं प्राग्भवीयस्वीयवेदाभ्यासजनितसंस्कारवशादेवेति वाच्यम्; शक्तेरिवेति सादृश्यानुपपत्तेः । उच्चारणाभ्यासजनितवासनाविशेषादेव पैतृकादेतत्संभवः । अतः पितुर्वासनासंक्रमो गर्भ इति प्रतीयते । किञ्च, मातुर्वासनासंक्रमोऽपि गर्भे भवतीति । अपि च, मातापित्रोः कर्मवासनासंक्रमोऽपि गर्भे भवतीति मन्वादिवाक्यतः प्रतीयते । तथा हि मनुः—

गार्भैर्होमैर्जातकर्मचौडमौञ्जीनिबन्धनैः ।
बैजिकं गार्भिकं चैनो द्विजानामपमृज्यते ॥ [ २।२७ ] ।

अत्र बैजिकमेनः पितृजम् । गार्भिकमेनो मातृजम् । अत्र बीजपदेन शुक्रम्, गर्भपदेन शोणितं गृह्यते । गृह्णाति गिरति वा शुक्रमिति व्युत्पत्त्या ।

फलितज्यौतिषेऽपि मातापितृजपापैर्बालारिष्टं निर्दिष्टम्। तथा हि जातकपारिजाते—

आद्वादशाब्दान्तरयोनिजन्मनामायुःकला निश्चयितुं न शक्यते।
मात्रा च पित्रा कृतपापकर्मणा बालग्रहैर्नाशमुपैति बालकः॥
आद्ये चतुष्के जननीकृताघैर्मध्ये तु पित्रर्जितपापसंघैः।
बालस्तदन्त्यासु चतुःशरत्सु स्वकीयदोषैः समुपैति नाशम्॥
[ ४।१-२ ] इति।

तदेष मातापितृजवासनानां संक्रमो गर्भे कथमुपपद्यत इति विचार्यते। गर्भस्य बीजस्थानीये पितुः शुक्रे पितुः सर्वेऽवयवाः सूक्ष्मरूपेण सन्ति बीजे वृक्षावयवा इवेति सत्कार्यवादमाश्रित्य स्वीक्रियते। तथा च पितुः सत्त्वस्याप्यवयवाः शुक्रे सन्तीति मन्तव्यम्, मनसोऽन्नमयत्वेन सावयवत्वात्। अत्रोक्तार्थे श्रुतिरपि—

"अङ्गादङ्गात् संभवसि हृदयादधिजायसे।
आत्मा वै पुत्रनामाऽसि त्वं जीव शरदः शतम्॥"
[ पार० गृ० १।१८।२ ] इति।

व्याख्यातं च हरिहरकर्कजयरामादिभिः—"हृदयादन्तरङ्गादपि अधि अधिकतया जायसे" इति। अस्यायं भावः—न केवलं बाह्येभ्य एवाङ्गेभ्यो जायसे, किन्त्वन्तरङ्गादान्तराद् हृदयादप्यधिकतया जायसे; पितृहृदयस्य संकल्पादिरूपेण गर्भेऽधिकप्रभावादिति। एवं च शुक्रद्वारा गर्भे पितृवासनासंक्रमः संभवति। पितृपूर्वजवासनासंक्रमश्च। एवं मातृपूर्वजवासनासंक्रमश्च शुक्रशोणितद्वारको गर्भे संभवति। दृश्यते च लोकेऽनुभूतं च मया मातामह्या दौहित्रे तदपत्ये च वासनासंक्रमः। उन्मादो हि चित्तविभ्रमो मानसो रोगः। मातृवासनासंक्रमस्तु तत्र शोणितद्वारा संभवति, प्राक्शुक्रोक्तयुक्त्यैव शोणिते हि मातुरन्तरङ्गबहिरङ्गाणि सत्कार्यनयेन समवेतानीति।

किञ्च, मातृशोणितेन गर्भस्य हृदयोत्पत्तिरुक्ता सुश्रुते—"गर्भस्य केशश्मश्रुलोमास्थिनखदन्तसिरास्नायुधमनीरेतःप्रभृतीनि स्थिराणि पितृजानि। मांसशोणितमेदोमज्जहृन्नाभियकृत्प्लीहान्त्रगुदप्रभृतीनि मृदूनि मातृजानि" [ ३।३३ ] इति। किञ्च, गर्भावस्थायां मातृहृदयं गर्भहृदयं च परस्परसंबद्धमिति विषयेषु गर्भाभिप्रायो मातुरभिप्रायेण ज्ञायते। अत एव गर्भावस्थायां नारी द्विहृदयेति शास्त्रे व्यवह्रियते। तथा हि सुश्रुते—"तस्माद् गर्भश्चतुर्थे मास्यभिप्रायमिन्द्रियार्थेषु करोति। द्विहृदयां च नारीं दौर्हृदिनी-

माचक्षते। दौर्हृदविमानाच्च कुब्जं कुणिमित्यादिकं सुतं नारी जनयति" [ ३।१८ ] इति। एवं मातृवासनासंक्रमोऽपि गर्भे संभवति। किं बहुना, मनसोऽन्नमयत्वेन सावयवत्वे इन्द्रियप्रणालिकया तस्य संकल्परूपवृत्तिरूपेण तस्य बहिर्निर्गमने ऋत्विगादिद्वारा संकल्पिते पुंसवनजलादौ चर्वादौ वा संकल्पकवासनानां संक्रमेण तदुपभोगात्तादृशाऽपत्योत्पत्तिवर्णनं विश्वामित्र-परशुरामाद्युपाख्यानेषु पुराणेषूपलभ्यमानमप्युपपद्यते। यद्वा संकल्पजन्या-दृष्टरूपैव वासना संकल्पितजलादौ, यथा प्रोक्षणजन्यादृष्टं व्रीहिष्विति ज्ञेयम्।

नन्वेवमपि योगिनां निर्माणकायेषु कथं वासनासंक्रमः, तदभावे बहूनां मनसां कथमेकाभिप्रायतेति चेन्न, निर्माणकायेष्वेकं नायकं मनश्चित्तकारण-मस्मितामात्रमुपादाय निर्मितम्, अन्यानि तु मनांसि तत्परतन्त्राणीत्येकाभि-प्रायाण्यनेकाभिप्रायाणि च भवन्ति। तदिदमुक्तं पातञ्जलदर्शने कैवल्यपादे— "निर्माणचित्तान्यस्मितामात्रात्", "प्रवृत्तिभेदे प्रयोजकं चित्तमेकमनेकेषाम्" [ ४।४-५ ] इति सूत्रयोर्भाष्ये वैशारद्यां च।

किञ्च, वासनासंक्रमाभावे तपस्विनिष्ठाया अहिंसासंकल्पजनितादृष्ट-रूपाया अहिंसाध्यानजवासनारूपाया वा वासनायास्तत्सन्निधौ व्याघ्रान्तः-करणे कथं संक्रमः? संक्रमवादिनां तु चक्षुरिन्द्रियप्रणालिकया बहिर्देश-निर्गततपस्विमनोवृत्तिवासनाया इन्द्रियप्रणालिकया बहिर्निर्गते व्याघ्रादि-मनसि संक्रम इति संभवति। तदुक्तं योगसूत्रे—"अहिंसाप्रतिष्ठायां तत्सन्निधौ वैरत्यागः" [ २।३५ ] इति। किञ्च, ऐन्द्रजालिकमायास्थलेऽप्यैन्द्रजालिक-वासनानां स्वभ्यस्तानुभवजनितानामुत्कटानां तत्कामप्रयोज्यानां प्रेक्षका-न्तःकरणेषु बहिरिन्द्रियप्रणालिकया बहिर्निगतेषु संक्रमादैन्द्रजालिकवास-नानुसारेण वस्तुसाक्षात्कारः प्रेक्षकाणाम्। किञ्च, "हरतेर्गतताच्छील्ये" [ १।३।२१ ] इति कात्यायनवार्त्तिकस्य—"पैतृकमश्वा अनुहरन्ते, मातृकं गावः" इत्युदाहरणादपि गर्भे मातृवासनासंक्रमो द्रष्टव्यः।

अथ वासनानां नाशकानि। तत्राविद्यावासनानां नाश आत्मविद्यया। सा तु षोडशपदार्थी तत्त्वज्ञानसहकृतात्मसाक्षात्काररूपा न्यायनये। यद्यपि षोडशपदार्थानां तत्त्वज्ञानान्निःश्रेयसाधिगमो न्यायशास्त्रे उक्तस्तत्क्रमे च मिथ्याज्ञानापाय एव प्रथमं दर्शित इति षोडशपदार्थानां तत्त्वज्ञानान्मिथ्या-ज्ञानापायक्रमेण मोक्ष इति लभ्यते, तथाप्यात्मेतरपदार्थज्ञानानां सहकारि-त्वमेवात्मविद्यया मिथ्याज्ञानविनिवृत्तौ, विद्याऽविद्ययोः समानविषयकत्वेन नाश्यनाशकभावस्वीकारात्। सांख्यानां तु सत्त्वपुरुषान्यताख्यातिरूपा। अद्वैतिनामधिष्ठानात्मसाक्षात्काररूपा। रज्ज्वादिविषयकाविद्यावासनाना-

मप्यधिष्ठानसाक्षात्कारेणैव विनिवृत्तिः। विशेषधर्मदर्शनं त्वधिष्ठानसाक्षात्कार एवोपयुज्यते। अविद्यावासनानिवर्तकत्वं त्वधिष्ठानसाक्षात्कारस्यैव, व्यापकत्वात्। यावन्ति ज्ञानानि तावन्त्यज्ञानानीति नयेनानेकाविद्यावासनास्वीकारेणैकस्या एवाधिष्ठानसाक्षात्कारेण नाश इति रज्जौ पुनरपि सर्पादिविभ्रमसंभवः। न्यायनये तु भ्रमस्यान्यथाख्यातिरूपतया नाविद्याप्रत्ययजनितवासनानामुपयोगो विभ्रमे, किन्तु ज्ञानलक्षणाप्रत्यासत्त्या पूर्वदृष्टस्य सर्पादेरेव रज्ज्वादौ भानमित्यधिष्ठानविद्ययाऽविद्याप्रत्ययजनितवासनानाशस्वीकारे न काप्यनुपपत्तिः।

अविद्याक्षयोपाया अन्येऽपि लघुयोगवासिष्ठे प्रदर्शिताः—

"यावत् किञ्चिदिदं दृश्यं साऽविद्या क्षीयते च सा।
आत्मभावनया ब्रह्मन्नात्मासौ कीदृशः स्मृतः॥"

[ उत्पत्तिप्रकरणे ९।४७ ]

अत्रात्मभावनाऽविद्यातद्वासनानां प्रतिपक्षभूतेति लभ्यते। निःसङ्गव्यवहारित्वाच्छरीरनाशदर्शित्वाच्च वासना न प्रवर्तत इति। पदार्थानां भावाभावाभ्यां हर्षामर्षविकारदा या मलिना वासना सा सङ्गः, तत्त्यागेन निःसङ्गव्यवहारित्वम्। विचारेणाप्यविद्यावासनाविनिवृत्तिः। तदुक्तम्—

"तस्माद् वासनया बद्धं मुक्तं निर्वासनं मनः।
राम निर्वासनीभावमाहराशु विवेकतः॥"

[ स्थितिप्र० ६।४५ ] इति।

विद्यावासनानां पूर्वप्रज्ञावासनानां च कालविशेषः, अदृष्टम्, रोगविशेषः, विषयान्तरेषूत्कटो रागः, तन्मूलिका सातत्येन साभिनिवेशप्रवृत्तिरूपा विषयान्तरासक्तिर्वा गान्धर्वादिशास्त्रानभ्यासरूपः प्रमादो वा यथायथं निवर्तकानि। प्रारब्धेतरकर्मवासनानां त्वनन्तभवसंचितानां सर्वासामपि तत्त्वसाक्षात्कारेण प्रविलयः। तदुक्तम्—

"भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः"

[ मुण्डक० २।२।८ ] इति।

"ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा।"

[ भ० गी० ४।३७ ] इति च।

किञ्च, संचितकर्मणां तपःस्वाध्यायजपादिजनितेन सन्ध्यावन्दनादिरूपनित्यकर्मजनितेन चादृष्टेन शुक्लेन प्रतिपक्षभूतेन प्रक्षयः। यदुक्तम्—"कषाये

कर्मभिः पक्वे ततो ज्ञानं प्रवर्तते'' इति । अत्र कषायः पापम्, पक्के दग्धे इत्यर्थः । प्रायश्चित्तादपि प्रक्षयः कर्मणाम्, अकृते प्रायश्चित्ते भोगात् प्रक्षयः । ''नाभुक्तं क्षीयते कर्म'' [ ब्रह्मवै० प्रकृ० २६।७० ] इति तु प्रारब्धकर्मपरम्, प्रारब्धं कर्म तु सद्यो विपच्यमानेन नियतकालपरिपाकेण दृष्टजन्मवेदनीयेन बलवता कर्मणा पराभूय प्रतिबध्यत एव केवलम्, न तु निवर्त्यत इत्येतच्छास्त्रबलादेवायाति । केषाञ्चिद् दुर्बलानां कर्मणां पश्चात्तापादेव प्रक्षयः ।

किं बहुना, सर्वैरपि लौकिकैर्वैदिकैश्च निष्कामकर्मभिर्भगवत्यर्पितैः सकलकल्मषक्षयः । तदुक्तम्—

''यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् ।
यत् तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणम् ॥
शुभाशुभफलैरेवं मोक्ष्यसे कर्मबन्धनैः ।''

[ भ० गी० ९।२७-२८ ] इति ।

न च निष्कामकर्मणां स्वफलारम्भकत्वमपि, कामनाया अभावेनाऽनधिकारिकृतत्वात् ; फलकामस्यैव कर्मस्वधिकारादिति । तदित्थं वासनास्तत्संबद्धं चाखिलं पदार्थजातं समासेन निरूपितम् ।

अत्रैते श्लोका भवन्ति—

शुभाशुभाभ्यां मार्गाभ्यां वहन्ती वासनासरित् ।
पौरुषेण प्रयत्नेन योजनीया शुभे पथि ॥

[ लघुयोगवा० मुमुक्षुप्र० १।९ ]

यत्तु चञ्चलताहीनं तन्मनोऽमृतमुच्यते ।
तदेव च तपः शास्त्रं सिद्धान्तो मोक्ष उच्यते ॥

[ उत्पत्तिप्र० ९।२५ ]

मम पुत्रा मम धनमयं सोऽहमिदं मम ।
इतीयमिन्द्रजालेन वासनैवाधिवल्गति ॥

[ उत्पत्तिप्र० ९।३३ ]

वासनातन्तुबद्धोऽयं लोको हि परिवर्तते ।
सा प्रवृद्धाऽतिदुःखाय सुखायोच्छेदमागता ॥

[ स्थितिप्र० २।३६ ]

भववासनया ग्रस्ता मोहवासनया युताः ।
आशापाशनिबद्धास्ते ततः कृपणतां गताः ॥

[ स्थितिप्र० २।७३ ]

संसाराम्बुनिधावस्मिन् वासनाम्बुपरिप्लुते ।
ये प्रज्ञानावमारूढास्ते तीर्णा दुःखिताः परे ॥

[ स्थितिप्र० ४।१०९ ]

वासनां तु सदा राजन् स्वरूपं विद्धि चेतसः ।
चित्तशब्दस्तु पर्यायो वासनाया उदाहृतः ॥ इति ॥

[ निर्वाणप्र० ९।३६३ ]



# हिन्दूधर्मसंहिताविमर्शः

प्रस्ताविते हिन्दूविवाहतद्विच्छेदविधेयकनाम्नि नियमकदम्बके हिन्दूबालतत्संरक्षकविधाने च सामान्यतो विशेषतश्च विचारोऽस्य निबन्धस्य विषयः। तत्र विचारस्थूलभूता इमे विकल्पाः प्रागुपतिष्ठन्ते—

१. हिन्दूनां तत्तच्छाखीयधर्मग्रन्थेषु जाग्रत्स्वस्य नव्यस्य सृज्यमानस्य नियमकदम्बकस्याधुनाऽपेक्षाऽस्ति, न वा।

२. यद्याद्यः कल्पः, तदैतन्नियन्तव्या विषयाः के ये धर्मशास्त्रेष्वनियन्त्रिताः।

३. लौकिको वा कश्चन स्वार्थोऽस्त्येतन्नियमनिर्माणे येन सर्वेऽपि हिन्दूपदभाजो नानाशाखाश्रिता एकसूत्रनद्धाः स्युः।

४. यद्वा धर्मशास्त्रीयनियमानामधुनाऽशक्त्या परिस्थितिवशादपाल्यत्वम्।

५. यद्वा परिवर्तिनि संसारे वर्तमानकाले प्राक्तनधर्मशास्त्रनियमानां तत्कालापेक्षया विहितानामनुष्ठाने दुःखावहत्वेन परिवर्तनावश्यकता।

६. यद्वा धर्मशास्त्राणाम् "न स्त्री स्वातन्त्र्यमर्हति" इत्यादिवाक्यैः सर्वदा नारीपारतन्त्र्यप्रतिपादकत्वेन तासां समानाधिकारज्ञापनाय नवीननियमनिर्माणावश्यकता।

७. यद्वा धर्मशास्त्राणां परस्परविरोधित्वेनानियामकत्वान्नवीननियमनिर्माणस्यावश्यकत्वम्।

८. एतन्नियमकदम्बकस्य धर्मशास्त्रमूलकत्वं न वा।

९. इयं च नवीना विवाहतद्विच्छेदव्यवस्था किमिति हिन्दुष्वेवापेक्ष्यते, नेतरजातिष्वेतद्देशवासिनीषु।

१०. किमितरजातिषु शाखाभेदा उच्चनीचजातिभेदा वा न सन्ति।

## तत्र विचारसामान्यम्

तत्र प्रागुक्तेषु विकल्पेषु सत्सु वयं तु युक्तं विमृशामस्तत्तच्छाखीयधर्मग्रन्थेषु जाग्रत्सु न नवीननियमनिर्माणस्यावश्यकता वर्तते। न हि धर्मशास्त्रनियन्तव्यविषयेभ्योऽतिरिक्ता विवाहविवादसदाचारप्रायश्चित्तातिरिक्ता

विषया नवीननियमनियन्तव्या इदानीमुपस्थिताः। नानीदृशं जगत्कदापीति मीमांसासिद्धान्तात्।

नापि हिन्दूनामेकसूत्रनद्धत्वं नवीननियमनिर्माणप्रयोजनम्। यथा प्रागिदानीं च शाखासहस्रभिन्नेऽपि हिन्दूधर्मे सर्वानुगतसामान्यहिन्दूधर्म-देशसमाजकुलाचारवेषभूषादिभिर्हिन्दूत्वेन समनुगतो व्यवहारस्तथाग्रेऽपि भविष्यतीति।

धर्मशास्त्रीयनियमानां प्राक्तनानामशक्त्या परिपाल्यत्वाभावे न परिपाल्यन्तां ते तत्रभवतां सामर्थ्याभावेनाधिकारभावात्, अर्थी समर्थोऽपर्युदस्तश्चाधिकारी भवतीति न्यायात्। ये तु शक्याः परिपाल्यास्त एव पाल्यन्ताम्। दृष्टाश्चाशक्त्यवसरे आपद्धर्मा धर्मशास्त्रेषु सुबहुशः। अगम्यागमनाभक्ष्य-भक्षणानुचितक्रियादिरूपा यथेष्टचेष्टास्तु परलोकदेशसमाजकुलभ्रंशहेतुत्वान्निरोद्धव्या एव। अन्यथा नवीननियमोऽपि यत्किञ्चिद्यथेष्टचेष्टानिरोधकत्वा-दनुपादेयतामापत्स्यत एव। वयं तु साधूत्पश्याम इदं दृढं नियमबन्धनमेव सहस्राधिकवर्षपरतन्त्राया हिन्दूजनताया दास्यकालेऽपि स्वधर्मादप्रच्युति-बीजम्। अत एवैनां कोऽपि धर्मः स्वधर्माच्च्यावयितुं नाशकत्।

धर्मशास्त्रेषु परिवर्तनावश्यकत्वेऽप्यापद्धर्मकलिधर्मादिरूपैः परिवर्तनानि प्रागेव कृतानि तत्रास्माकं न काचिदपेक्षा। किञ्च भोः, इदं न विस्मर्तव्यम्—यथा धर्मशास्त्रीयशासनधर्मे परिवर्तनं स्वेच्छयाऽनिच्छया वा स्वीकृत्य तत्तद्राजसत्तायां शासनधर्माव्यवस्थया महद्दुःखमस्माभिरनुभूयते इदं रम्यमिदमरम्यमिति कलहेन तथैव विवाहादिष्वार्षनियमातिवृत्तावनर्थ-परम्परा पतिष्यतीति सावधानं विमृश्यताम्।

नारीणां समानाधिकारस्तु धर्मशास्त्रेष्वस्त्येव, अधिकोऽपि वर्तते। तथा हि—"नारी पुरुषस्यार्धम्" इति मनुशतरूपोपाख्याने श्रूयते। स्मर्यते च भगवतः शिवस्यार्धनारीश्वरमूर्तिः। विवाहे सति नारीयुक्तत्वात् पुरुषः पूर्णो भवतीत्यर्धवृगलदृष्टान्तेन छान्दोग्ये श्रूयते। प्राक् तु नारीसंबन्धाद-पूर्णः। अत एव नार्या सहैव पुरुषस्य सर्वधर्मानुष्ठानम्, न तु वियुक्तस्य।

तस्यां तु रोचमानायां सर्वं तद्रोचते कुलम्।<br>
तस्यां त्वरोचमानायां तत्कुलं न प्ररोहति॥ इति,<br>
भार्या त्वर्धं शरीरस्य पुत्रः स्वात्मैव केवलम्।<br>
आश्रितो भृत्यवर्गस्तु दुहिता कृपणं परम्॥<br>
तस्मादेतैरधिक्षिप्तः सहेतासंज्वरः सदा। इति च मनुः।

नार्याः क्वचिदाधिक्यमपि। यथा—क्षेत्रिणः पुत्र इति, न तु बीजिनः। यथा च व्यवहारे मातापितराविति मातुः पूर्वमुल्लेखः। यथा वा—

"पितुर्दशगुणं माता गौरवेणातिरिच्यते।" इति।

असारे खलु संसारे सारं सारङ्गलोचना।
यत्कुक्षिप्रभवा ह्येते वस्तुपाल भवादृशाः॥

इति कश्चिज्जैनकविः। शास्त्रेऽपि शक्तेरेव मुख्यं सृष्टिस्थितिसंहारकर्तृत्वम्, पुरुषे तु शक्तिसंबन्धादेव।

पिता रक्षति कौमारे भर्ता रक्षति यौवने।
पुत्रास्तु स्थाविरे भावे न स्त्री स्वातन्त्र्यमर्हति॥

इत्यादिवचनानि त्वप्रमादेन नारीरक्षापराणि। अन्यथा पुरुषान्तरसंपर्के रक्तविकृतौ संतानपरम्परा भ्रश्येत। अत एव योगियाज्ञवल्क्यः शास्त्रीयदारसंग्रहस्य फलमाह—

लोकानन्त्यं दिवः प्राप्तिः पुत्रपौत्रप्रपौत्रकैः।
यस्मात्तस्मात्स्त्रियः सेव्याः कर्तव्याश्च सुरक्षिताः॥
[ विवाहप्रक० ७८ ] इति,

भर्तृभ्रातृपितृज्ञातिश्वश्रूश्वशुरदेवरैः।
बन्धुभिश्च स्त्रियः पूज्या भूषणाच्छादनाशनैः॥
[ विवाहप्रक० ८२ ]

इति च स्त्रीणां सेव्यत्वं रक्ष्यत्वं पूज्यत्वं चाह। न चाधुना पुरुषाणां स्वातन्त्र्ये नारीणामपि स्वातन्त्र्यमस्त्विति साम्प्रतम्; पुरुषस्वातन्त्र्यस्यैव निरोधावश्यकत्वात्। श्रूयते स्मर्यते च रामचन्द्रचरितादिष्वेकनारीव्रतम्। तदेव प्रयत्नेन राजशासने उपादीयताम्। एवं च धर्मशास्त्रेषु नारीस्वातन्त्र्यमपहृतमिति वाक्यं नारीणां प्रतारणायैवेत्युक्तप्रायम्। नारीणां नराणां च यथेष्टचेष्टा तु निरोद्धव्या एवेति विविधपद्धत्या विमर्शे नास्ति नवीननियमकदम्बकनिर्माणस्यावश्यकता; यतो ह्याद्यनियमच्युतौ नियमानवस्थैव स्यात्, 'भिन्नरुचिर्हि लोकः' इति न्यायादिति।

धर्मशास्त्राणां परस्परविरोधाभासे प्रतीयमानेऽप्युदितानुदितहोमविधायकश्रुत्यादिवचनवन्मीमांसापद्धत्या कृतैव व्यवस्था सर्वेषां विरोधाभासवचनानां विज्ञानेश्वरादिभिः। किञ्च, श्रुतिमूलकत्वेन स्मृतीनां प्रामाण्यमत एव प्रत्यक्षं श्रुतिः, स्मृतिस्त्वनुमानमिति। अत एव प्रत्यक्षश्रुतिविरोधे स्मृतिर्बाध्यते। तथा च स्मृतीनामप्रामाण्ये त्यागे वा तन्मूल-

श्रुतीनामपि तत्प्रसङ्गः। स च हिन्दूधर्मग्रहिलैर्न ग्रहीतव्यो भविष्यति महत्यामप्यापदि।

एतन्नियमकदम्बकस्य धर्मशास्त्रमूलकत्वे वैयर्थ्यम्। तदमूलकत्वे चाप्रामाण्येन धर्मानियामकत्वम्। तर्कमूलकधर्मनियमानाम्—"तर्काऽप्रतिष्ठानात्" इति व्याससूत्रेण।

"यत्नेनानुमितोऽप्यर्थः कुशलैरनुमातृभिः।
अभियुक्ततरैरन्यैरन्यथैवोपपाद्यते ॥"

इति तदनुवादिन्या हरिकारिकया चाप्रतिष्ठितत्वबोधनात्।

किञ्च, मुस्लिमजातावपि व्यापिकायां व्याप्यानेकशाखासु जुलाहापठानशेखशैयदेत्यादिविविधाचाररूढिवादिनीषु च सतीषु यदि नवीना धर्मव्यवस्था तासु केनापि हेतुना न प्रस्तूयते न निबध्यते नोपन्यस्यते तर्हि तमेव हेतुं पुरस्कृत्य हिन्दूधर्मव्यवस्थाऽप्येषा नोपन्यासार्हा।

## अथ विचारविशेषः

### तत्र हिन्दूपदार्थनिर्णयः

ये हिन्दूशाखासु विशेषतो विभक्तान् धर्मान् सामान्यधर्मांश्च सर्वशाखास्वनुगतान् हिन्दूनां सदाचारांश्च कुलाचारांश्च समस्तान् व्यस्तान् वाऽऽश्रयन्ते, वर्णान्तर्गता वर्णबाह्या वाऽधुनापि वा ये स्वात्मनैव न तु कुलक्रमेण हिन्दूधर्मान् श्रयन्ते अत्र वसन्ति, विदेशे वा विदेशाद्वाऽऽगत्य किञ्चित्कालादत्र वसन्ति ते सर्वेऽपि हिन्दूपदभाजः। अवान्तरभेदस्तु तेषां प्राचीनो नवीनो वाऽस्त्येव भविष्यत्येव च पूर्वकाल इव। सामान्यधर्मेण तेषां सर्वेषामैक्यम्। शाखाधर्मैस्तु भेद इति यावत्। किं बहुना—वनदुर्गसमाश्रिताः किरातादयोऽपि हिन्दव एव।

### सापिण्ड्यनिर्णयः

सापिण्ड्यं तु—"पञ्चमात्सप्तमादूर्ध्वं मातृतः पितृतस्तथा" [विवाहप्रक० ५३] इति याज्ञवल्क्यवचनादेतत्संवादिमनुवचनाच्च मातृतः पञ्चपुरुषं पितृतः सप्तपुरुषमेव च युक्तम्। "त्रीनतीत्य मातृतः पञ्चातीत्य च पितृतः" इति पैठीनसिवचनं तु "अर्वाङ्निषेधार्थम्, न तु तत्प्राप्त्यर्थमिति सर्वस्मृतीनामविरोधः" इत्युक्त्वा विज्ञानेश्वरेण मिताक्षरायां व्यवस्थापितमिति न त्रिपुरुषं पञ्चपुरुषं च यथाक्रमं मातृतः पितृतश्च सापिण्ड्यम्। ये त्वेकपितृका भिन्नजातीयमातृकाश्च तेषां तु त्रिपुरुषं सापिण्ड्यं भवति—

यद्येकजाता बहवः पृथक् क्षेत्राः पृथग्जनाः ।
एकपिण्डाः पृथक् शौचाः पिण्डस्त्वावर्तते त्रिषु ॥

इति शङ्खवचनात् ।

## विवाहनियममीमांसा

"अस्मिन् नियमे स्वीकृते धर्मशास्त्राणां नोपयोगो भविष्यति" इति हिन्दूसंहितावचनमपि नियमानवस्थाप्रसङ्गदोषाद् दूषितं सामान्यतो विचारावसर एव । जीवत्पतिकाया जीवत्पत्नीकस्य च न विवाहान्तरमिति नियमवाक्येनानुमन्यमानो मृतपतिकाया विवाहस्त्रैवर्णिकेषु नोचितः, शास्त्रविरुद्धत्वात् । तथा च मनुः—

नान्यस्मिन् विधवा नारी नियोक्तव्या द्विजातिभिः ।
अन्यस्मिन् हि नियुञ्जाना धर्मं हन्युः सनातनम् ॥ इति,
न विवाहविधौ दृष्टं विधवावेदनं क्वचित् ॥ इति च ।

यत्तु—

"अपुत्रां गुर्वनुज्ञातो देवरः पुत्रकाम्यया ।
सपिण्डो वा सगोत्रो वा घृताभ्यक्त ऋतावियात् ॥"

[ याज्ञवल्क्य० विवाहप्रक० ६८ ]

इत्यादिनियोगवचनं स्मर्यते तत्तु वाग्दत्ताविषयम्,

"यस्या म्रियेत कन्याया वाचा सत्ये कृते पतिः ।
तामनेन विधानेन निजो विन्देत देवरः ॥"

इति मनुवाक्यात्; व्यवस्थापितं च मिताक्षरायां तत्रैव तथैव च । न च—

"नष्टे मृते प्रव्रजिते क्लीबे च पतिते पतौ ।
पञ्चस्वापत्सु नारीणां पतिरन्यो विधीयते ॥"

इति स्मृत्यन्तराद्युक्त एव विधवायाः पत्यन्तरसंबन्ध इति वाच्यम्; प्रागुक्तमनुवाक्यानुरोधेनास्यापि वाग्दत्तामात्रपरत्वात् । तथा हि—पताविति रूपं मुख्यार्थकपतिशब्दसदृशस्य पतित्वेनाख्यातार्थकस्य पतिशब्दस्य रूपम् । पतिरित्याख्यातः पतिः । आख्यानणिजन्तात्कर्मणि 'अच इः' इत्यौणादिक इप्रत्ययः । अत एव 'पतिः समास एव' इति नियमानाक्रान्त्या पत्याविति न रूपम्, "अभिव्यक्तपदार्था ये स्वतन्त्रा लोकविश्रुताः" इति न्यायात् ।

उपविष्टाऽसकृत्तस्मादनिर्विण्णाऽत्रपान्विता ।
वृद्धस्त्रीद्रव्यसंपन्ना प्रजायेत प्रजार्थिनी ॥

उपविष्टाऽसकृदिति । कदाचिदुत्थिता कदाचिच्छयाना कदाचिदुपविष्टेत्यर्थः । तेनोपवेशने पौनःपुन्यं संभाव्यते । न तु दीर्घकालं कार्यगुर्वादिगौरवेण त्रपया वोपविष्टेवेति भावः । तथा सति गर्भपीडासंभवात् । अनिर्विण्णेति । गर्भिण्या निर्वेदे हि गर्भेऽपि निर्वेदस्तत्प्रभावश्च स्यातास्, द्वयोरेकवृत्तिकहृदयत्वात् । अत्रपान्वितेति । त्रपायां ह्याहारविहारादिवैगुण्ये गर्भे दोषः स्यात् । वृद्धस्त्रीद्रव्यसंपन्नेति । स्त्रिया वृद्धत्वविशेषणं प्रसवकालिकसम्यगनुभवार्थम् । अत्र द्रव्यपदं च प्रसवकालोपयोगिवस्तुपरम् । पूर्वपद्येष्वपि—'स्त्रीनपुंसकाख्यानि न धारयेत्, सोमार्कौ सग्रहावस्तं यान्तौ वा न पश्येत्, स्तम्भनं बन्धनानि च वर्जयेत्' इत्येवमादिभिर्वाक्यैर्गर्भे बाह्यव्यापारप्रयुक्तदोषाणां संक्रान्तिः स्फुटमेवाभिहिता । अत एव श्रुतावपि—'या खर्वेण पिबति तस्यै खर्वः' इत्युक्तम् । अस्या अर्थः—ऋतुकाले गर्भकाले वा खर्वेणातिह्रस्वेन पात्रेण या पयः पिबति तस्याः पुत्रोऽपि खर्वो भवतीति । अतो मध्यमेन पात्रेण पिबेदित्यभिप्रायः । एषा च श्रुतिः सिद्धान्तकौमुद्या वैदिकप्रक्रियायां 'षष्ठ्यर्थे चतुर्थीति वाच्यम्' इति वार्त्तिके उदाहृता ।

गर्भलिङ्गानि दृष्ट्वा गर्भं निश्चित्य गर्भे वर्जनीयानि तत एव कालाद् वर्जयेदिति सुश्रुतेऽप्युक्तम् । गर्भलिङ्गानि यथा—

"स्तनयोः कृष्णमुखता रोमराज्युद्गमस्तथा ।
अक्षिपक्ष्माणि चाप्यस्याः संमील्यन्ते विशेषतः ॥
अकामतश्छर्दयति गन्धादुद्विजते शुभात् ।
प्रसेकः सदनं चापि गर्भिण्या लिङ्गमुच्यते ॥

तदा प्रभृति व्यवायं व्यायाममतितर्पणमतिकर्शनं दिवास्वप्नं रात्रिजागरणं शोकं यानारोहणं भयमुत्कटुकासनं चैकान्ततः स्नेहादिक्रियां शोणितमोक्षणं चाकाले वेगविधारणं च न सेवेत" इति ।

तत्र हेतुमाह तत्रैव—

दोषाभिघातैर्गर्भिण्या यो यो भागः प्रपीड्यते ।
स स भागः शिशोस्तस्य गर्भस्थस्य प्रपीड्यते ॥ इति ।

अत्र प्रसेकः अतिस्वेदेन शरीरस्य क्लिन्नता । सदनम् अङ्गानां शैथिल्येन कर्मस्वनुत्साहः । व्यवायं मैथुनम् । अतितर्पणम् अतिभोजनम् । अतिकर्शनम्

अतिलङ्घनम् । उत्कटुकासनम् उत्कटुकम् अतितीक्ष्णम् आसनम्, गर्भायाऽहितमासनं वीरासनपद्मासनादि । स्नेहादिक्रियां स्नेहेन शरीरमर्दनम् । अकाले गर्भप्रसवात्प्राक्काले । वेगविधारणं मूत्रपुरीषादीनाम् । तेन हि वायोः प्रातिलोम्येन गर्भपीडा स्यादिति भावः ।

मातापित्रोस्तत्पित्रादीनां च क्रमागतरोगाणां प्रभावोऽपि गर्भे भवतीति लोके दृश्यते, युज्यते, शास्त्रे च दृश्यते । तथा हि चरकसंहितायाम्—

'शुक्रासृगाशयात्मकालद्रव्याणां सम्पत्तौ गर्भः सुखं संजायते विपरीते तु विपरीतमित्युक्तप्रायम् ।'' [ शारीरस्थाने २।६ ]

तत्र शुक्रासृगाशयानामदुष्टत्वं संपत् । आत्मनः शुक्रशोणितयोगाधिष्ठातुः शुभजीवकर्मयुक्तत्वं संपत् । कालस्य त्वनतितीक्ष्णत्वादिकं संपत् । गर्भिण्या हितैरन्नैरुपचार इत्येवमादिभिर्गर्भः सुखं संजायते । शुक्रादीनां रोगादिदुष्टत्वे तु गर्भेऽपि त एव रोगाः संभवन्ति । दर्शितं चैतच्चक्रदत्तीये—

"मनुष्यबीजं हि प्रत्यङ्गबीजभागसमुदायात्मकं स्वसदृशप्रत्यङ्गसमुदायरूपपुरुषजनकम् । तेन पिता यदि कुष्ठ्यपि भवति, बीजं न दुष्टं भवति कुष्ठाधारत्वगादिजनकम्; तदा निष्कुष्ठान्येव त्वगादीनि जायन्ते । यदा त्वतिवृद्धकुष्ठतया पित्रोर्बीजमपि कुष्ठजनकदोषदुष्टं भवति तदा कुष्ठदुष्टैव त्वग् जायते । यदुक्तम्—

दम्पत्योः कुष्ठबाहुल्याद् दुष्टशोणितशुक्रयोः ।
यदपत्यं तयोर्जातं ज्ञेयं तदपि कुष्ठितम् ।।'' इति ।

चरके च वन्ध्यानपुंसकादीन्यपत्यानि मातापितृशुक्रशोणितदोषप्रभवाण्युक्तानि । यथा—

"यदा ह्यस्याः शोणिते गर्भाशयबीजभागः प्रदोषमापद्यते तदा वन्ध्यां जनयति । यदा पुनरस्याः शोणिते गर्भाशयबीजभागावयवः प्रदोषमापद्यते तदा पूतिप्रजां जनयति । यदा त्वस्याः शोणिते गर्भाशयबीजभागावयवः स्त्रीकराणां च शरीरबीजभागानामेकदेशः प्रदोषमापद्यते तदा स्त्र्याकृतिभूयिष्ठामस्त्रियं वार्त्तां नाम जनयति तां स्त्रीव्यापदमाचक्षते ।

एवमेव पुरुषस्य यदा बीजे बीजभागः प्रदोषमापद्यते तदा वन्ध्यं जनयति । यदा पुनरस्य बीजे बीजभागावयवः प्रदोषमापद्यते तदा पूतिप्रजं जनयति । यदा त्वस्य बीजे बीजभागावयवः पुरुषकराणां च शरीरबीजभागानामेकदेशः प्रदोषमापद्यते तदा पुरुषाकृतिभूयिष्ठमपुरुषं तृणपुत्रिकं नाम जनयति तां पुरुषव्यापदमाचक्षते ।

एतेन सात्म्यजानां रसजानां सत्त्वजानां चावयवानां विकृतिर्व्याख्याता''
इति। [ शारीरस्थाने ४।३१–३३ ]

एतेन रजसि स्त्रिया आकाराः शुक्रे पुरुषाकाराश्च सन्तीति प्रतीयते। स्त्रिया मूषारूपत्वं च मनुष्यसामान्याकारमादायैवेति न पूर्वोक्तविरोधः। कुष्ठरोगवदपस्मारादीनामपि वंशानुगतत्वं द्रष्टव्यम्।

पूर्वजन्मन्यभ्यस्ता गुणा दोषा वोत्तरजन्मन्यप्यनुवर्तन्त इत्यपि श्लोकद्वयेन दर्शितं सुश्रुते—

भाविताः पूर्वदेहेषु सततं शास्त्रबुद्धयः।
भवन्ति सत्त्वभूयिष्ठाः पूर्वजातिस्मरा नरा॥
कर्मणा चोदितो येन तदाप्नोति पुनर्भवे।
अभ्यस्ताः पूर्वदेहे ये तानेव भजते गुणान्॥ इति।
[ शारीरस्थाने २।५७–५८ ]

अत्र गुणपदं दोषाणामप्युपलक्षकम्। तेषामुत्तरजन्मानुवृत्तौ पूर्वजन्माभ्यासरूपहेतोस्तुल्यत्वात्। गर्भस्य वातादिप्रकृतिकत्वकारणमपि तत्रैवोक्तम्—

शुक्रशोणितसंयोगे यो भवेद् दोष उत्कटः।
प्रकृतिर्जायते तेन तस्या मे लक्षणं शृणु॥ इति।
[ शारीरस्थाने ४।६३ ]

शुक्रशोणितसंयोगे उत्कटैर्वातपित्तकफैर्दहनपवनतोयैः सत्त्वरजस्तमोभिर्वा गर्भस्य तास्ताः प्रकृतयो भवन्तीति च तद्व्याख्यातारः।

एवं प्रागुक्तदिशा शुक्रस्य बीजस्थानीयत्वे स्त्रियाश्च क्षेत्रत्वे व्यवस्थिते यथा सस्यसंपत्त्यर्थं बीजसंस्कारः क्षेत्रसंस्कारश्चापेक्ष्यते तथा शुक्रशोणितदोषापनोदार्थं स्त्रिया गर्भस्य च संस्कारो गर्भाधानादिरपेक्ष्यते। तदाह मनुः—

वैदिकैः कर्मभिः पुण्यैर्निषेकादिर्द्विजन्मनाम्।
कार्यः शरीरसंस्कारः पावनः प्रेत्य चेह च॥
गार्भैर्होमैर्जातकर्मचौलमौञ्जीनिबन्धनैः।
बैजिकं गार्भिकं चैनो द्विजानामपमृज्यते॥ इति।
[ मनुस्मृतौ २।२६–२७ ]

"संस्कारार्थं शरीरस्य यथाकालं यथाक्रमम्।" इति।

"वैवाहिको विधिः स्त्रीणां संस्कारो वैदिकः स्मृतः।" इति च।

[ मनुस्मृतौ २।६६–६७ ]

अत्र मनुवाक्ये बैजिकं शुक्रभवं गार्भिकं रजसि भवं चैनोऽदृष्टदोष-पाप्मशब्दाभिलप्यम्। अत्र गर्भप्रदेन रजो गृह्यते, गृह्णाति शुक्रमिति व्युत्पत्त्या। संप्रसारणं गुणो हकारस्य भकारश्च पृषोदरादित्वात्। अस्यां व्युत्पत्तौ प्रमाणं तु कश्यपसंहितायामसमानगोत्रीये शारीराध्याये—

प्राणस्तु बीजधातुं हि विभजत्यस्थिसंख्यया।
प्रविष्टमात्रं बीजं हि रक्तेन परिवेष्ट्यते॥ इति।

कौटिल्योऽपि राजकुमाराणां गर्भाधानादिसंस्कारान् समादृत। तदभावे हि तेषां राज्यपरिपालनयोग्यतैव न स्याद् राज्यभ्रंशश्च स्यादित्याह। तथा हि—

"जीवन्मरणमेतदिति कौटिल्यः। काष्ठमिव हि घुणजग्धं राजकुलमविनीतपुत्रमभियुक्तमात्रं भज्येत। तस्मादृतुमत्यां महिष्यामृत्विजश्चरुमैन्द्राबार्हस्पत्यं निर्वपेयुः। आपन्नसत्त्वायां कौमारभृत्यो गर्भभर्मणि प्रजनने च वियतेत। प्रजातायाः पुत्रसंस्कारं पुरोहितः कुर्यात्। समर्थं तद्विदो विनयेयुः" इति।

तदित्थं गर्भस्य शुक्रशोणितोभयप्रभवत्वेऽपि तत्र शुक्रस्यैव प्राधान्यम्, तत्रैव जीवस्य पूर्वं स्थितेः, गर्भे यद्यत्सारं दृढं च तदुपादानत्वाच्च, बीजत्वेन शास्त्रेषु वर्णितत्वाच्च। पितुर्बीजप्रदत्वेन बीजवापत्वेन च, मातुस्तु मूषात्वेन क्षेत्रत्वेन दधिधानीत्वेन च शास्त्रेषूपन्यासात्, अंकुराकारस्य क्षित्यादिसहकृताद् बीजादुद्गम इव मनुष्यादिविग्रहस्य शोणितसहकृतात् शुक्रादुद्गमः। अत एव स्त्रिया मूषात्वमप्युपपद्यते, शुक्रगततत्तदाकारव्यञ्जकत्वात् अतः शुक्रशोणितयोर्दोषासंसर्गाय गुणसम्पत्तये च सदाचारपातिव्रत्याभ्याम् अक्षेत्रियदोषवत्कुलसम्बन्धेन पुंसवनादिसंस्कारेण हितौषधाहारसेवया ऋतुकालिकशास्त्रविहितचर्यया यथाकालसंप्रयोगेण च वैशिष्ट्यं संपादनीयम्। एवं गर्भधारणे गर्भजन्मानन्तरमपि यथाशास्त्रमौषधयोगाः संस्काराश्चापेक्षिताः।

आयुर्वेदधर्मशास्त्रार्थशास्त्राणां त्रयाणां परस्परविरोधिधर्मार्थकामरूपपुमर्थसाधकानामपि सत्त्वरजस्तमसामिव दशानलतैलानामिव च परस्परापेक्षयेव प्रतिनियतस्वार्थसाधकत्वात्। यौनसम्बन्धा अपि शास्त्रानतिलङ्घिन एव

संपाद्याः, न तु यदृच्छया। शुक्रशोणितसंकरे हि दुश्चिकित्सो दोष आपतेत्
तादृशापत्यसन्तानस्य निरुरुत्सितस्याप्यशक्यनिरोधत्वात्।

अत्र चैते श्लोका भवन्ति—

अर्थशास्त्रस्य संमत्या सर्वशास्त्राविरोधतः।
संस्कारतस्तु सत्कार्यो गर्भो नैवात्र संशयः॥ १॥
ऋषिभिः परिगीतानां संस्काराणां फलं प्रति।
संदेहविषयत्वेऽपि विधेया एव ते मताः॥ २॥
वैफल्ये विधिवैयर्थ्यमनिष्टं न च संभवि।
अविधौ फलसत्त्वे च दुर्वारानर्थसम्भवः॥ ३॥
तस्मात् परम्पराप्राप्ताः सदाचारसमाश्रयाः।
संस्कारा हितमिच्छद्भिर्न हातव्या मनीषिभिः॥ ४॥
आयुर्वेदविधानं तु प्रत्यक्षफलमिष्यते।
अतस्तदादृता चर्याऽविचिकित्सा विधौ मता॥ ५॥

❀ इति शम् ❀



( २२ )

# भारतीयवेषविमर्शः

ध्येयः सदा सवितृमण्डलमध्यवर्ती
नारायणः सरसिजासनसन्निविष्टः।
केयूरवान् कटककुण्डलवान् किरीटी
हारी हिरण्मयवपुर्धृतशङ्खचक्रः॥

सशङ्खचक्रं सकिरीटकुण्डलं सपीतवस्त्रं सरसीरुहेक्षणम्।
सहारवक्षःस्थलकौस्तुभश्रियं नमामि विष्णुं शिरसा चतुर्भुजम्॥

अथातो वेषविमर्शः। यतो वेष एवानाख्यातमपि देशं शीलं कर्म जीविकां वित्तं वर्णमाश्रमं पुंस्त्वं स्त्रीत्वं वाऽऽख्याति। किं बहुना, वेषेणैव पशवोऽपि विश्वसन्त्युद्विजन्ते च। वेष एव हि स्त्रियाः पुरुषस्य वा संवननं भवति। स्त्रीपुरुषयोः परस्परानुरागजननाय वेष आवश्यकः; यथाह गोणिकापुत्रो वात्सायनप्रणीते कामसूत्रे पञ्चमेऽधिकरणे प्रथमाध्याये स्त्री-पुरुषशीलावस्थापनप्रकरणे—

"यं कञ्चिदुज्ज्वलं पुरुषं दृष्ट्वा स्त्री कामयते, तथा पुरुषोऽपि योषितम्, अपेक्षया तु न प्रवर्तेते इति गोणिकापुत्रः"॥ ८॥ व्याख्या—स्वकीयं परकीयं वा पुरुषम् उज्ज्वलं वर्णवेषाभ्यां कामयते संजातरागा भवति, पुरुषोऽपि योषितमुज्ज्वलां दृष्ट्वा कामयते, अपेक्षया तु कस्यचित् कार्यस्य न प्रवर्त्तेते द्वावपि न संप्रयुज्येते। तदुभयोरत्युज्ज्वलकामित्वञ्च कार्यापेक्षत्वञ्च शीलम्। 'गोणिकापुत्र'ग्रहणं प्रावीण्यख्यापनार्थम्। तथा च मनुः—

"तस्यां हि रोचमानायां सर्वं तद्रोचते कुलम्।
तस्यां त्वरोचमानायां तत्कुलं न प्ररोहति॥" इति।

"न जीर्णमलवद्वासा भवेच्च विभवे सति।" इति चान्यत्र। तत्र वेषो नेपथ्यं भूमिका—इत्येकार्थकाः। वेशोऽपि तत्रैव। यतो वेशे साधुः, वेशमर्हति इति वा वेश्या भवति। वेशो वेश्यागृहमप्युच्यते। तत्र वेषो वेश्यानटचराणां वृत्तिसाधनम्, अन्येषां तु प्रसाधनम्। अत एव 'कर्मवेषाद्यत्' (५।१।१००) इति पाणिनिसूत्रस्य 'वेषेण संपादी वेष्यो नटः' इत्युदा-

हरणम् । "अवाप्य शैलूष इवैष भूमिकाम्" ( शिशु० १।६९ ), "स वर्णिलिङ्गी विदितः समाययौ" इति च भारविः ।

तत्र वेषो यद्यपि प्रसाधनम्, तथापि शरीरसंरक्षणार्थत्वमपि तस्य सुस्थितमेव । तथा च चरकसंहितायां सूत्रस्थाने पञ्चमाध्याये ७१ तः आरभ्य १०३ यावत् श्लोकाः—

"आपोथिताग्रं द्वौ कालौ कषायकटुतिक्तकम् ।
भक्षयेद् दन्तपवनं दन्तमांसान्यबाधयन् ॥
निहन्ति गन्धं वैरस्यं जिह्वादन्तास्यजं मलम् ।
निष्कृष्य रुचिमाधत्ते सद्यो दन्तविशोधनम् ॥
करञ्जकरवीरार्कमालतीककुभासनाः ।
शस्यन्ते दन्तपवने ये चाप्येवंविधा द्रुमाः ॥
सुवर्णरूप्यताम्राणि त्रपुरीतिमयानि च ।
जिह्वानिर्लेखनानि स्युरतीक्ष्णान्यनृजूनि च ॥
जिह्वामूलगतं यच्च मलमुच्छ्वासरोधि च ।
दौर्गन्ध्यं भजते तेन तस्माज्जिह्वां विनिर्लिखेत् ॥
धार्याण्यास्येन वैशद्यरुचिसौगन्ध्यमिच्छता ।
जातीकटुकपूगानां लवङ्गस्य फलानि च ॥
कक्कोलस्य फलं पत्रं ताम्बूलस्य शुभं तथा ।
तथा कर्पूरनिर्यासः सूक्ष्मैलायाः फलानि च ॥
हन्वोर्बलं स्वरबलं वदनोपचयः परः ।
स्यात्परं च रसज्ञानमन्ने च रुचिरुत्तमा ॥
न चास्य कण्ठशोषः स्यान्नौष्ठयोः स्फुटनाद्भयम् ।
न च दन्ताः क्षयं यान्ति दृढमूला भवन्ति च ॥
न शूल्यन्ते न चाम्लेन हृष्यन्ते भक्षयन्ति च ।
परानपि खरान् भक्ष्यान् तैलगण्डूषधारणात् ॥
नित्यं स्नेहार्द्रशिरसः शिरःशूलं न जायते ।
न खालित्यं न पालित्यं न केशाः प्रपतन्ति च ॥
बलं शिरःकपालानां विशेषेणाभिवर्धते ।
दृढमूलाश्च दीर्घाश्च कृष्णाः केशा भवन्ति च ॥
इन्द्रियाणि प्रसीदन्ति सुत्वग् भवन्ति चाननम् ।
निद्रालाभः सुखं च स्यान्मूर्ध्नि तैलनिषेवणात् ॥

न कर्णरोगा वातोत्था न मन्याहनुसंग्रहः ।
नोच्चैःश्रुतिर्न बाधिर्यं स्यान्नित्यं कर्णतर्पणात् ॥
स्नेहाभ्यङ्गाद्यथा कुम्भश्चर्मस्नेहविमर्दनात् ।
भवत्युपाङ्गोदक्षश्च दृढः क्लेशसहो यथा ॥
तथा शरीरमभ्यङ्गाद् दृढं सुत्वक् च जायते ।
प्रशान्तमारुताबाधं क्लेशव्यायामसंसहम् ॥
स्पर्शनेऽभ्यधिको वायुः स्पर्शनं च त्वगाश्रितम् ।
त्वच्यश्च परमोऽभ्यङ्गः तस्मात्तं शीलयेन्नरः ॥
न चाभिघाताभिहतं गात्रमभ्यङ्गसेविनः ।
विकारं भजतेऽत्यर्थं बलकर्मणि वा क्वचित् ॥
सुस्पर्शोपचिताङ्गश्च बलवान् प्रियदर्शनः ।
भवत्यभ्यङ्गनित्यत्वान्नरोऽल्पजर एव च ॥
खरत्वं स्तब्धता रौक्ष्यं श्रमः सुप्तिश्च पादयोः ।
सद्य एवोपशाम्यन्ति पादाभ्यङ्गनिषेवणात् ॥
जायते सौकुमार्यञ्च बलं स्थैर्यञ्च पादयोः ।
दृष्टिः प्रसादं लभते मारुतश्चोपशाम्यति ॥
न च स्याद् गृध्रसीवातः पादयोः स्फुटनं न च ।
न शिरास्नायुसङ्कोचः पादाभ्यङ्गेन पादयोः ॥
दौर्गन्ध्यं गौरवं तन्द्रां कण्डूं मलमरोचकम् ।
स्वेदबीभत्सतां हन्ति शरीरपरिमार्जनम् ॥
पवित्रं वृष्यमायुष्यं श्रमस्वेदमलापहम् ।
शरीरबलसन्धानं स्नानमोजस्करं परम् ॥
काम्यं यशस्यमायुष्यमलक्ष्मीघ्नं प्रहर्षणम् ।
श्रीमत्पारिषदं शस्तं निर्मलाम्बरधारणम् ॥
वृष्यं सौगन्ध्यमायुष्यं काम्यं पुष्टिबलप्रदम् ।
सौमनस्यमलक्ष्मीघ्नं गन्धमाल्यनिषेवणम् ॥
धन्यं मङ्गल्यमायुष्यं श्रीमद् व्यसनसूदनम् ।
हर्षणं काम्यमोजस्यं रत्नाभरणधारणम् ॥
मेध्यं पवित्रमायुष्यमलक्ष्मीकलिनाशनम् ।
पादयोर्मलमार्गाणां शौचाधानमभीक्ष्णशः ॥
पौष्टिकं वृष्यमायुष्यं शुचिरूपविराजनम् ।
केशश्मश्रुनखादीनां कल्पनं सम्प्रसाधनम् ॥

चक्षुष्यं स्पर्शनहितं पादयोर्व्यसनापहम् ।
बल्यं पराक्रमसुखं वृष्यं पादत्रधारणम् ॥
ईतेः प्रशमनं बल्यं गुप्त्यावरणशङ्करम् ।
धर्मानिलरजोऽम्बुघ्नं छत्रधारणमुच्यते ॥
स्खलतः संप्रतिष्ठानं शत्रूणाञ्च निषूदनम् ।
अवष्टम्भनमायुष्यं भयघ्नं दण्डधारणम् ॥
नगरी नगरस्येव रथस्येव रथी यथा ।
स्वशरीरस्य मेधावी कृत्येष्ववहितो भवेत् ॥ इति ॥

अत एव शरीरक्षामपेक्ष्यैव तत्तद्देशेषु तेते वेषाः सन्ति शीतवातातपसहाः । वस्त्रं हि शरीरस्याच्छादनेन रक्षार्थं पत्रमिव तरूणाम् । तदभावे हि समूला अपि ते शुष्यन्ति । अत एव देशानुकूल एव वेषो ग्राह्यः, न तु अन्यदेशीयोऽनुकार्यः शरीरहितमिच्छता । तथा च लोके आभाणकः—'यथा देशस्तथा वेषः' इति । न हि हैमवतानां मारवाणाञ्चैको वेषो हितकृत् । न चान्यदीयवेषानुकारेण लोके पूजा भवति; पूजाया अवेषहेतुकत्वात् । तदुक्तम्—'गुणाः पूजास्थाने गुणिषु न च लिङ्गं न च वयः' इति । तत्र लिङ्गं वेष एव । अत एव च सर्वेऽपि देशभेदेन वेषभेदास्तत्तद्देशीयानां श्लाघ्या एव । तत्र नैकतमस्योपहासः साधुः; किन्तु मध्यस्थत्वमेव वरम् । तदुक्तम्—

क्रमेलकं निन्दति कोमलेच्छुः क्रमेलकः कण्टकलम्पटस्तम् ।
प्रीतौ तयोरिष्टभुजोः समायां मध्यस्थता नैकतरोपहासः ॥ इति ।

तत्र वेषो नाम कृत्रिम आकारः । तस्य कृत्रिमत्वञ्च नानाक्रियानिर्वर्तितत्वात् । तथा हि—वस्त्रभूषाकेशविन्यासाञ्जनाभ्यञ्जनादिक्रियाभिर्वेषो निर्वर्त्यते । तत्र नारीणां वेषाभिनिवेशवत्त्वान्नारीवेष एव प्रथमं निरूप्यते । तत्रापि संयुक्ता-प्रोषितभर्तृका-विधवाभेदेन संक्षेपतस्तस्य त्रैविध्येऽपि प्रथमं संयुक्तावेष एव प्रदर्श्यते, भर्तुः प्रवासे मण्डनादिनिषेधात् ।

तत्रार्धचन्द्ररूपं शिरसि धार्यं सौवर्णभूषणम् ।
"ये बध्वश्चन्द्रं वहतुं यक्ष्मा यन्ति जनादनु ।
पुनस्तान् यज्ञिया देवा नयन्तु यत आगताः ॥"
( ऋक्सं० म० १०, अ० ७, सू० ८५।३१ । )

मन्त्रभाष्यम्—"बध्वश्चन्द्रं हिरण्यरूपं वहतुं ये यक्ष्मा व्याधयः अनुयन्ति प्राप्नुवन्ति जनाद् अस्मद्विरोधिनः सकाशाद्, यद्वा—जनाद्यमाख्यात् तान्

पुनर्नयन्तु प्रापयन्तु यज्ञिया देवा यज्ञार्हा देवा इन्द्रादयः। यत आगता यस्मात्ते यक्ष्मा आगतास्तत्र तान्नयन्तु।"

"चित्तिरा उपबर्हणं चक्षुरा अभ्यञ्जनम्।
द्यौर्भूमिः कोश आसीद यदयात्सूर्या पतिम्॥"
(ऋक्सं० म० १०,अ०७, सू०८५, मं०७)

भाष्यम्—"चित्तिः देवता उपबर्हणम् आ आसीत्, चक्षुः अभ्यञ्जनम् आः आसीत्। तथाहि वृत्रस्य कनीनिका परापतत् त्रिककुन्नाम पर्वते, तेन त्रैककुदेनाञ्जनसजातीयेन चक्षुषी आञ्जते। तच्चक्षुरेवाञ्जनमासीदिति। द्यौश्च भूमिश्च कोश आसीत् कोशस्थानीये अभूताम्। यद् यदा सूर्या स्वकीय-नवभर्तारं सोममयाद् अगच्छद् तदैवमुपकरणान्यासन्। अनेन चक्षुषोरञ्जनं स्त्रीणामावश्यकं प्रतीयते।

अधरञ्चोत्तरीयञ्च वासोयुगं तासां गोभिलगृह्यसूत्रे द्वितीयप्रपाठकस्य प्रथमकण्डिकायां विवाहप्रकरणे—

"अहतेन वसनेन पतिः परिदध्यात् या अकृन्तन्नित्येतया ऋचा॥" १७

भाष्यम्—"अहतेन अधौतेनाक्षुण्णेन वसनेन वाससा पतिः कन्यां दत्तां सतीं परिदध्यात् परिधापयेत् 'या अकृन्तन्' इत्येतया ऋचा। मन्त्रस्तु—'ॐ या अकृन्तन्नवयन् या अतन्वत याश्चदेव्यो अन्तानभितोऽततन्थ। तास्त्वा देव्यो जरसा संव्ययन्त्वायुष्मतीदं परिधत्स्व वासः॥'—(मन्त्र-ब्राह्मणम् १।१।५।) अस्य व्याख्या—'या देव्यो द्युतिमत्यः स्त्रियः इदं वस्त्रम् अकृन्तन् कर्त्तितवत्यः सूत्राणि निर्मितवत्यः, या अवयन् ऊतवत्यः, या च अतन्वत विस्तारितवत्यः याश्च अन्तान् एतत्पटसक्तान् अभित उभयपार्श्व-योरततन्थ तेनुर्ग्रथितवत्यः ता देव्यो दानादिगुणयुक्ता हे कन्ये त्वा त्वाम् जरसा जरान्तं यावत् संव्ययन्तु परिधापयन्तु। हे आयुष्मति इदं वासः परिधत्स्व परिधानं कुरुस्व।"

"परिधत्त धत्तवाससेति च प्रावृतां यज्ञोपवीतिनीम् अभ्युदानयञ्जपेत् सोमोऽददद् गन्धर्वाय" इति। (१८ सू०) गोभिलगृह्यसूत्रे तत्रैव।

भाष्यम्—"परिधत्तेत्यनेन मन्त्रेण प्रावृतां कृतोत्तरीयाम्, कथं प्रावृताम्, यज्ञोपवीतिनीम्, उपवीतवदित्यर्थः। कुतः? स्त्रीणामुपवीतस्याभावात्। अभ्युदानयन् गृहादग्नेरभिमुखीमानयन् जपेत् 'सोमोऽददत्' इत्येतन्मन्त्रम्। मन्त्रस्तु—'परिधत्त धत्त वाससैनां शतायुषीं कृणुत दीर्घमायुः। शतं च जीव शरदः सुवर्चा वसूनि चार्ये बिभृजासि जीवन्॥' (मन्त्रब्राह्मणम्

१।१।६ )। व्याख्या—हे परिधापयित्र्यः यूयम् एनां कन्यां परिधत्त परिधापयत, तथा वाससा एनां धत्त धारयत् वस्त्रावृतां कुरुत, शतायुषीं चिरकालजीविनीं कृणुत दीर्घमायुः। हे आर्ये त्वं सुवर्चाः तेजस्विनी सती जीवन् जीवन्ती वसूनि धनानि बिभृजासि संभजस्व।" पूर्वसूत्रोक्ताहतवासोलक्षणन्तु—

ईषद्धौतं नवं श्वेतं सदशं यन्न धारितम्।
अहतं तद्विजानीयाद् दैवे पित्र्ये च कर्मणि॥

( वृद्धहारितस्मृतिः ९।१४६ )

अत्र वासःपरिधापनाद्याह रघुनन्दनः। एतदधरीयवस्त्रपरिधापने उत्तरत्र प्रावृतामित्यनेनोत्तरीयलाभात्। स्त्रीपरिधाने तु शुक्लमित्यविवक्षितम्।

"धारयेदथ रक्तानि नारी चेत्पतिसंयुता।
विधवा च न रक्तानि कुमारी शुक्लवाससी॥"

इति मत्स्यपुराणात्। 'शुक्लवाससी' इत्यनेन कुमार्या अपि अधरीयोत्तरीये गम्येते। परिधानप्रकारमाहतुः शङ्खलिखितौ—"न नाभिं दर्शयेत्कुलवधूरागुल्फाभ्यां वासः परिदध्यात्, न स्तनौ विवृतौ कुर्यात्।" इति।
वासोविन्यासविशेषस्तु तत्तद्देशाचारादवगन्तव्यः। तत्र दिङ्मात्रं यथा काव्यमीमांसायां कविरहस्यनाम्नि प्रकरणे तृतीयाध्याये—

"आर्द्रार्द्रचन्दनकुचार्पितसूत्रहारः सीमन्तचुम्बिसिचयः स्फूटबाहुमूलः।
दूर्वाप्रकाण्डरुचिरास्वगुरूपभोगाद् गौडाङ्गनासु चिरमेष चकास्तु वेषः॥
ताडङ्कवल्गनतरङ्गितगण्डलेखमानाभिलम्बिदरदोलिततारहारम्।
आश्रोणिगुल्फपरिमण्डलितोत्तरीयं वेषं नमस्यत महोदयसुन्दरीणाम्॥
आमूलतो वलितकुन्तलचारुचूडश्चूर्णालकप्रचयलाञ्छितभालभागः।
कक्षानिवेशनिबिडीकृतनीविरेष वेषश्चिरं जयति केरलकामिनीनाम्॥"

किञ्च मार्कण्डेयपुराणे देवीमाहात्म्ये मध्यमचरित्रे द्वितीयाध्याये स्त्रीणामलङ्काराः—

क्षीरोदश्चामलं हारमजरे च तथाम्बरे।
चूडामणिं तथा दिव्यं कुण्डले कटकानि च॥
अर्धचन्द्रं तथा शुभ्रं केयूरान् सर्वबाहुषु।
नूपुरौ विमलौ तद्वद् ग्रैवेयकमनुत्तमम्॥

अङ्गुलीयकरत्नानि समस्तास्वङ्गुलीषु च।
अस्त्राण्यनेकरूपाणि तथाऽभेद्यञ्च दंशनम् ॥
अम्लानपङ्कजां मालां शिरस्युरसि चापराम्।
अददज्जलधिस्तस्यै पङ्कजं चातिशोभनम् ॥
शेषश्च सर्वनागेशो महामणिविभूषितम्।
नागहारं ददौ तस्यै धत्ते यः पृथिवीमिमाम् ॥" इति ॥

स्त्रीणामलङ्कारविषये पाणिनिसूत्रमपि—"कर्णललाटात्कनलङ्कारे" (४।३।६५) कर्णिका, कर्णालङ्कारः ललाटिका, ललाटे चन्दनेन कृतं तिलकम्। ललाटिकाचन्दनधूसरालिका' इति कुमारसम्भवे। "कुलकुक्षि-ग्रीवाभ्यः श्वास्यलङ्कारेषु (४।२।९६) ग्रैवेयको हारः।

"अन्तरं बहिर्योगोपसंव्यानयोः" (१।१।३६)—अन्तरा अन्तरे वा शाटकाः बाह्याः परिधानीया वेत्यर्थः। अस्मात्पाणिनिसूत्रादनेकशाटीपरिधानं गम्यते।

महाभारते सभापर्वणि द्रौपदीचीरहरणावसरे—

"साऽऽकृष्यमाणा नमिताङ्गयष्टिः शनैरुवाचाथ रजस्वलास्मि।
एकञ्च वासो मम मन्दबुद्धे नेतुं सभां नार्हसि मामनार्य ॥३७१॥
ततो जवेनाभिससार रोषाद् दुःशासनस्तामभिगर्जमानः।
दीर्घेषु नीलेष्वथ चोर्मिमत्सु जग्राह केशेषु नरेन्द्रपत्नीम्" ॥३६९॥

एतद्वाक्यादार्यस्त्रीणां दीर्घकेशवत्त्वं वेष आसीत्, न तु केशकर्तनेन ह्रस्वाः केशा इति प्रतीयते।

नील्या रक्ता शाटी तु स्त्रिया न धार्या, ऋते पतिसमागमकालात्। तथा चाङ्गिरःस्मृतिः—

"अत ऊर्ध्वं प्रवक्ष्यामि नीलीशौचस्य वै विधिम्।
स्त्रीणां क्रीडार्थसम्भोगे शयनीये न दुष्यति ॥१२॥
स्नानं दानं जपो होमः स्वध्यायः पितृतर्पणम्।
स्पृष्ट्वा तस्य महापापं नीलीवस्त्रस्य धारणम् ॥१४॥
नीलीरक्तं यदा वस्त्रमज्ञानेन तु धारयेत्।
अहोरात्रोषितो भूत्वा पञ्चगव्येन शुध्यति" ॥१५॥

लज्जानिवारणाय कुलस्त्रीभिराप्रपदीनः पटः परिधेयः, न तु अर्धोरुकम्। अधरोरुकमपि शाट्यन्तःपरिधीयमानं स्त्रीवेषः। तदुक्तं दशदाडिमादि-वाक्ये व्याकरणमहाभाष्ये—"अधरोरुकमेतत्कुमार्याः" इति। तथा च

पाणिनीयं सूत्रम्—"आप्रपदं प्राप्नोति" (५।२।८) पादस्याग्रं प्रपदं तदभि व्याप्नोति आप्रपदीनः पटः।

वासःपरिधानप्रकारमाहतुः शङ्खलिखितौ—"न नाभिं दर्शयेत्कुलवधूरागुल्फाभ्यां वासः परिदध्यात्, न स्तनौ विवृतौ कुर्यात्।" इति।

वधूदुकूलदशा हंसादिचित्रिता आसन्निति कुमारसम्भवपद्यदर्शनेनानुमीयते। तथाहि—

त्वमेव तावत्प्रविचारय स्थिरं कदाचिदेते यदि योगमर्हतः।
वधूदुकूलं कलहंसलक्षणं गजाजिनं शोणितबिन्दुवर्षि च॥

(कुमा० सं०)

वात्स्यायनप्रणीते कामसूत्रे चतुर्थाधिकरणे प्रथमाध्याये एकचारिणीवृत्तप्रकरणे—नानाविधाः संयुक्तावेषाः। स्वेददन्तपङ्कदुर्गन्धांश्च बुध्येतेति विरागप्रकरणम्" ॥२३॥ व्याख्या—स्वेदादीन् बुध्येत्, अपनयनार्थम्। दन्तपङ्कः, दन्तमलः। विरागकारणम्, वैराग्यजनकं भवेद् भर्त्तुः॥ २३॥ "बहुभूषणं विविधकुसुमानुलेपनं विविधाङ्गरागसमुज्ज्वलं वास इत्याभिगमिको वेषः"॥ २४॥ व्याख्या—नानावर्णं कालवशाद्यद् यद् विराजते वर्णतस्तत्तदुपादेयमिति आभिगमिको गमनप्रयोजकः, तदा हि बहुभूषणादिभिः कालौपयिकेन च रक्तवाससा प्रसाधिता मनोहरेति। यथा वसन्ते पीतवासःपरिधानम्॥ "प्रतनुश्लक्ष्णाल्पदुकूलता परिमितमाभरणं सुगन्धिता नात्युल्वणमालेपनं तथा शुक्लान्यन्यानि प्रयोज्यानीति वैहारिको वेषः"। ॥२५॥ व्याख्या—प्रतनुश्लक्ष्णमल्पं सूक्ष्मं यत्संयन्तुं शक्यं वस्त्रं परिमितं कर्णयोर्ग्रीवायाञ्च नात्युल्वणं वर्णविन्यासाभ्याञ्चेति वैहारिको यात्राक्रीडाविहारप्रयोजकः॥

कामसूत्रे पञ्चमाधिकरणे द्वितीयाध्याये अभियोगप्रकरणे—'तत्र महार्हगन्धमुत्तरीयं कुसुमंचात्मीयं स्यादङ्गुलीयकञ्च तद्धस्तात्ताम्बूलग्रहणं गोष्ठीगमनोद्यतस्य केशहस्तपुष्पयाचनम्" ॥ २१॥ व्याख्या—तत्रेति परिवर्तमाने, महार्हगन्धम् अत्यन्तसुरभि उत्तरीयं कुसुमञ्च आत्मीयं स्यात् स्वीकुर्यादित्यर्थः। अङ्गुलीयकं च महार्हं स्यात्। तद्धस्तात्, नायकहस्तात् यदि तया ताम्बूलं गृहीतम्। गोष्ठीगमनोद्यतस्येति कर्तरि षष्ठी। केशहस्तः, केशकलापः। तत्रत्यपुष्पयाचनं सिद्धिकरमेतदिति ॥ २१॥ स्त्रीणां केशपाशे पुष्पग्रथनमितः प्रतीयते।

कामसूत्रे षष्ठाधिकरणे प्रथमाध्याये गम्योपावर्त्तनप्रकरणे —

"ताम्बूलानि स्रजश्चैव संस्कृतञ्चानुलेपनम् ।
आगतस्य हरेत्प्रीत्या कलागोष्ठीश्च योजयेत् ॥"

व्याख्या—'संस्कृतम्' इति सर्वत्र योज्यम् । कलागोष्ठीश्चेति—'च' शब्दात् काव्यगोष्ठीश्च । इतो वाक्यात् कलातः काव्यस्य भेदः प्रतीयते ।

कामसूत्रे षष्ठाधिकरणे प्रथमाध्याये कान्तानुवृत्तप्रकरणे—"वृथाऽपराधे तद्व्यसने वाऽलङ्कारस्याग्रहणमभोजनञ्च" ॥ १८ ॥ व्याख्या—वृथाऽपराधे, यावदेव जानात्यनपराद्धमिति तावदेव प्रतिविधानार्थं स्वेदाभ्यङ्गोपवासादिभिः शरीरपीडा दर्शयितव्या । तद्व्यसने, नायकस्य पुत्रभ्रात्रादिनाशे व्याधौ वा ज्वरादावुत्पन्नेऽलङ्काराग्रहणमिति मण्डनप्रतिषेधो भोजनाभावश्च ॥ १८ ॥ "नित्यमलङ्कारयोगः, परिमितोऽभ्यवहारः" ॥ २१ ॥ व्याख्या—यत्तु 'नित्यमलङ्कारयोगिनी स्याद्' इत्युक्तं तत्पत्युः परदेशादुपावर्त्तनकाले द्रष्टव्यम् । परिमित इति, बहुभक्षणे प्रायशो वेश्यानां दोषवत्वात् । तत्रापि स्निग्धम्, न रूक्षम्, ज्वरकारित्वाद् रूक्षस्य ॥ २१ ॥

कामसूत्रे षष्ठाधिकरणे पञ्चमाध्याये लाभविशेषप्रकरणे— "सार्वाङ्गिकोऽलङ्कारयोगः गृहस्योदारस्य करणम्, महार्हैर्भाण्डैः परिचारकैश्च गृहपरिच्छदस्योज्ज्वलतेति रूपाजीवानां लाभातिशयः" ॥ २६ ॥ व्याख्या—सार्वाङ्गिक इति, सर्वेष्वङ्गेषु यो भवति । उदारस्येति, संस्थानतः संस्कारतश्चेति । महार्हैरिति, लौहताम्रराजतैः । परिचारकैरिति, यथास्वं कर्मणा परिचरन्ति ये । गृहपरिच्छदस्येति, गृहसंविधानकस्योज्ज्वलतेत्ययं प्रधानार्थः । तद्व्ययसहिष्णोर्धनस्य नायकात् परिग्रहणमिति वर्तते । अयं प्रकृष्टो लाभातिशयो रूपाजीवानामिति, उत्तमानां सत्स्वपि गुणेषु रूपमेवाजीवो यासाम्, रूपस्य प्रधानत्वात् । कलास्तु न सन्ति । तत्र रूपस्य गुणानां पादार्धहान्या मध्यमाधमाः । अत्र यः प्रधानार्थः स गणिकानामस्त्येव ॥२६॥ "नित्यं शुक्लमाच्छादनमपक्षुधमन्नपानं नित्यं सौगन्धिकेन ताम्बूलेन च योगः सहिरण्यभागमलङ्करणमिति कुम्भदासीनां लाभातिशयः" ॥ २७ ॥ व्याख्या—नित्यमिति । आच्छादनं परिधानीयं प्रावरणीयञ्च सदैव शुक्लम्, अकदर्थितत्वात् । क्षुधमपनयति । सौगन्धिकेन, सुगन्धिसमूहेन चतुःसमकादिना ताम्बूलेन च नित्यं योगः । एतत्सर्वं गणिकानां रूपीजीवानाञ्चास्त्येव । विशेषमाह—सहिरण्यभागमिति । सुवर्णलेशेन युक्तमित्यर्थः ॥२७॥

कामसूत्रे सप्तमाधिकरणे प्रथमाध्याये सुभगङ्करणप्रकरणे—"तगर-कुष्ठ-तालीशपत्रकानुलेपनं सुभगङ्करणम्" ॥ ४ ॥ व्याख्या—तगरेति । तगरन्तु कन्दमौत्तरापथिकम्, न नेपालभवम् । कुष्ठं यच्छ्वेतं, तालीशपत्रकं प्रतीतम्, एतैरनुलेपनं शरीरस्य ॥ ४ ॥ "एतैरेव सुपिष्टैर्वर्त्तिमालिप्याक्षतैलेन नरकपाले साधितमञ्जनञ्च" ॥ ५ ॥ व्याख्या—एतैरेवेति । वर्त्तिमालिप्य दुकूलमयीम् । अक्षतैलेन विभीतकतैलेन । साधितमिति, नरकपाले पातित-मित्याम्नायः । कज्ज्लं तेन स्नेहेन योज्यम् । सुभगङ्करणमिति सर्वत्र योजनीयम् । "पुनर्नवा-सहदेवी-सारिवा-कुरण्टकोत्पलपत्रैश्च तैलमभ्यञ्जनम्" ॥६॥ व्याख्या—पुनर्नवेति । पुनर्नवा सहदेवी दण्डकोत्पलकं सारिवेत्युत्पल-सारिवा ग्राह्या, कुरण्टकः प्रतीतः । उत्पलपत्रमिति, यदाभ्यन्तरं न बाह्यम् । शेषाणां मूलम् । सिद्धमिति । तैलविधानेन पक्वम् । एतैरेव कषायं कल्कञ्च कृत्वा । तैलमिति, तिलानाम् । अभ्यञ्जनं सुभगङ्करणम् ॥ ६ ॥ "तदयुक्ता एव स्रजश्च ॥ ७ ॥ व्याख्या—पुनर्नवादिचूर्णयुक्ताः स्रजो धारिताः सुभगङ्करणम् ॥ ७ ॥ "पद्मोत्पलनागकेशराणां शोषितानां चूर्णं मधुघृताभ्यामवलिह्य सुभगो भवति" ॥ ८ ॥ व्याख्या—नाग इति, नागकेसरः । पद्मादीनां केसराण्येकीकृत्य सञ्चूर्ण्य । अवलिह्येति, वमन-विरेचनं कृत्वा । तत्रापि न तदैव सुभगः, मासादूर्ध्वं दृष्टशक्तिः ॥ ८ ॥ "तान्येव तगर-तालीस-तमालपत्रयुक्तान्यनुलिप्य" ॥९॥ व्याख्या—"पद्मादि-केसराणि तगरादियुक्तानि । अनुलिप्येति, अनुलेपनं कृत्वा शरीरस्य सुभगो भवति ॥ ९ ॥ "मयूरस्याक्षि तरक्षोर्वा सुवर्णेनावलिप्य दक्षिणहस्तेन धार-येदिति सुभगङ्करणम्" ॥ १० ॥ व्याख्या—मयूरस्येति, यो न विशीर्णबर्हः । तरक्षोर्वेति, यो हि मत्तः, स हि ग्रीस्मे माद्यति । अक्षीति, दक्षिणं वामञ्च ग्राह्यम्; द्वयोरेव सामर्थ्यमित्याम्नायः । सुवर्णेनावलिप्येति, शुद्धसुवर्णपत्रेण पुष्ययोगेन वेष्टयित्वा ॥

कामसूत्रे प्रथमाधिकरणे चतुर्थाध्याये नागरकवृत्तप्रकरणे—"तत्र रात्रिशेषमनुलेपनं माल्यं सिक्थकरण्डकं सौगन्धिकपुटिका मातुलुङ्गत्वच-स्ताम्बूलानि च स्युः" ॥ ८ ॥ व्याख्या—तत्र, वेदिकायाम् । रात्रिशेषम्, रात्र्युपयुक्तशेषम् । सिक्थकरण्डकम्, सिक्थकसंपुटिका । सौगन्धिकं सुगन्ध-द्रव्यनिर्वृतं स्वेदापनोदार्थं तस्य पुटिका तमालादिपत्रमयी मातुलुङ्गत्वचो मुखवैरस्यापनोदार्थं दुष्टमारुतनिवारणार्थञ्च ॥ ८ ॥

काशीखण्डे चतुर्थाध्याये –

हरिद्रां कुङ्कुमं चैव सिन्दूरं कज्जलं तथा ।
कूर्पासकञ्च ताम्बूलं माङ्गल्याभरणं शुभम् ॥ २४ ॥
केशसंस्कारकबरीकरकर्णादिभूषणम् ।
भर्त्तुरायुष्यमिच्छन्ती दूरयेन्न पतिव्रता ॥ २५ ॥

काव्यमीमांसायां पञ्चमाध्याये—

कृतः कण्ठे निष्को न हि किमुत तन्वी मणिलता,
कृशं लीलापत्रं श्रवसि निहितं कुण्डलमुचि ।
न कौशेयं चित्रं वसनमवदातं तु वसितम्,
समासन्नीभूते निधुवनविलासे वनितया ॥

तत्रैव षष्ठाध्याये—

नित्यं त्वयि प्रचुरचित्रकपत्रभङ्गी-
ताटङ्कताडनविपाण्डुरगण्डलेखाः ।
खिद्यन्तु रत्नरशनारणनाभिराम-
कामार्त्तिनर्त्तितनितम्बतटास्तरुण्यः ॥

तत्रैव दशमाध्याये—

पत्युः शिरश्चन्द्रकलामनेन, स्पृशेति सख्या परिहासपूर्वम् ।
सा रञ्जयित्वा चरणौ कृताशीर्माल्येन तां निर्वचनं जघान ॥

तत्रैव त्रयोदशाध्याये --

ततस्तमःश्यामलपट्टकञ्चुकं विपाटयत्किञ्चिददृश्यतान्तरा ।
निशातरुण्याः स्थितशेषकुङ्कुमस्तनाभिरामं शकलं कलावतः ॥

तत्रैवाग्रे—

शोकाश्रुभिर्वासरखण्डितानां सिक्ताः कपोलेषु विलासिनीनाम् ।
कान्तेषु कालात्ययमाचरत्सु स्वल्पायुषः पत्रलता बभूवुः ॥

पत्रलताश्चन्दनादिकृताः पत्रपुष्पलताद्याकृतयः स्तनकपोलादिषु ।

तत्रैव मुखे तिलकवर्णनम्—

शैलच्छलेन स्वं दीर्घं भुजमुद्यम्य भूवधूः ।
निशासख्याः करोतीव शशाङ्कतिलकं मुखे ॥

तत्रैवाग्रे पञ्चदशाध्याये—

आलिख्य पत्रमसितागुरुणाभिरामं रामामुखे क्षणसभाजितचन्द्रबिम्बे ।
जातः पुनर्विकसनावसरोऽयमस्येत्युक्त्वा सखी कुवलयं श्रवणे चकार ॥

तत्रैव त्रयोदशाध्याये—

हारो वक्षसि दन्तपत्रविशदं कर्णे दलं कौमुदम्,
माला मूर्ध्नि दुकूलिनी तनुलता कर्पूरशुक्लौ स्तनौ।
वक्त्रे चन्दनबिन्दुरिन्दुधवलं बालं मृणालं करे,
वेषः कः सित एष सुन्दरि शरच्चन्द्रात्त्वया शिक्षितः॥
मूर्तिर्नीलदुकूलिनी मृगमदैः प्रत्यङ्गपत्रक्रिया,
बाहू मेचकरत्नकङ्कणभृतौ कण्ठे मसारावली।
व्यालम्बालकवल्लरीकमलिकं कान्ताभिसारोत्सवे,
यत्सत्यं तमसा मृगाक्षि विहितं वेषे तवाचार्यकम्॥

तत्रैव पञ्चदशाध्याये—

गुणानुरागमिश्रेण यशसा तव सर्पता।
दिग्वधूनां मुखे जातमकस्मादर्धकुङ्कुमम्॥

अत्रैवाष्टादशाध्याये—

पुन्नागरोध्रप्रसवावतंसा वामभ्रुवः कञ्चुककुञ्चिताङ्ग्यः।
वक्त्रोल्लसत्कुङ्कुमसिक्थकाङ्काः सुगन्धतैलाः कबरीर्वहन्ति॥

'मधूच्छिष्टं तु सिक्थकम्' इत्यमरः। अत्र सिक्थपदेन सिक्थकाकारा पत्ररचना कुङ्कुमकृता विवक्षिताः। इदं च नारीविशेषणम्। तत्रैव—

पिनद्धमाहारजनांशुकानां सीमन्तसिन्दूरजुषां वसन्ते।
स्मरीकृते प्रेयसि भक्तिभाजां विशेषवेषः स्वदते वधूनाम्॥
कर्पूरचूर्णं सहकारभङ्गस्ताम्बूलमार्द्रक्रमुकोपक्लृप्तम्।
हाराश्च तारास्तनुवस्त्रमेतन्महारहस्यं शिशिरक्रियायाः॥
मुक्तालताश्चन्दनपङ्कदिग्धा मृणालहारानुसृता जलार्द्राः।
स्रजश्च मौलौ स्मितचम्पकानां ग्रीष्मेऽपि सोऽयं शिशिरावतारः॥
कर्णे स्मेरं शिरीषं शिरसि विचकिलस्रग्लताः पाटलिन्यः,
कण्ठे मार्णालहारो वलयितमसिताम्भोजनालं कलाच्योः।
सामोदं चन्दनाम्भः स्तनभुवि नयने म्लानमञ्जिष्ठपृष्ठे,
गात्रं लोलज्जलार्द्रं जयति मृगदृशां ग्रैष्मिको वेष एषः॥

अभिनवकुशसूचिस्पर्द्धि कर्णे शिरीषम्,
मरुवकपरिवारं पाटलादाम कण्ठे।
स तु सरसजलार्द्रोन्मीलितः सुन्दरीणाम्,
दिनपरिणतिजन्मा कोऽपि वेषश्चकास्ति॥

मेघदूते उत्तरमेघे पौष्पी स्त्रीवेषरचना—

हस्ते लीलाकमलमलकं बालकुन्दानुविद्धम्,
नीता लोध्रप्रसवरजसा पाण्डुतामाननश्रीः ।
चूडापाशे नवकुरवकं चारु कर्णे शिरीषम्,
सीमन्ते च त्वदुपगमजं यत्र नीतं वधूनाम् ॥

विराटपर्वणि स्त्रीवेषः—

यस्य ज्याघातकठिनौ बाहू परिघसंनिभौ ।
सशङ्खपरिपूर्णाभ्यां शोचन्नास्ते धनञ्जयः ॥
(१९ अ०, १७)

किरीटं सूर्यसङ्काशं यस्य मूर्धन्यशोभत ।
वेणीविकृतकेशान्तः सोऽयमद्य धनञ्जयः ॥
(१९ अ०, १९)

भूषितं तमलङ्कारैः कुण्डलैः परिहारकैः ।
कम्बुपाणिनमायान्तं दृष्ट्वा सीदति मे मनः ॥

कम्बुपदवाच्यानि शङ्खघटितवलयानीति नीलकण्ठी (१३ अ० विराट-पर्वणि)।

सत्त्वोपपन्नः पुरुषोऽमरोपमः श्यामो युवा वारणयूथपोपमः ।
आमुच्य कम्बूपरिहाटके शुभे विमुच्य वेणीमपि नह्यकुण्डले ॥
(११ अ०, ५)

कुण्डले ताडङ्के कम्बूनां शङ्खानामुपरि हाटके कनकमये वलये च परिमुच्येति नीलकण्ठी ।

मृच्छकटिके प्रथमेऽङ्के स्त्रीवेषः—"रक्तांशुकं पवनलोलदशं वहन्ती" ॥२०॥ "प्रचलितकुण्डलघृष्टगण्डपार्श्वा" ॥२४॥ "किं त्वं करीतटनिवेशित-मुद्वहन्ती ताराविचित्ररुचिरं रशनाकलापम्" ॥२७॥ "त्वां सूचयिष्यति तु माल्यसमुद्भवोऽयं गन्धश्च भीरुमुखराणि च नूपुराणि" ॥३५॥

द्वितीयेऽङ्के—

विचलति नूपुरयुगलं छिद्यन्ते च मेखलामणिखचिताः ।
वलयाश्च सुन्दरतरा रत्नाङ्कुरजालप्रतिबद्धाः ॥ १९ ॥
(प्राकृतच्छाया)

पञ्चमेऽङ्के—

वर्षोदकमुद्गिरता श्रवणान्तविलम्बिना कदम्बेन ।
एकः स्तनोऽभिषिक्तो नृपसुत इव यौवराज्यस्थः ॥ २८ ॥

अभिज्ञानशाकुन्तले प्रथमेऽङ्के—

ईषदीषच्चुम्बितानि भ्रमरैः सुकुमारकेसरशिखानि ।
अवतंसयन्ति दयमानाः प्रमदाः शिरीषकुसुमानि ॥
( प्राकृतच्छाया )

तत्रैव शकुन्तलावाक्यम्—"सखि अनसूये ! अतिपिनद्धेन वल्कलेन प्रियंवदया नियन्त्रितास्मि, शिथिलय तावदेतत् ।"

प्रियंवदावाक्यम्—"अत्र पयोधरविस्तारयितृ आत्मनो यौवनमुपालभस्व ।

दुष्यन्तवाक्यम्—

"इयमधिकमनोज्ञा वल्कलेनापि तन्वी
किमिव हि रुचिराणां मण्डनं नाकृतीनाम्" ॥ २७ ॥

चतुर्थेऽङ्के—

क्षौमं केनचिदिन्दुपाण्डुतरुणा माङ्गल्यमाविष्कृतम्,
निष्ठ्यूतश्चरणोपभोगसुलभो लाक्षारसः केनचित् ।
अन्येभ्यो वनदेवताकरतलैरापर्वभागोत्थितै-
र्दत्तान्याभरणानि तत्किसलयोद्भेदप्रतिद्वन्द्विभिः ॥ २७ ॥

क्षौमम्—क्षुमाऽतसी, तस्यास्त्वचो विकारम्, तं वस्त्रं पुरा महादेवीपरिधेयमभूत्, इदानीन्तनैस्तु पटकर्तृभिर्नाद्य तदवबुद्धम् ।

पञ्चमेऽङ्के—

कास्विदवगुण्ठनवती नारी नातिपरिस्फुटशरीरलावण्या ।
मध्ये तपोधनानां किसलयमिव पाण्डुपत्राणाम् ॥ १३ ॥

अनेनावगुण्ठनं ( पर्दा ) स्त्रीवेषः प्रतीयते । सीमन्तरूपः केशवेषोऽपि, सीमन्तिनीति स्त्रीनाम्नैव प्रसिद्धेः । अयं च पुरुषसाधारणः; यथा नैषधे—"द्विफालबद्धाः चिकुराः शिरःस्थितम् ।" मङ्गलसूत्रं सूक्ष्मकाचमणिसूत्रयुक्तं विवाहावसरे बधूकरे—संस्कारगणपतौ, विधानपारिजाते, लघ्वाश्वलायनस्मृतौ च । नन्दिपुराणे सौभाग्यवतीमुद्दिश्य श्राद्धे इदानीं प्रायेणोपलभ्यमानाः सर्वेऽपि करकर्णवक्षःकट्याद्यलङ्काराः ।

अथ प्रोषितपतिकावेषाः—

"कार्यार्थं प्रोषिते क्वापि सर्वमण्डनवर्जिता।" (काशीखण्डे अ० ४, १०)। तदुक्तं याज्ञवल्क्येन—

क्रीडां शरीरसंस्कारं समाजोत्सवदर्शनम्।
हास्यं परगृहे यानं त्यजेत् प्रोषितभर्तृका॥

कामसूत्रे चतुर्थाधिकरणे प्रथमाध्याये प्रवासचर्याप्रकरणे—"प्रवासे च मङ्गलमात्राभरणा देवतोपवासपरा वार्तायां स्थिता गृहानवेक्षेत।" ॥ ४३ ॥ व्याख्या— मङ्गलमात्रमाभरणं शङ्खवलयादिकं यस्याः सा।

कामसूत्रे षष्ठाधिकरणे द्वितीयाध्याये कान्तावृत्तप्रकरणे—"प्रोषिते मृजाऽनियमश्चालङ्कारस्य प्रतिषेधः, मङ्गलं त्वपेक्ष्यम्। एकं शङ्खवलयं वा धारयेत्" ॥ ४४ ॥ व्याख्या—मृजाऽनियमः शरीरासंस्कृतिः।

अभिज्ञानशाकुन्तले सप्तमेऽङ्के—

वसने परिधूसरे वसाना नियमक्षाममुखी धृतैकवेणि।
अतिनिष्करुणस्य शुद्धशीला मम दीर्घं विरहव्रतं बिभर्ति॥ २१॥

वाल्मीकीयरामायणे सुन्दरकाण्डे हनूमद्वाक्यम्—

न रामेण वियुक्ता सा स्वप्तुमर्हति भामिनी।
न भोक्तुं नाप्यलङ्कर्तुं न पानमुपसेवितुम्॥

प्रसन्नराघवेऽशोकवनस्थसीतावर्णनम्—

एकेनालम्बितेयं शिथिलभुजलताशोभिना शाखिशाखा,
हस्तेनान्येन चायं दिनकरकिरणक्लान्तकान्तिः कपोलः।
एष स्रस्तो नितम्बे लुलति कचभरस्त्यक्तकाञ्चीकलापे,
नेत्रोत्सङ्गे च बाष्पस्तबकनवकणः पक्ष्मला पक्ष्मलेखाः॥

अथ विधवावेषाः—

काशीखण्डे चतुर्थाध्याये—

विधवाकबरीबन्धो भर्तृबन्धाय जायते।
शिरसो वपनं तस्मात्कार्यं विधवया सदा॥ ७४॥
न चाङ्गोद्वर्तनं कार्यं स्त्रिया विधवया क्वचित्।
गन्धद्रव्यस्य संयोगो नैव कार्यस्तया पुनः॥ ७९॥
कञ्चुकं न परीदध्याद्वासो न विकृतं न्यसेत् (वसेत्)।
(काशीखण्डे चतुर्थाध्याये ३ श्लो०)

व्याख्या—विकृतं विशेषेण कृतम्, चित्रमित्यर्थः। अङ्गिरःस्मृतौ—

मृते भर्तरि या नारी नीलीवस्त्रं तु धारयेत्।
भर्ता तु नरकं याति सा नारी तदनन्तरम्॥ २१॥

## अथ पुरुषवेषाः

तत्र बालवेषाः—

तत्रापि कस्यचित्परम्पराप्राप्तं पद्यम्—

दिगम्बरं गतव्रीडं जटिलं धूलिधूसरम्।
महापुण्येन पश्यन्ति धन्याः शिवमिवार्भकम्॥

"बालग्रीवेव व्याघ्रनखपंक्तिमण्डिता" इति विन्ध्याटवीवर्णने कादम्बरी। "बालानां तु शिखा प्रोक्ता काकपक्षः शिखण्डकः" इत्यमरः।

"···चलत्काकपक्षकैरमात्यपुत्रैः सवयोभिरन्वितः" इति रघुवंशे। बालानां कपोलसमीपशिखा 'काकपक्षः' इति रामायणतिलके प्रथमकाण्डे।

अथ ब्रह्मचारिवेषाः—

"तत्र पञ्चचूडा अङ्गिरसो मुण्डा भृगवः एकचूडा अन्ये" इति पारस्करगृह्यसूत्रे चूडाप्रकरणे। "जटिलः जटावान् स्यात्" इति प्रथमप्रश्ने ३१ सूत्रे द्वितीयक० आपस्तम्बधर्मसूत्रे। "शिखाजटो वा वापयेदितरान्।" ३२ सूत्रे तत्रैव। एतस्यैव सङ्ग्राहिका स्मृतिः—

"मुण्डो वा जटिलो वा स्यादथ वा स्याच्छिखाजटः।"

अथ तस्य दण्डः—

ब्राह्मणो बैल्वपालाशौ क्षत्रियो वाटखादिरौ।
पैलवोदुम्बुरौ वैश्यो दण्डानर्हन्ति धर्मतः॥ ४५॥
केशान्तगो ब्राह्मणस्य दण्डः कार्यः प्रमाणतः।
ललाटसम्मितो राज्ञः स्यात्तु नासान्तिको विशः॥ ४६॥
ऋजवस्ते तु सर्वे स्युरव्रणाः सौम्यदर्शनाः।
अनुद्वेगकरा नृणां सत्वचो नाग्निदूषिताः॥ ४७॥
(मनु० २ अध्याये)

"पालाशो दण्डो ब्राह्मणस्य, नैयग्रोधस्कन्धजोऽवाङ्ग्रो राजन्यस्य, वादर औदुम्बरो वा वैश्यस्य। वार्क्षो दण्ड इत्यवर्णसंयोगेनैके उपदिशन्ति।" (आपस्तम्बधर्मसू० ३८ सू० प्रथमप्रश्ने)। पालाशदण्ड आषाढपदेनापि व्यवह्रियते। "अथाजिनाषाढधरः प्रगल्भवाक्" इति कुमारसम्भवे।

"पार्णबैल्वाश्व तथा दण्डाः" ( गोभिलगृह्यसूत्रे द्वितीयप्रश्ने दशमसूत्रे १० क० )। व्याख्या—पार्णः पालाशः, वैल्व आश्वत्थ इति वर्णक्रमेण दण्डाः।

अथ तस्य वस्त्राणि—

कार्ष्णरौरववास्तानि चर्माणि ब्रह्मचारिणः।
वसीरन्नानुपूर्व्येण शाणक्षौमाविकानि च॥
( ब्रह्मचारिप्रकरणे द्वितीयाध्याये मनुः )

व्याख्या—कार्ष्णं कृष्णमृगचर्म, रुरुर्बिन्दुमान्मृगः, गौरमृगो वा। वस्तोऽजः। एतच्चर्माणि वर्णक्रमेण ब्रह्मचारिणां परिधेयानि। शाणं क्षौमम् आविकञ्च वस्त्रं क्रमेण धार्यम्। तथा च आपस्तम्बधर्मसूत्रे तृतीयसूत्रे प्रथमप्रश्ने द्वितीयक०—"हारिणमैणेयं वा कृष्णं ब्राह्मणस्य।" हरिणो मृगः। एणी मृगी। "रौरवं राजन्यस्य" ॥ ५ ॥ रुरुर्बिन्दुमान् मृग इति तद्वृत्तौ। "वास्ताजिनं वैश्यस्य" ॥ ६ ॥ "कम्बलश्च" ॥ ६ ॥ "प्रावरणमेव सर्वेषाम्। अजिनं त्वेवोत्तरं धारयेत्" ॥ १० ॥ "शाणी क्षौमाजिनानि" ॥ ४० ॥ "काषायं चैके वस्त्रमुपदिशन्ति" ॥ ४१ ॥ काषायं गैरिकारक्तम्। ब्राह्मणस्येति शेषः। इतरयोर्वक्ष्यमाणत्वात्। "माञ्जिष्ठं राजन्यस्य" ॥ तृ० का० १ ॥ "हारिद्रं वैश्यस्य" ॥ २ ॥

गोभिलगृह्यसूत्रे द्वितीयप्रपाठकस्य दशमकण्डिकायाम्—"क्षौमशाण-कार्पासौर्णान्येषां वसनानि" ॥ ७ ॥ अत्राद्यस्य वासोद्वयस्य ब्राह्मण-विषयत्वं वक्ष्यति विकल्पेन। क्षौमं शाणं वा वसनं ब्राह्मणस्येति। "ऐणेयरौरवाजान्यजिनानि" ॥ ८ ॥ क्रमेणेति शेषः।

अथ ब्रह्मचारिणो मेखलाः—

आपस्तम्बधर्मसूत्रे प्रथमप्रश्ने द्वितीयकण्डिकायाम्—"मौञ्जी मेखला त्रिविद् ब्राह्मणस्य शक्तिविषये दक्षिणावृत्तानाम्" ॥ ३३ ॥ व्याख्या—शक्तौ सत्यां प्रदक्षिणावृत्तानां मुञ्जानामित्यर्थः। ब्राह्मणस्येति शेषः। "ज्या राजन्यस्य" ॥ ३४ ॥ "मौञ्जी वाऽयोमिश्रा" ॥ ३५ ॥ "आवीसूत्रं वैश्यस्य" ॥ ३६ ॥ "सैरी तामली वेत्येके" ॥३७॥ सीरा बाहयोक्त्ररज्जुः। तामलो मूलोदकसंज्ञो वृक्षस्तस्य त्वचा ग्रथिता तामली।

गोभिलगृह्यसूत्रे द्वितीयप्रपाठकस्य दशमकण्डिकायाम्—"मुञ्जकाश-ताम्बल्यो रशनाः" ॥ ९ ॥ व्याख्या—मुञ्जकाशौ प्रसिद्धौ। तम्बलः शण उच्यते।

मौञ्जी त्रिवृत्समा श्लक्ष्णा कार्या विप्रस्य मेखला ।
क्षत्रियस्य तु मौर्वी ज्या वैश्यस्य शाणतान्तवी ॥ ४२ ॥
मुञ्जालाभे तु कर्त्तव्या कुशाश्मन्तकबल्वजैः ।
त्रिवृताग्रन्थिनैकेन त्रिभिः पञ्चभिरेव वा ॥ ४३ ॥

वाल्मीकिरामायणे बालकाण्डे चतुर्थसर्गे कुशलवकर्तृकरामायण-गानावसरे—

प्रसन्नो वल्कलं कश्चिद्ददौ ताभ्यां महायशाः ।
अहो गीतस्य माधुर्य्यं श्लोकानाञ्च विशेषतः ॥ १७ ॥
प्रीतः कश्चिन्मुनिस्ताभ्यां संस्थितः कलशं ददौ ॥ २० ॥
अन्यः कृष्णाजिनमदाद् यज्ञसूत्रं तथाऽपरः ॥ २१ ॥
वृसीमन्यस्तदा प्रादात्कौपीनमपरो मुनिः ।
काषायमरो वस्त्रं चीरमन्यो ददौ मुनिः ॥ २२–२३ ॥
कश्चित्कमण्डलुं प्रादान्मौञ्जीमन्यो महामुनिः ।
ताभ्यां ददौ तदा हृष्टः कुठारमपरो मुनिः ॥ २२ ॥
जटाबन्धनमन्यस्तु काष्ठरज्जुं मुदान्वितः ॥ २३ ॥

व्याख्या—काषायं ब्रह्मचारिधार्य्यं कुसुम्भरक्तं वस्त्रम् । चीरं खण्ड-पट्टम् । जटाबन्धनं काष्ठरज्जुम् । पालाशादिमूलनिर्मितरशनाम्—रामायण-शिरोमणौ । उपर्युक्तानि ब्रह्मचारिधार्याणि प्रतीयन्ते ।

ब्रह्मचारिणां वर्णक्रमेण यज्ञोपवीतानि—

कार्पासमुपवीतं स्याद् विप्रस्योर्ध्ववृतं त्रिवृत् ।
शणसूत्रमयं राज्ञो वैश्यस्याविकसौत्रिकम् ॥ ४४ ॥
( मनु० अ० २ )

हारीतस्मृतौ षष्ठाध्याये—

अजिनं दण्डकाष्ठञ्च मेखलाञ्चोपवीतकम् ।
धारयेदप्रमत्तश्च ब्रह्मचारी समाहितः ॥
छत्रं चोपानहं चैव गन्धमाल्यादि वर्जयेत् ॥

अथ स्नातकस्य वेषाः—

आश्वलायनगृह्यसूत्रे तृतीयाध्याये अष्टमखण्डे—"अथैतान्युपकल्पयीत समावर्तमानो मणिं कुण्डले वस्त्रयुगं छत्रमुपानद्युगं दण्डं स्रजमुन्मर्दनमनुलेपन-मञ्जनमुष्णीषमित्यात्मने चाचार्य्याय च ।"

बौधायनसूत्रे प्रथमप्रश्ने तृतीयाध्याये—"अथ स्नातकस्य ॥ १ ॥ अन्तर्वास्युत्तरीयवान्" ॥ २ ॥ स्यादिति शेषः । अन्तर्वासः कटिसूत्रम्, तद्वान् अन्तर्वासी स चोत्तरीयवान् स्यादित्यर्थः । कटिसूत्रं गृहस्थस्यापि, वाल्मीकीयरामायणे हनूमत्कर्तृकं प्रसुप्तरावणवर्णने—

श्रोणीसूत्रेण महता मेचकेन सुसंवृतः ।
अमृतोत्पादने नद्धो भुजङ्गेनेव मन्दरः ॥ इति ।

"वैणवं दण्डं धारयेत्" ॥ ३ ॥ अङ्गुष्ठप्रणाममूर्धपरिमिता (मुख-परिमिता) यष्टिर्दण्डः । "सोदकञ्च कमण्डलुम्" ॥ ४ ॥ धारयेदिति शेषः । "द्वियज्ञोपवीती" ॥ ५ ॥ उष्णीषमजिनमुत्तरीयमुपानहौ छत्रञ्चो-पासनञ्च दर्शपूर्णमासौ च" ॥ ६ ॥ "पर्वसु च केशश्मश्रुलोमनखवापनम्" ॥ ७ ॥ केशाः मूर्धजाः । श्मश्रु मुखजम् । लोम गुह्यप्रदेशजम् । नखाः करजादयः ।

आपस्तम्बधर्मसूत्रे स्नातकधर्मप्रकरणे प्रथमप्रश्ने—"सर्वान् रागान् वाससि वर्जयेत् ॥ १० ॥ "कृष्णं च स्वाभाविकम्" ॥ ११ ॥ अपीति शेषः । "अनुद्भासि वासो वसीत" ॥ १२ ॥ "अप्रतिकृष्टञ्च शक्तिविषये" ॥ १३ ॥ व्याख्या—प्रतिकृष्टं निकृष्टं जीर्णं मलवत् स्थूलञ्च तद्विपरीतम-प्रतिकृष्टं तादृशं वासो वसीत शक्तौ सत्यामिति हरदत्तीयोज्ज्वलावृत्तौ । "दिवा च शिरसः प्रावणं वर्जयेत् मूत्रपुरीषयोः कर्म परिहाप्य" ॥ १४ ॥ वर्जयित्वा परिहाप्येत्यस्यार्थः । गृहस्थस्यापि यथायोगमेते धर्माः ।

अथ गृहस्थस्य वेषाः—गृहस्थस्य नित्यमुत्तरं वासो धार्यमित्युच्यते । नित्यमुत्तरं वासः कार्यम् । आपस्तम्बधर्मसूत्रे गृहस्थधर्मप्रकरणे द्वितीय-प्रकरणे २२ सूत्रे—

जलतीरं समासाद्य तत्र शुक्ले च वाससी ।
परिधायोत्तरीयञ्च कुर्यात् केशान्न धूनयेत् ॥ ३४ ॥
न रक्तमुल्बणं वासो न नीलं च प्रशस्यते ।
मलाक्तं गन्धहीनञ्च वर्जयेदम्बरं बुधः ॥ ३५ ॥
(हारीतस्मृतौ)

सदोपवीतिना भाव्यं सदा बद्धशिखेन च ।
विशिखो व्युपवीतश्च यत्करोति न तत्कृतम् ॥
इत्यपि स्मृतिः ।

कामसूत्रे प्रथमाधिकरणे चतुर्थाध्याये नागरिकवृत्तप्रकरणे—

"स प्रातरुत्थाय कृतनियतकृत्यः गृहीतदन्तधावनः मात्रयाऽनुलेपनं धूपं स्रजमिति गृहीत्वा दत्त्वा सिक्थकमलक्तकञ्च दृष्ट्वाऽऽदर्शे मुखं गृहीतमुखवासताम्बूलः कार्याण्यनुतिष्ठेत्" ॥ १६ ॥

व्याख्या—मात्रयेति—प्रभूतानुलेपनादिग्रहणादनागरकः स्यात् कार्यानुष्ठाने प्रस्तुतत्वात्। धूपमगुर्वादिना स्रजं शेखरकमापीडं वा अलक्तकं विशिष्टरागार्थं दत्त्वेति। अर्थादोष्ठयोः ईषदार्द्राऽलक्तकपिण्ड्या घृष्ट्वौष्ठं ताम्बूलमुपभुज्य सिक्थकगुटिकया ताडयेदिति क्रमः। आदर्शे मुखमवलोक्य मङ्गलार्थं प्रसाधनगुणदोषज्ञानार्थञ्चेत्यर्थः।

"नित्यं स्नानं द्वितीयमुत्सादनं तृतीयकं फेनकः चतुर्थकमायुष्यं पञ्चमकं दशमकं वा प्रत्यायुष्यमित्यहीनम्" ॥ १७ ॥

व्याख्या—प्रत्यहं स्नानम्, ओजस्करत्वात् पवित्रत्वाच्च। द्वितीयकमिति यस्मिन्दिवसे कृतमुत्सादनं तदनन्तरदिनं प्रथमं तस्माद् द्वितीयेऽह्नि शरीरदार्ढ्यार्थं स्यात्। एकान्तरितमित्यर्थः। उत्सादनमुद्वर्त्तनम्। तृतीयकमिति—तृतीयेऽह्नि जङ्घयोः फेनको स्यात्। द्विदिनान्तरित इत्यर्थः। अन्यथोर्ध्वजङ्घे कर्कशे स्याताम्। चतुर्थकमिति—त्रिः पक्षस्य च श्मश्रुनखरोमाणि वर्धयेदित्ययमागमः। अत्र केषाञ्चिन्नागरिकाणामुपायभेदात् कालभेदः। तत्रायुष्यं-श्मश्रुकर्म क्षुरेण, तच्चतुर्थेऽह्नि स्यात्। दिनत्रयान्तरितमित्यर्थः। कर्तर्या तु पञ्चमकमेव स्यात्। प्रत्यायुष्यमिति—यद् गुह्ये क्षुरेण कर्म तत्पञ्चमेऽह्नि। यत्तु लोम्नामुत्पाटनेन तद्दशमेऽह्नि स्यादित्याह—दशमकं वेति। तत्र लोम्नां चिरेणोद्गमनात्।

आयुष्यं तच्चतुर्थेऽह्नि स्याद्यत्तु क्षुरकर्मणोः।
प्रत्यायुष्यं यदुद्धाराल्लोम्नां तद्दशमेऽह्नि ॥

अहीनमिति—स्नानादिपञ्चकर्मविकलं स्यादित्यर्थः॥ १७ ॥

गृहस्थवेषे उपानहौ चर्मणा मुञ्जेनापि भवतः। तत्र पाणिनीयसूत्रम्—"ऋषभोपानहोर्ञ्यः" ॥ ५। १। १४॥ औपानह्यो मुञ्जः। प्रावारोऽपि गृहस्थवेषे। महाभारते शीलनिरूपणाध्याये धृतराष्ट्रवाक्यं दुर्योधनं प्रति—"आच्छादयसि प्रावारानश्नासि पिशितौदनम्।" मृच्छकटिके च "जातीकुसुमवासितः प्रावारः आर्यचारुदत्ताय वसन्तसेनया प्रेषितः। निष्कोऽपि उरोभूषणम्। "नाप्यनङ्गदनिष्कधृक्" (वाल्मीकीयरामायणे बालकाण्डे षष्ठसर्गे नवमश्लोकः)

अथ वानप्रस्थवेषाः—

गृहस्थो ब्रह्मचारी वा वनवासं यदाचरेत्।
चीरवल्कलधारी स्यादकृष्टान्नाशनो मुनिः ॥ ४८ ॥

( विष्णुस्मृतौ )

वाल्मीकीयरामायणे बालकाण्डे द्वितीयसर्गे वाल्मीकिवचनम्—

अकर्दममिदं तीर्थं भारद्वाज निशामय।
न्यस्यतां कलशस्तात दीयतां वल्कलं मम ॥ ७ ॥

व्याख्या—मम वल्कलं शरीराच्छादनहेतुभूतं कदलीत्वग्दीयतामिति रामायणशिरोमणिः। कौपीनं जटाजूटञ्च मुनीनामासीदिति कुशलवकर्तृक-गीतावसरे प्रागुदाहृतरामायणवचनात्प्रतीयते। अन्येऽप्येतेषां वेषा ब्रह्मचारिवदित्यत एव वस्त्रदण्डवर्जम्। वक्ष्यते चाग्रे नाट्यशास्त्रीयवेष-वाक्योपन्यासावसरे।

अथ यतीनां वेषाः—

क्लृप्तकेशनखश्मश्रुः पात्री दण्डी कुसुम्भवान्।
विचरेन्नियतो नित्यं सर्वभूतान्यपीडयन् ॥

( ६ अ० ५२। मनुः )

अतैजसानि पात्राणि तस्य स्युर्निर्व्रणानि च।
तेषामद्भिः स्मृतं शौचं चमसानामिवाध्वरे ॥ ५३ ॥

विष्णुस्मृतौ—

कौपीनाच्छादनं वासः कन्थां शीतनिवारिणीम्।
पादुके चापि गृह्णीयात् कुर्यान्नान्यस्य संग्रहम् ॥ ७१ ॥
ईषत्कृतकषायस्य लिङ्गमाश्रित्य तिष्ठतः।
अन्नार्थं लिङ्गमुद्दिष्टं न मोक्षार्थमिति स्थितिः ॥ ८२ ॥

कौपीनस्य पुरुषलिङ्गस्याच्छादनं कौपीनमेव वाच्छादनम्—'शालीन-कौपीने अधृष्टाकार्ययोः''। ( ५-२-२० पाणिनिसूत्रम् )। तत्र कूपपतनमर्हति कौपीनं पापं तत्साधनत्वात् तद्वद्गोप्यत्वाद्वा पुरुषलिङ्गमपि, तत्संबन्धात्त-दाच्छादनमपि ॥ ७१ ॥ कामक्रोधादयः कषायाः। लिङ्गं यतिवेषः। ८२ ॥

आपस्तम्बधर्मसूत्रे ९ पटले २१ कण्डिकायाम्—"तस्योपदिशन्ति" ॥९॥

व्याख्या—तस्य परिव्राजः कर्तव्यमुपदिशन्ति धर्मज्ञाः ॥

"तस्य मुक्तमाच्छादनं विहितम्" ॥ ११ ॥

व्याख्या—यत्परैर्मुक्तं परित्यक्तमयोग्यता तत्तस्य विहितमाच्छादनं तद्वास आच्छादयेत् निर्णिज्येति गौतमः। "सर्वतः परिमोक्षमेके" ॥ १२ ॥ सर्वैरेव वासोभिः परिमोक्षमेके उपदिशन्ति। न किञ्चिदपि वासो बिभृयात्। नग्नश्चरेदिति। हारीतस्मृतौ—

त्रिदण्डं वैष्णवं सम्यक् संततं समपर्वकम्।
वेष्टितं कृष्णगोवालरज्जुमच्चतुरङ्गुलम्। (६ अ० ६ श्लो०)

अर्जुनस्य त्रिदण्डिवेषो भारते द्वारिकायाम्।

अथ वध्यवेषः—

तथा च मृच्छकटिके दशमे अंके—

अंसेन बिभ्रत्करबीरमालां स्कन्धेन शूलं हृदयेन शोकम्।
अद्याहमाघातमनुप्रयामि शामित्रमालब्धुमिवाध्वरेऽजः ॥ २१ ॥

रक्तं तदेव वरवस्त्रमियं च माला कान्तागमेन हि वरस्य यथा विभाति।
एते च वध्यपटहध्वनयस्तथैव जाता विवाहपटहध्वनिभिः समानाः ॥४४॥

अथ योद्धृवेषः—

तत्र विराटपर्वणि महाभारते पञ्चमेऽध्याये—

ते वीरा बद्धनिस्त्रिंशास्तथा बद्धकलापिनः।
बद्धगोधाङ्गुलित्राणाः कालिन्दीमभितो ययुः ॥ १ ॥

व्याख्या—निस्त्रिंशः खड्गः। कलापस्तूणीरः। गोधा—चर्म (छाल) रामायणतिलके। बालका० ९ स० २२ श्लोके। "बद्धगोधाङ्गुलित्राणौ खड्गवन्तौ महाद्युती" इत्यत्र अङ्गुलित्राणं लोहादिनिर्मितम्।

अथ कवचः—

"तथाऽभेद्यञ्च दंशनम्"। इति देवीमाहात्म्ये २ अध्याये। धनुस्तु प्रसिद्धमेव। अन्येऽपि समनन्तरमेव नाट्यशास्त्रोपन्यासे वक्ष्यन्ते।

अथ नाट्यशास्त्रे २३ अध्याये नानाविधाः पुरुषवेषाः—

तत्र माल्यं पञ्चविधम्—चे (वे) ष्टितं, विततं, संघात्यं, ग्रन्थिमं, प्रलम्बितम्। चतुर्विधं देहभरणं—आवेध्यं (नासाकर्णाभरणम्)। बन्धनीयम्—श्रोणिसूत्राङ्गदमुक्ताबन्धनीयाः। प्रक्षेप्यं—नूपुरं वस्त्रञ्च। आरोप्यम्—हेमसूत्रादिहाराश्च। चूडामणिः समुकुटः शिरोभूषणम्—कुण्डलं मोचकं कीलं कर्णभूषणम्।

मुक्तावलीहर्षकं सत्सूत्रं कण्ठभूषणम् । कटकोऽङ्गुलिभूषणम् ।
हस्तली वलयं चैव बाहुनालीविभूषणम् ।
रुचिकोच्चितिकौ चैव मणिबन्धविभूषणम् ॥ १८ ॥

केयूरमङ्गदं चैव कूर्परोपरिभूषणम् ।
त्रिरसो (सरो) हारश्च वक्षोविभूषणम् ॥ १९ ॥
व्यालम्बिमौक्तिका हारा माल्याद्या देहभूषणम् ।
तरलं सूत्रकञ्चैव भवेत्कटिविभूषणम् ॥ २० ॥

अथ स्त्रीवेषः—

शिखापाशः शिखाजालं पिण्डीपत्रं तथैव च ।
चूडामणिर्मकरिका मुक्ताजालं गवाक्षकः ॥ २२ ॥
शिरसो भूषणं चैव विचित्रं मणिजालकम् ।
कुण्डलं शिखिपत्रञ्च वेणकञ्ज (ञ्च) सरोचकम् ॥ २३ ॥

ललाटतिलकञ्चैव नानाशिल्पप्रयोजितः ।
भ्रूकक्षोपरिगुच्छश्च कुसुमानुकृतिर्भवेत् ॥ २४ ॥

कर्णिका कर्णवलयं तथा स्यात् वत्रकर्णिका ।
आवेष्टितः कर्णमुद्रा कर्णोत्कीलक एव च ॥ २५ ॥

नानाचित्रविचित्राणि रत्नपत्राणि चैव हि ।
कर्णयोर्भूषणं कार्यं कर्णपूरस्तथैव च ॥ २६ ॥

तिलकाः पत्ररेखा च भवेद् गण्डविभूषणम् ।
त्रिवेणी चैव विज्ञेयं भवेद् वक्षोविभूषणम् ॥ २७ ॥

नेत्रयोरञ्जनं कार्यमधरस्य च रञ्जनम् ।
दन्तानां विविधो रागश्चतुर्णां शुक्लता तथा ॥ २८ ॥
रागान्तरविकल्पश्च शोभनेनाधिकोज्ज्वलः ।
मुग्धानां सुन्दरीणाञ्च मुक्ताभाः सितशोभनाः ॥ २९ ॥
सुरक्ता अपि दन्ताः स्युः पद्मपल्लवरञ्जनाः ॥ ३० ॥
मुक्तावली व्यालपङ्क्तिर्मञ्जरी रत्नमालिका ॥ ३१ ॥
रत्नावली च सूत्रञ्च ज्ञेयं कण्ठविभूषणम् ।
द्विसरस्त्रिसरश्चैव चतुःसरकमेव च ॥ ३२ ॥
तथा शृङ्खलिका चैव भवेत्कण्ठविभूषणम् ।
नानाशिल्पकृताश्चैव हारा वक्षोविभूषणम् ॥ ३३ ॥

अङ्गदं वलयञ्चैव बाहुमूलविभूषणम् ।
मणिजालावनद्धञ्च भवेत्स्तनविभूषणम् ॥ ३४ ॥
वर्जूरं[1] सोच्छितीकञ्च बाहुनालीविभूषणम् ।
कटकं कलशाखा च हस्तपत्रं सुपूरकम् ॥ ३५ ॥
मुद्राऽङ्गुलीयकञ्च स्यादङ्गुलीनां विभूषणम् ।
काञ्ची मौक्तिकजालाढ्या कुलकं मेखला तथा ॥ ३६ ॥
रशना च कलापञ्च भवेच्छ्रोणीविभूषणम् ॥

एकमेवेत्यन्ये ।

एकयष्टिर्भवेत्काञ्ची मेखला त्वष्टयष्टिका ॥ ३७ ॥
रशना षोडश ज्ञेया कलापः पञ्चविंशतिः ।
द्वात्रिंशच्चतुःषष्टिः शतमष्टोत्तरं तथा ॥ ३८ ॥
मुक्ताहारा भवन्त्येते देवपार्थिवयोषिताम् ।
नूपुरः किङ्किणीकञ्च रत्नजालकमेव च ॥ ३९ ॥
संघोषकटकञ्चैव गुल्फोपरि विभूषणम् ।
जङ्घयोः पादपत्रं स्यादङ्गुलीष्वङ्गुलीयकम् ॥ ४० ॥
अङ्गुष्ठतिलकञ्चैव पादयोस्तु विभूषणम् ।
तथैवालक्तरागश्च नानाभक्तिनिवेशितः ॥ ४१ ॥
अशोकपल्लवच्छायः स्यात्स्वाभाविक एव वा ।
एतद् विभूषणं नार्या आकेशादानखादपि ॥ ४२ ॥
कार्यं तु मुनिकन्यानामेकवेणीधरं शिरः ।
न चापि भूषणं कार्यं तासामत्यर्थंतो भवेत् ॥ ५९ ॥
मानुषीणां तु कर्तव्या नानादेशसमुद्भवाः ।
वेषास्त्वाभरणोपेतास्ताँश्च सम्यङ् निबोधत ॥ ६६ ॥
अवन्तियुवतीनां तु शिरः सालककुन्तलम् ॥ ६७ ॥
गौडीनामलकप्रायं सशिखापाशवेणिकम् ।
आभीरयुवतीनां तु द्विवेणीधरमेव च ॥ ६८ ॥
शिरः परिगमप्रायो नीलप्रायमथाम्बरम् ।
तथा पूर्वोत्तरस्त्रीणां समुद्धृतशिखण्डकम् ॥ ६९ ॥
आकेशाच्छादनं तासां वेषकर्मणि कीर्तितम् ।

---

१. 'बाजू' इति लोके प्रसिद्धम् ।

तथा च दक्षिणस्त्रीणां कार्यमुल्लेख्यसंज्ञितम् ॥ ७० ॥
कुम्भीपदकसंयुक्तं तथावर्तललाटिकम् ।
गणिकानां तु कर्तव्यमिच्छाविच्छित्तिमण्डनम् ॥ ७१ ॥
देवजातिविशेषेण देशानामपि कारयेत् ।
वेषं तथा चाभरणं क्षुरकर्मपरिच्छदम् ॥ ७२ ॥
अदेशजो हि वेषस्तु न शोभां जनयिष्यति ॥ ७३ ॥
मेखलोरसि बन्धे च हास्यमेवोपजायते ।
तथा प्रोषितकान्ता या व्यसनाभिहताश्च याः ॥ ७४ ॥
वेषः स्यान्मलिनस्तासामेकवेणीधरं शिरः ।
विप्रलम्भे हि नार्यास्तु शुद्धो वेषो भवेदिह ॥ ७५ ॥
नानाभरणसंयुक्तो न चापि मृजयान्वितः ।
एवं स्त्रीणां प्रयोक्तव्या देशावस्थासमुद्भवाः ॥ ७६ ॥

पुरुषाणां पुनश्चैव वेषान् वक्ष्यामि तत्त्वतः ।
तत्राङ्गरचना पूर्वं कर्तव्या नाट्ययोक्तृभिः ॥ ७७ ॥
सितनीलसमायोगात्पाण्डुवर्णः प्रकीर्तितः ।
सितरक्तसमायोगात् पद्मवर्ण इति स्मृतः ॥ ८१ ॥
पीतनीलसमायोगाद्धरितो नाम जायते ।
रक्तपीतसमायोगात्कषायो नाम जायते ॥ ८२ ॥
नीलरक्तसमायोगाद् गौर इत्यभिधीयते ।
एते संयोगजा वर्णा ह्युपवर्णास्तथाऽपरे ॥ ८३ ॥
शुक्लं श्यामं विचित्रं च तथा रोमशमेव च ।
चतुर्विधं भवेच्छ्मश्रु नानावस्थान्तराश्रयम् ॥ ११५ ॥

शुद्धस्तु लिङ्गिनः कार्यस्तथाऽमात्यपुरोधसाम् ।
मध्यस्था ये च पुरुषा ये च दीक्षां समाश्रिताः ॥ ११६ ॥
नृपतीनां कुमाराणां ये च राजन्यजीविनः ॥ ११७ ॥
शृङ्गारिणश्च ये मर्त्या यौवनोन्मादिनश्च ये ।
तेषां विचित्रं कर्तव्यं श्मश्रु नाट्यप्रयोक्तृभिः ॥ ११८ ॥

अनिस्तीर्णप्रतिज्ञानां दुःखितानां तपस्विनाम् ।
व्यसनाभिहतानाञ्च श्यामं श्मश्रु भवेत्तदा ॥ ११९ ॥
ऋषीणां तापसानाञ्च ये च दीर्घव्रता नराः ।
सिद्धविद्याधराणाञ्च रोमशस्तु विधीयते ॥ १२० ॥

देवाभिगमने चैव माङ्गल्ये नियमस्थिते।
तिथिनक्षत्रयोगे च विवाहकरणे तथा॥ १२३॥
धर्मप्रवृत्तं यत्कार्यं स्त्रीणां च पुरुषस्य वा।
वेषस्तत्र भवेच्छुद्धो ये च प्रायत्निका नराः॥ १२४॥
देवदानवयक्षाणां गन्धर्वोरगरक्षसाम्।
नृपाणां कर्कशानाञ्च चित्रो वेषो भवेत्तदा॥ १२५॥
कञ्चुकीनाममात्यानां श्रेष्ठिनां पुररोधसाम्।
सिद्धविद्याधराणाञ्च वणिक्शास्त्रविदामपि॥ १२६॥
विप्रक्षत्रियवैश्यानां स्थानीया ये च मानवाः।
शुद्धो वस्त्रविधिस्तेषां कर्तव्यो नाटकाश्रयः॥ १२७॥
उन्मत्तानां प्रमत्तानां जनानामध्वगामिनाम्।
व्यसनोपगतानाञ्च मलिनो वेष इष्यते॥ १२८॥
परिव्राण्मुनिमुख्येषु तापसेषु तथैव च॥ १३२॥
काषायवसनो वेषः कार्यस्त्वर्थवशानुगः।
अन्तःपुरस्य रक्षार्थं विनियुक्ता हि ये नराः॥ १३३॥
काषायकञ्चुकपटाः कार्यास्तेषां यथाविधि।
चीरवल्कलचर्माणि तापसानान्तु कारयेत्॥
अवस्थान्तरमासाद्य स्त्रीणां वेषो भवेदथ॥ १३४॥
वेषः सांग्रामिकश्चैव शूराणां संप्रकीर्तितः।
विचित्रशस्त्रकवचो बद्धत्राणो धनुर्धरः॥ १३५॥
विचित्रवेषः कर्तव्यो नृपाणां नित्यमेव च।
केवलस्तु भवेच्छुद्धो नक्षत्रोत्पादमङ्गले॥ १३६॥
अमात्यानां कञ्चुकिनां तथा श्रेष्ठिपुरोधसाम्।
वेष्टनं बन्धपट्टादिप्रतिशीर्षाणि कारयेत्॥ १४९॥
सेनापतेः पुनश्चापि युवराजस्य चैव हि।
मस्तकेष्वर्धमुकुटं प्रयोगे संप्रयोजयेत्॥ १४८॥
बालानामपि कर्तव्यं नाशिखण्डविभूषितम्।
जटामुकुटलम्बञ्च मुनीनां तु भवच्छिरः॥ १४९॥
पिशाचोन्मत्तभूतानां साधकानां तपस्विनाम्।
अनिस्तीर्णप्रतिज्ञानां लम्बकेशं तु शीर्षकम्॥ १५०॥

शाक्यश्रोत्रियनिर्ग्रन्थपरिव्राड्दीक्षितेषु च ।
शिरोमुण्डं तु कर्तव्यं यज्ञदीक्षान्वितेषु च ।। १५१ ।।
धूर्तानाञ्चापि कर्तव्यं ये च रात्र्युपजीविनः ।
ये च श्रृङ्गारिणस्तेषां शिरः कुञ्चितमूर्धजम् ।। १५३ ।।
चेटानामपि कर्तव्यं त्रिशिखं मुण्डमेव च ।। १५४ ।।

तत्र तत्रोपलभ्यमानेषु प्राचीनशिलाचित्रेष्वपि नानाविधाः स्त्रीपुरुषवेशाः प्रत्यक्षीक्रियन्ते । तद्यथाऽजन्ताख्यगुहायां समुपलभ्यमानानि चित्राणि कानिचिदुदाह्रियन्ते । तत्र स्त्रीवेषः । चित्रसंख्या १७ गु० १९—उत्तरीयम्, शाटी च । आप्रपदीनो वेशः । चित्रसंख्या—४४ गु० सं० १६—केवलं स्तनबन्धः स्तनपट्टिका वा वस्त्रनिर्मिता—अन्यत् कलेवरं नग्नम् । गु० सं० १७, चि० सं० ७१—आजानुलम्बो निचोलः । गुहासंख्या सैव—चित्र सं० ६—निवीतवत् आप्रपदीनम् उत्तरीयम् । गु० सं० १, चि० सं० ६—मौक्तिकहारः, व्युप्तरत्नकङ्कणः, केवलकङ्कणः । केयूरस्थाने वलयीकृता मौक्तिकमाला, कनिष्ठिकायामङ्गुलीयकम्, मौलौ पुष्पमाल्यम् । आस्तनाभ्याम् आ चोरुमध्यात् स्यूतशरीरसंलग्नं च वसनं कञ्चुकम् । गु० सं० १, चि० सं० ४—वलयः केयूरः काञ्ची अर्धोरुव्यापि वेष्टितं दशाबहुलम् । एकयष्टिको नूपुरः । ऊरुवलयम् । गु० सं० १, चि० सं० ५—केशहस्ते माल्यम् । भूषणवत्त्वेऽपि नग्नत्वम् । गु० सं २, चि० सं० ६६—दोलारूढा, शङ्खवलयाः । आगुल्फं वसनं कञ्चुकरहितो वेषः ।

पुरुषवेषस्तत्रैव गुहायाम्—गु० सं० १ चि० सं० ५—कञ्चुकम् उपवीतवद् हारः—स्यूतं शिरस्त्रं शिरसि । गु० सं० १—चि० सं० ७—वृत्तं शिरस्त्रम्, कञ्चुकम्, कटिपट्टिका । अर्धोरुकम् । गु० सं० १, चि० सं० ८—जटाजूटः—उपवीतवत् उत्तरीयम् । गु० सं० १, चि० सं० २८—सूक्ष्मं धौतवस्त्रं केवलम् । गु० सं १ चि० ३४—ऊरुमूलव्याप्तिः बद्धपरिकरो वेषः, मुकुटो नानाशिखरवान् कङ्कणद्वयवान् बाहुः । बहुयष्टिको लम्बमानो हारः । कर्णयोः कुण्डलम् । तदग्रे ३९ चि० सं०—कण्ठसंलग्नो हारः अर्धबाहुकम् आर्धनाभिकं च शरीरसंलग्नं कञ्चुकम् । गु० सं० १७, चित्र सं० ४७—अर्धोरुकम् । गु० सं० १, चि० सं० ४८— अर्धोरस्कम्—गु० सं १ चि० सं० ५८—बद्धपरिकरो वेषः कञ्चुकरहितः ।

इत्थं विचारितो वेषो देशकल्याणकाम्यया ।
परप्रणेयतां यान्ति परानुकृतिकामतः ।। १ ।।

ऐदंयुगीनो वेषस्तु दारिद्र्यदरसङ्गिनाम् ।
स्वेच्छामात्रप्रवृत्तत्वान्न व्यवस्थातुमर्हति ॥ २ ॥
देशो व्यवस्थितो वेषे वृत्तं वेषे व्यवस्थितम् ।
भाषा व्यवस्थिता वेषे सर्वं वेषे व्यवस्थितम् ॥ ३ ॥
वेषेणाद्रियते लोके वेषेण परिभूयते ।
ददौ तनूजां हरये हरायाब्धिर्महाविषम् ॥ ४ ॥
परवेषानुकारो हि परगौरवभावतः ।
तस्मात् स्वलाघवकरः परवेषो न सेव्यताम् ॥ ५ ॥



( २३ )

# शास्त्रीयो गर्भनिरोधविधिः

या कालादृष्टवशतः सर्गस्थितिलयक्रियाः ।
करोति जगतामीशा जननी सा प्रसीदतु ॥ १ ॥
वर्धमानं प्रजासर्गं वीक्ष्य संत्रस्तमानसाः ।
प्रजायामुपतिष्ठन्ते जननी सा प्रसीदतु ॥ २ ॥
बहुप्रजस्त्वं सुखदं यद्भृत्शक्तेरनुग्रहे ।
तदभावे न तु तथा जननी सा प्रसीदतु ॥ ३ ॥
या शक्ती रेतसो रेके पुंसः क्लीबस्य नास्ति या ।
सा सम्यगनुगृह्णातु प्रजाभरणसाधनैः ॥ ४ ॥
गर्भरोधस्य या शक्तिर्यमे काले तथा कृतौ ।
द्रव्ये च संस्थिता सा मे जननी संप्रसीदतु ॥ ५ ॥

अथातः काम्यं गर्भरोधविधिं व्याख्यास्यामः । यतोऽधुना कराले कलिकाले मानवाः काममेवैकं पुरुषार्थं मन्यन्ते तत्साधनत्वाच्चार्थम् । प्रत्यक्षमेवैकं प्रमाणम् । नास्ति खलु अनुमानशब्दादिषु प्रामाण्यसंप्रत्ययः, बहुशस्तेषु प्रामाण्यव्यभिचारदर्शनात् । कामसाधनस्य कामसाधनवस्त्र-भूषाऽन्नादिसाधनस्य चार्थस्य साधनाय महायन्त्राणि प्रवर्तयन्ते, पानयानादि-परसंपदोऽन्यायेनापहरन्ति, धर्मनिरपेक्षा निर्धनांश्चान्यैः पीड्यमानान् नेतृत्वमिषेण वञ्चयन्ते, विमानैरितस्ततः खेलन्तोऽट्टशूलेषु हर्म्येषु विहरन्तो वारवनितासखाः परवनितासखाः कुमारीसखा वा । सततमहर्निशं सर्वेषु व्यवहारक्षेत्रेषु यानासनशयनभोजनसभासमाजादिषु स्त्रीभिः संपृक्ता अपत्यमुत्पादयन्ति अजा इव, वराहा इव, कुक्कुटा इव । परे संभोगेन हीयमानशक्तयः कुक्कुटाण्डकललमदिरामिषसेविनः । एतादृशामपत्यानां भरणाक्षमाश्च ग्राम्यधर्मादविरमन्तो परं मन्यन्ते गर्भनिरोधकारणमज्ञनाया गर्भाशयस्य आप्रासनम् । अतिशयेन प्रकर्षेण च शल्यक्रियया दूरीकरणम्) । उपदिशन्ति च मुग्धाः प्रजा गर्भाशयाप्रासनं कारयितुम् । तत्र च बहवो दोषा दृश्यन्ते—स्त्रियाः स्वास्थ्यहानिः । आप्रासनात्प्राग्जाताना-

मपत्यानां विनाशोऽस्तोकायां तोकेच्छायां सत्यामपि गर्भानुत्पादः। स्त्रीणां निर्भयं व्यभिचारे प्रवृत्तिः। ततश्च वधबन्धादिप्रयोजकः कलहश्चेति।

तच्चेदमस्माभिरुपदिश्यमानं गर्भनिरोधशास्त्रमनपायं चतुष्पादं भवति। तत्रास्य प्रथमः संयमपादः। द्वितीयः कालपादः। तृतीयः क्रियापादः। चतुर्थस्तु द्रव्यपाद इति।

तत्रावसरप्राप्तः संयमपाद एव प्रथमं प्रस्तूयते। तत्र संयमस्येतिकर्तव्यता बहुविधाः शास्त्रेषु दृष्टा उद्देशेनैव लिख्यन्ते—

(१) तत्र निशि अजागरितस्याव्याधितस्य दिवास्वापाभावः प्रथमः संयमः। दिवास्वापेन हि रिरंसा वर्धते। दिवास्वापश्च अकार्यस्यालसस्य भवतीति विमृश्य दिवा सततमेव लघुनि महति वा कार्ये प्रसक्तिर्विधेया। ततः स्त्रीविषयकस्य संकल्पस्याभावः, ततः कामोद्रेकाभावः।

(२) दिवा रहसि स्त्रीमात्रस्य (स्वस्याः परस्या वा) संपर्काभावः।

अत एव—

घृतकुम्भसमा नारी तप्ताङ्गारसमः पुमान्।<br>
तस्माद् घृतञ्च वह्निश्च नैकत्र स्थापयेद् बुधः॥ इति मनुः।

येनेच्छेत् शाश्वतीं प्रीतिं त्रीणि तत्र न कारयेत्।<br>
द्यूतमर्थप्रयोगञ्च परोक्षे दारदर्शनम्॥

इति च नीतिवाक्यम्।

(३) दिवा स्त्रिया सह व्यवहारस्यावश्यकत्वेऽरहसि (जनसमक्षम्) व्यवहारः।

(४) अष्टाङ्गमैथुनविरोधिनः संकल्पस्य भावनं तत्र दोषदृष्ट्या।

अष्टाङ्गमैथुनस्वरूपश्च—

स्पर्शनं कीर्तनं केलिः प्रेक्षणं गुह्यभाषणम्।<br>
संकल्पोऽध्यवसायश्च क्रियानिर्वृत्तिरेव च।<br>
एतन्मैथुनमष्टाङ्गं प्रवदन्ति मनीषिणः॥ इति।

दोषदृष्टिश्च—

नहीदृशमनायुष्यं लोके किञ्चन विद्यते।<br>
यादृशं पुरुषस्येह परदाराभिमर्षणम्॥ इति।

न जातु कामः कामानामुपभोगेन शाम्यति।<br>
हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते॥

इति मनुः।

यत्पृथिव्यां व्रीहियवं हिरण्यं पशवः स्त्रियः ।
एकस्यापि न पर्याप्तं तस्मात्सर्वं परित्यजेत् ॥

इति भागवते ययातिगीतम् ।

धर्माविरुद्धो भूतेषु कामोऽस्मि भरतर्षभ ॥ इति गीता ।

मात्रा स्वस्रा दुहित्रा वा न विविक्तासनो भवेत् ।
बलवानिन्द्रियग्रामो विद्वांसमपि कर्षति ॥ इति च ।

दिवामैथुने दोषदृष्टिश्च "उच्छिन्दन्ति ह वा एते प्राणान् य एते दिवा रत्या संयुज्यन्ते" इत्यर्थकश्रुतिवाक्योपलम्भात् ।

( ५ ) अभ्यासवैराग्याभ्यां मनसो निरोधः ।

( ६ ) चित्रपटाप्रेक्षणम् ।

( ७ ) स्त्रिया सहासख्यं तस्या हितकृत्त्वेऽपि ।

( ८ ) न नग्नां स्त्रियमीक्षेत, न च संसक्तमैथुनामित्यादिनिषेधपरिपालनम् ।

( ९ ) कुड्यस्थितेषु नागदन्तकेषु नानाविधानां स्त्रीचित्राणामनासञ्जनम् । तत्र तदासञ्जनेन हि चेतसि विकारो भवतीति न परोक्षम् ।

( १० ) मातृस्वसृदुहितृव्यतिरिक्तानां स्त्रीणां कन्यकानां वाऽनध्यापनम् । स्त्रीणामध्यापनं स्त्रीणागेव कार्यम् ।

( ११ ) सेवासु स्त्रीणां प्राधान्यमप्राधान्यं वा यत्र प्रसज्यते सा न कार्या । कार्यत्वे वा न स्त्रीषु प्रसक्तिः कार्या ।

( १२ ) यदि तु कदाचित्कथञ्चिद् अवार्यवेगः कामः स्त्रीविषयकः स्यात् तदा बलादपोऽवगाहेत, ततः कामपीडाशान्तिः । तदुक्तं भारते—"तीव्रार्तिः प्रविशेदपः" इति ।

( १३ ) कार्यावकाशे निवृत्तकामान् स्वदारनिरतान् वा सतः समीयात्, ततः कामनिवृत्तिः । तदुक्तं मार्कण्डेयपुराणे—

सङ्गः सर्वात्मना हेयः स चेद् हातुं न शक्यते ।
स सद्भिः सह कर्तव्यः सतां सङ्गो हि भेषजम् ॥ इति ।

त्यज दुर्जनसंसर्गं भज साधुसमागमम् ।
कुरु पुण्यमहोरात्रं स्मर नित्यमनित्यताम् ॥

इति च काचित्कम् ।

( १४ ) पूर्णिमायाम्, अमायाम्, श्राद्धदिने, श्राद्धभोजने, उपवासे, व्रतादौ स्त्रियं नोपेयात्, तत्र तन्निषेधात् ।

( १५ ) अस्वस्थोऽस्वस्थां न गच्छेत्, अस्वस्थमपत्यं भवति ।

( १६ ) वृथा वीर्यं न पातयेत्, स्वास्थ्यहानिर्भवति ।

( १७ ) ऋतुस्नातां तु यो भार्यां स्वस्थः सन्नोपगच्छति ।
घोरायां भ्रूणहत्यायां युज्यते नात्र संशयः ॥

इत्यादि वचनन्तु अनपत्यत्वे सत्येव । जाते त्वपत्ये कामचारः ।

( १८ ) कामविजयार्थम्—एकभक्तम्, नक्तम्, प्राजापत्यम्, शुक्लैकादश्यामुपवासो गृहस्थस्य, तदितरस्य द्वयोरपि । अन्ये च जयन्तीशिवव्रतादयः । तत्र एकभक्तम्—दिवाभोजनं रात्रावभोजनम् । नक्तम्—रात्रौ भोजनं दिवाऽभोजनम् । प्राजापत्यम्—

त्र्यहं सायं त्र्यहं प्रातस्त्र्यहमद्यादयाचितम् ।
त्र्यहं परं तु नाश्नीयात् प्राजापत्यो विधिः स्मृतः ॥ इति ।

एकादशीशिवरात्र्यादिकन्तु लोके प्रसिद्धमेव ।

( १९ ) सहशिक्षाया अभावः ।

( २० ) सहयानसहासनसमीपशयनादीनामभावः ।

( २१ ) सात्त्विकाहारसेवनम् । "रस्या हृद्याः स्थिराः स्निग्धा आहाराः सात्त्विकप्रियाः" इति ।

अथावसरप्राप्तः कालपादो निरूप्यते । तत्र—"षोडशर्तुनिशाः स्त्रीणां तासु युग्मासु संविशेत् । युग्मासु पुत्रा जायन्ते स्त्रियोऽयुग्मासु रात्रिषु" इति वचनात् आर्तवदर्शनात्षोडशदिनोत्तरं भार्यागमने गर्भाभावः । आर्तवलोपोत्तरं च गमने गर्भाभावः ।

अथ क्रियापादो निरूप्यते । एवं हि बृहदारण्यके श्रूयते—"अथ यामिच्छेन्न गर्भं दधीतेति तस्यामर्थं निष्ठाय मुखेन मुखं संधायाभिप्राण्यापान्यादिन्द्रियेण ते रेतसा रेत आददे इत्यरेता एव भवति" ॥ १० ॥ ( ६ अ० ४ ब्रा० बृह० ) ।

अस्य शाङ्करभाष्यम्—"अथ यामिच्छेन्न गर्भं दधीत न धारयेद्, 'गर्भिणी मा भूद्' इति, तस्यामर्थं प्रजननेन्द्रियं निष्ठाय निक्षिप्य मुखेन मुखं ( स्वमुखेन तस्या मुखं ) संधाय, अभिप्राण्य अभिप्राणनं प्रथमं कृत्वा पश्चादपान्यादिन्द्रियेण 'ते रेतसा रेत आददे' इत्यनेन मन्त्रेण । अरेता एव भवति । न गर्भिणी भवतीत्यर्थः" इति ।

अस्यानन्दगिरीयं व्याख्यानम्—"तस्याः स्वविषये प्रीतिमुत्पाद्यावाच्य-कर्मानुष्ठानदशायामभिप्रायविशेषानुसारेणानुष्ठानविशेषं दर्शयति—अथेत्या-दिना। तत्र तत्राथशब्दस्तत्तदुपक्रमार्थो वेदितव्यः। पशुकर्मकाले प्रथमं स्वकीयपुंस्त्वद्वारा तदीयस्त्रीत्वे वायुं विसृज्य तेनैव द्वारेण ततस्तदादाना-भिमानं कुर्यादित्याह—अभिप्राण्येति। अत्र पुंस्त्वपदेन मेढ्रम्। स्त्रीत्व-पदेन तु योनिरुच्यते।

अथावसरप्राप्तो द्रव्यपादो निरूप्यते। तदुक्तं रतिरहस्ये—

अमला मलाञ्जनयुता पीता शीताम्बुना हरति।
गर्भमृतौ भगनिहितं घृतमधुयुक्तं पलाशबीजं वा॥

(सकलयोगाधिकरणे, ६० श्लो०)

व्याख्यातञ्च काञ्चीनाथेन—"अथ गर्भचालनविधिं कथयति—अम-लेति—अमला महानीली। अमरकोषे 'आमलकी' इत्युच्यते। मला—भूम्यामलकी। शब्दचन्द्रिकायान्तु आमहरिद्रेत्युच्यते। मूलेति पाठे मूला गृहगोधिका। त्रिकाण्डे तु 'शतावरी' इत्युच्यते। अञ्जनी गृहगोधिका। एतैर्युता। ऋतौ शीताम्बुना शीतजलेन पीता सती गर्भं हरति। विनाशय-तीत्यर्थः। अथ वा घृतमधुयुक्तं पलाशबीजम् ऋतुकाले भगे निहितं सद्-गर्भं हरति इत्यर्थः। ऋतावित्युभयत्रापि संबध्यते"।

तण्डुलजलेन पीतं मूलं ज्वलनस्य वा जयन्त्या वा।
गर्भघ्नं भगनिहितं लवणं कटुतैलयुक्तं वा॥ ६१॥

व्याख्या—"ज्वलनस्य चित्रकवृक्षस्य मूलम्, अथवा जयन्त्याः स्वनाम-ख्याततिक्तशाकौषधिक्षुपस्य, भावप्रकाशे तु 'श्वेतनिर्गुण्डी' इत्युच्यते। अग्निमन्थस्य वा, तद्गुणाश्च—गलगण्डाऽनिलभूतघ्नी तिक्ता कटुः उष्णा च। तथा चोक्तं चरकसंहितायाम्—'मूलं जयन्त्याः शिरसि धृतं सर्व-ज्वरापहम्' इति। मूलं तण्डुलजलेन पीतं सद् गर्भघ्नं गर्भनाशकं भवति। अथवा कटुतैलयुक्तं लवणं भगे निहितं सद् गर्भघ्नं भवतीत्यर्थः"॥ ६१॥

शैवलकेसरबीजं मूलं वा चम्पकस्य वा कणया।
गर्भं रुणद्धि पीतं कटुतैलं वा जरत्सुधया॥ ६२॥

व्याख्या—"शैवलकेसरयुक्तं मूलम् अनलचक्रकस्य, कणया वा युक्तम् अनलचक्रमूलं गर्भं रुणद्धि। जरत्सुधया पीतं कटुतैलं वा गर्भं निहन्तीति"।

कुचिमारतन्त्रेऽपि—

सेहुण्डकं समादाय छायाशुष्कन्तु कारयेत् ।
प्रदाह्य वह्निना तच्च कर्षमात्रञ्च नित्यशः ॥
एकविंशत्यहान्येतद् भक्षयेन्मधुना सह ।
आजन्म वन्ध्या भवति रोगक्लेशविवर्जिता ॥
हस्तिविष्ठाजलं ग्राह्यं कर्षमात्रं प्रमाणतः ।
दिनानि सप्त मधुना पिबेद् वन्ध्यात्वसिद्धये ॥
हारिद्रग्रन्थिरेकैकं प्रत्यहं भक्षयेद् यदि ।
रजोधर्मसमायुक्ता वन्ध्या षड्भिर्दिनैर्भवेत् ॥
दिनत्रयं रजोधर्मे त्रिदिनं च ततः परम् ।
एवं षट्सु दिनेष्वेतद्द्द्याद् वन्ध्यात्वसिद्धये ॥
कालाजीरीञ्च कर्चूरं नागकेशरसंयुतम् ।
हरीतकीं कलौजीञ्च क्षिपेत्कायफलं तथा ॥
जलेन भावयन् कुर्याद् वटिकां वदरोपमाम् ।
रजोधर्मनिवृत्तौ च भक्षयेत्पयसा समम् ॥
प्रत्यहं गुटिकामेकामेवं सप्ताहमाचरेत् ।
वन्ध्यात्वप्राप्तये योगो मुनिभिः परिकीर्तितः ॥
त्रैवार्षिकं पलमितं मासार्धं भक्षयेद् गुडम् ।
यावज्जीवं भवेद् वन्ध्या नात्र काऽपि विचारणा ॥
सर्षपं तण्डुलं चैव शर्करासकलं समम् ।
पयसा ताण्डुलेनैतद् भुक्तं पुष्पं विनाशयेत् ॥
तुषतोयेन संकाथ्य मूलमग्नितरूद्भवम् ।
पुष्पान्ते त्रिदिनं पीतं वन्ध्यात्वं नयते ध्रुवम् ॥ इति ।

पञ्चसायकनाम्नो ग्रन्थस्य चतुर्थे सायकेऽपि—

तुषाम्बुना यावकवृक्षमूलं निःक्वाथ्य पीत्वा नियमं चरन्ती ।
ऋत्वन्तकाले त्रिदिनं पिबन्ती वन्ध्या भवेदामरणान्तमेव ॥
फलं कदम्बस्य च माक्षिकाणि तुषोदकेन त्रिदिनं सकृद्वा ।
स्नानावसाने नियमेन पीत्वा वन्ध्या भवेत्स्त्री नियतं हठेन ॥
कर्षद्वयं राक्षसवृक्षबीजं सप्ताहमात्रं शितशालिधारा ।
ऋतौ निपीतं मृगशावकाक्ष्या वन्ध्यात्वमेतन्नियतं करोति ॥ इति ।

इमे च श्लोकाः क्वचित्क्वचिद् व्याख्यासापेक्षा अपि मुद्र्यमाणायाश्चित्रनिबन्धावल्या मध्येऽस्य निबन्धस्य मुद्रणोद्वेगेन न व्याख्याताः । पुनर्मुद्रणावसरे व्याख्यास्यन्त इति क्षन्तव्योऽयं जन इत्यर्थये ।

इत्येतं ग्रन्थमालोच्य चतुष्पादं यथारुचि ।
निरोधो गर्भविषये कार्यं आर्यैर्मुदान्वितैः ॥ १ ॥
धात्रा तु विहितं गर्भगृहं प्रकृतियोजितम् ।
नास्तिक्यं समुपाश्रित्य नापनेयं विचक्षणैः ॥ २ ॥
इमे योगा यथाकालं यथाशास्त्रं परीक्षिताः ।
गर्भं रुरुत्सुभिर्धीरैः परीक्षन्तां परीक्षकैः ॥ ३ ॥
संकल्पप्रभवः कामः कामाद् गर्भसमुद्भवः ।
तस्मात् कामो निरोद्धव्यो न गर्भं इति मे मतिः ॥ ४ ॥
अतो भगवतोद्दिष्टं गीतायामर्जुनं प्रति ।
"जहि शत्रुं महाबाहो कामरूपं दुरासदम् ॥ ५ ॥
इन्द्रियाणि मनो बुद्धिरस्याधिष्ठानमुच्यते ।
एतैर्विमोहयत्येष ज्ञानमावृत्य देहिनम् ॥ ६ ॥
तस्मात्त्वमिन्द्रियाण्यादौ नियम्य भरतर्षभ ।
पाप्मानं प्रजहि ह्येनं ज्ञानविज्ञाननाशनम्" ॥ ७ ॥
इति गीतां समाश्रित्य भगवन्मुखनिर्गताम् ।
धैर्यमभ्यासवैराग्ये कामं जयत सज्जनाः ॥ ९ ॥
इदं प्रथमकार्यतः प्रभवदर्थरोध्यर्थक-
प्रतीपकृतिरद्भुता लघुरुदारभावा कृता ।
इयं समवलोक्यतां हृदि मुहुर्मुदा धार्यतां
विचार्य परिचार्यतां विधिसमादरैः सेव्यताम् ॥ १० ॥



# वेदान्तेषु ब्रह्मस्वरूपविमर्शः

## माध्वमते ब्रह्मस्वरूपविमर्शः

तत्र द्वैतप्रतिपादके माध्वमते परिपूर्णानन्तगुणपरिपूर्णत्वं परमात्मनो लक्षणम् । अनन्तानामपि गुणानां परिपूर्णत्वञ्च प्रत्येकं निरवधिकत्वं निरतिशयत्वञ्च । लक्ष्म्यादिगतज्ञानाद्यपेक्षया परमात्मगतज्ञानानन्दादिकमनन्तगुणितम् । एकैकमप्यनन्तमिति सजातीयानन्त्यम् । तथा ज्ञानानन्दबलशक्त्यादीनामप्यानन्त्यमिति विजातीयानन्त्यञ्च विवक्षितम् । तदुक्तं षष्ठे भागवते—'मय्यनन्तगुणेऽनन्ते गुणतोऽनन्तविग्रहे' इति । परमात्मज्ञानस्य लक्ष्म्यादिज्ञानापेक्षयाऽपरिमितत्वञ्चोत्क्रान्तिपादीयानुव्याख्याने प्रतिपादितम्—

"बहुला चातिविशदा स्पष्टा चैव श्रियो मतिः ।
महाशुद्धचितित्वेन ततोऽप्यतिमहाचितिः ।।
अशेषोरुविशेषाणामतिस्पष्टतया दृशिः ।
नित्यमेकप्रकारा च नारायणमतिः परा ।।
सूर्यप्रभावदखिलं भासयन्ती निरन्तरा ।
निर्लेपा वीतदोषा च नित्यमेवाविकारिणी ।।" इति ।

सृष्ट्यादिकर्तृत्वञ्च ब्रह्मणो लक्षणम् । तदुक्तं भाष्ये—

"उत्पत्तिस्थितिसंहारा नियतिर्ज्ञानमावृतिः ।
बन्धमोक्षौ च पुरुषाद् यस्मात् स हरिरेकराट् ।।" इति ।

तत्त्वसंख्यानेऽनुव्याख्यानेऽपि चैतदुक्तम्—"जगत्सृष्ट्यादिकर्तृत्वं च सर्वज्ञानं विनाऽनुपपन्नमिति सर्वज्ञत्वमपि ब्रह्मणि । 'यः सर्वज्ञः सर्वविद्' इत्याद्याः श्रुतयोऽत्र मानम्" इति । सर्वेषामपि शब्दानां परमात्मनि महायोगवृत्त्या प्रवर्त्तमानत्वेन सकलपदप्रवृत्तिनिमित्तवत्त्वेन सकलगुणपरिपूर्णत्वमपि । तदुक्तमणुभाष्ये—

"अवान्तरं कारणं च प्रकृतिः शून्यमेव च ।
इत्याद्यन्यत्र नियतैरपि मुख्यतयोदितः ।।

शब्दैरतोऽनन्तगुणो यच्छब्दा योगवृत्तयः ॥" इति ।

ननु न परमात्मनोऽनन्तगुणपरिपूर्णत्वं युक्तम्, तस्याल्पगुणजीवाभिन्नत्वादिति चेत् ? न; परमात्मनो जडजीवविलक्षणत्वात् । जडं प्रकृत्यादि, ब्रह्मादयो जीवाः, प्रकृतिर्महालक्ष्मीः । परमात्मनो जडजीवविलक्षणत्वे प्रमाणन्तु—

"द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च ।
क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ॥
उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।" इति गीता ।

तथा—"ब्रह्मा शिवः सुरेशाद्याः शरीरक्षरणात् क्षराः ।
लक्ष्मीरक्षरदेहत्वादक्षरा तत्परो हरिः ॥"

इति तत्त्वनिर्णयोदाहृतश्रुतिश्च । तत्र क्षराक्षरपदाभ्यां जडमप्युपलक्ष्यते ।

ननु न परमात्मनो जगत्कर्तृत्वं युक्तम्, शरीराभावात्, शरीरवत्त्वे चानित्यत्वापत्तिरिति चेत् ? न; ज्ञानानन्दाद्यात्मकशरीरवत्त्वात् । प्राकृतदेहस्यैव विनाशित्वात् । ननु ज्ञानादिदेहवत्त्वेऽपि अन्धपङ्ग्वादित्वेन सर्वकर्तृत्वानुपपत्तिरिति चेत् ? न; परमात्मनि ज्ञानादिरूपसकलेन्द्रियपारवश्याभ्युपगमात् । अत्र प्रमाणन्तु—

"तस्मादानन्दचिद्देहं चिदानन्दशिरोमुखम् ।
चिदानन्दभुजं ज्ञानसुखैकपदसाङ्गुलिम् (?) ॥
आकेशादानखाग्रेभ्यः पूर्णचित्सुखशक्तिकम् ।"

इति बृहदारण्यकभाष्यमेव ।

ब्रह्मरुद्रादिवत् परमात्मनो न पराधीनत्वम्; किन्तु सर्वस्वतन्त्रत्वम् । अत्र मानन्तु—

"स्वातन्त्र्यपारतन्त्र्याभ्यां संभोगौ नेशजीवयोः" इति भाष्यम् । 'स्वतन्त्रो भगवान् विष्णुः' इति तत्त्वसंख्यानं च ।

परमात्मसमोऽधिको वा नास्ति; किन्त्वेक एव परमात्मा । 'एकमेवाद्वितीयम्' इति श्रुतिस्तत्र मानम् । तथा—

"न हरेरीश्वरः कश्चित्कदाचित्क्वापि विद्यते ।
नानामानविरुद्धं हि स्वातन्त्र्यं जगतः सदा ॥
स्वतन्त्रो भगवान् विष्णुरेक एव न संशयः ।"

इत्येकादशतात्पर्यम् । "मत्तः परतरं नान्यत् किञ्चिदस्ति धनञ्जय !"
इति गीता च ।

"यस्मिन्परेऽन्येऽप्यजजीवकोशा नाहं परायुर्न मरीचिमुख्याः ।
जानन्ति यद्गुणगणान्न रमादयोऽपि नित्यः स्वतन्त्र उत कोऽस्ति तदन्य ईशः ।।

इति भागवतं च ।

निरंशजीववदेकरूपो न; किन्तु बहुरूपः । अत्र प्रमाणन्तु—"वासुदेवः संकर्षणः प्रद्युम्नोऽनिरुद्धोऽहं मत्स्यः कूर्मो वराहो नरसिंहो वामनो रामो रामः कृष्णो बुद्धः कल्किरहं शतधा सहस्रधाऽहमभितोऽहमनन्तोऽहं नैवैते जायन्ते न म्रियन्ते नैषामनुज्ञा न बन्धो न मुक्तिः सर्व एते पूर्णा अजरा अमृताः परमाः परानन्दाः ।" इति भाष्योदाहृतश्रुतिरेव ।

गीताऽपि—'वेत्तासि वेद्यं च परं च धाम त्वया ततं विश्वमनन्तरूप !'

इन्द्रार्जुनादिवद् भगवद्रूपाणां न विशेषः, किन्तु साम्यमेव । तदुक्तं बृहद्भाष्ये—

"विष्णोः सर्वगुणैः पूर्तिरपि मत्स्यादिरूपिणः ।
अजेयत्वमभेद्यत्वमच्छेद्यत्वं च सर्वशः ।।
सर्वावताररूपाणामपि चित्सुखरूपता ।
अवतारा हि विष्णोश्च सर्वे पूर्णाः प्रकीर्त्तिता ।।
पूर्णं च तत्परं रूपं पूर्णात्पूर्णाः समुद्गताः ।
न देशकालसामर्थ्यैः पारावर्यं कथञ्चन ।।" इति ।

एवं प्रथमस्कन्धतात्पर्ये, काठकभाष्ये, अनुव्याख्यानेऽप्युक्तम् ।

परमात्मन आनन्त्यं च कालतो देशतो गुणतश्च । तदुक्तं तृतीय-स्कन्धतात्पर्ये—

"कालकोटिविहीनत्वं कालानन्त्यं विधुर्बुधाः ।
देशकोटिविहीनत्वं देशानन्त्यं तथैव च ।।
गुणानामप्रमेयत्वं वस्त्वानन्त्यं विदो विदुः ।
आनन्त्यं त्रिविधं नित्यं हरेर्नान्यस्य कस्यचित् ।।
तस्य सर्वस्वरूपेष्वप्यानन्त्यं तु त्रिलक्षणम् ।
तथापि देशतस्तस्य परिच्छेदोऽपि विद्यते ।।
गुणतः कालतश्चैव परिच्छेदो न कुत्रचित् ।" इति ।

परमात्मनो मत्स्यकूर्मादिस्वावतारैः करचरणाद्यवयवैर्ज्ञानानन्दादि-गुणैर्जगत्सर्जनादिक्रियाभिश्चात्यन्ताभेदः, यथा — पटादिभिः पटाद्यवयवगुण-क्रियाणामभेदः। अत्र प्रमाणन्तु—

"विष्णोरेव स्वरूपाणां तद्गुणानां तथैव च।
तस्यैव शिर-आदीनां नैव भेदोऽस्ति कश्चन॥
विष्णोः क्रियाश्च याः काश्चिदभेदस्तैरपि ध्रुवम्।"

इति बृहद्भाष्यम्।

भगवतः सर्वतः पाणिपादादिमत्त्वं चोपपादितं गीतातात्पर्ये—

"सर्वतः पाणिपादादिर्यतः पाण्यादिशक्तिमान्।
केशवादौ च सर्वत्र कृष्णकेशो हि यादवः॥
अणोरणुतरै रूपैः पाणिपादादिसंयुतैः।
सर्वत्र संस्थितत्वाद्वा सर्वतः पाणिपादवान्॥" इति।

श्रुतिसिद्धान्तसङ्ग्रहे परमात्मस्वरूपवर्णनम्—"भगवान् वासुदेवः सच्चिदानन्दरूपः गुणेभ्यो भिन्नोऽभिन्नश्च। अपर्यायतत्तच्छब्दप्रयोगप्रतीतिभ्यां भेदः, अभेदस्तु स्वाभाविकः। लोकेऽपि हि गुणगुणिनोर्नीलो घट इत्यादि-सामानाधिकरण्यप्रतीत्या गुणगुणिनोर्भेदाऽभेदावेव। केचित्तु गुणगुण्यादि-वस्तुनोर्भेदमेव वाञ्छन्ति। स च भगवान् मूलरूपेणान्तर्यामितया एक एव, तत्तदवताररूपेण तु बहुधा भवति। तथा च श्रुतिः—'एकधा बहुधा चैव दृश्यते जलचन्द्रवत्', 'सोऽकामयत बहु स्यां प्रजायेय। स तपोऽतप्यत। स तपस्तप्त्वा इदं सर्वमसृजत। तत्सृष्ट्वा तदेवानुप्राविशत्। तदनु-प्रविश्य सच्चासच्चाभवत्' इति। किञ्च, भगवान् हरिः कर्तैव सन् निमित्तकारणम्, नाद्वेतिनामिवोपादानकारणमपि। उपादानकारणन्तु प्रकृतिरेवेति सिद्धान्तः। तथा च स्मृतिः—'निमित्तमात्रमेवासौ सृज्यानां सर्गकर्मणि', 'मयाऽध्यक्षेण प्रकृतिः सूयते सचराचरम्' इति। अपि च—

"मम योनिर्महद् ब्रह्म तस्मिन् गर्भं दधाम्यहम्।
संभवः सर्वभूतानां ततो भवति भारत!॥"

अस्य व्याख्या—"महद् वस्तु प्रधानाख्यं कायमात्रस्य योनिरुपादान-कारणं मम मदधीनम्, तस्मिन्नीक्षणाख्यं गर्भं दधामि, मृदो घटादेरिव ततः सर्वभूतानां कार्याणां संभवः" इति।

गीतायां स्पष्टमेव प्रकृतेरुपादानकारणत्वं प्रतिपादितम्। ननु 'सर्वाणि ह वा इमानि भूतान्याकाशादेव जायन्ते, आकाशं प्रत्यस्तं यन्ति' इति

ब्रह्मण्येव सृष्टिलयोक्त्या तस्यैवोपादानकारणत्वमिति चेत् ? न; जालम्प्रति ऊर्णनाभेरिव तस्य निमित्तिकारणत्वस्यैव वक्तुं शक्यत्वात् । यथाहि—लूतानिर्मितानां जालानां सृष्टिर्नाशश्च तस्यामेव भवति, अथ च सा तेषां जालानां निमित्तकारणमेव । यदि ह्युपादानकारणं स्यात्तर्हि लूताया नाशे जालानामपि नाशोऽवश्यमेव भवेत्, न चैवं दृश्यते । लूताया नाशेऽपि जालानां विद्यमानत्वात् । तस्माज्जालं प्रति लूताया निमित्तकारणत्वमेव । एवमेव ब्रह्मणोऽपि कार्यजातं प्रति निमित्तकारणत्वमेवेति सिद्धम् । अपि च ब्रह्मण उपादानकारणत्वे मृदादेरिव तस्य विकारित्वमप्यापद्येतेति ।

स च भगवान् स्वतन्त्रोऽचिन्त्यशक्तिः कर्तुं चाकर्तुमन्यथाकर्तुं च शक्तोऽपि सहायमपेक्षते ।

"तत्र तस्य सहायः स्यात् सर्वशक्तिप्रदस्य हि ।
लीला ह्येव परेशस्य स्वेच्छया क्रीडतो विभोः ॥
स्वयं कर्तुं समर्थस्य यष्ट्यादानं क्वचिद्यथा ।
लीलयैव तथा विष्णोः प्रधानादेरपेक्षणम् ॥
प्रधानादिनियन्तृत्वात् सिद्ध्यतीश्वरताऽधिका ।
नापि सेनां विना राजा पिताऽपत्यं विना क्वचित् ॥
तस्य सृष्ट्यादिकर्तृत्वं लीलैव स्याच्छिशोर्यथा ।
आनन्दोद्रेकतश्चेष्टा न प्रयोजनवाञ्छया ॥
कृपया वा भवेत्तस्य प्रवृत्तिर्विश्वसर्जने ।
दातुं भोगं विमोक्षं च जीवेभ्यः करुणानिधेः ॥
पदार्थास्तस्य सर्वेहाः पूर्णकामस्य सर्वदा ।
जीवादृष्टस्य तत्रापि सहकारित्वमिष्यते ॥"

( श्रुतिसिद्धान्तसङ्ग्रहः )

अणुत्वव्यापकत्वे, एकत्वानेकत्वे, उदासीनत्वकर्तृत्वे, भोक्तृत्वाभोक्तृत्वे इत्यादयो विरुद्धा अपि धर्मास्तस्मिन् हरौ ऐश्वर्यवशात्तिष्ठन्ति । दुःखाज्ञत्वादयस्तु ऐश्वर्यविरोधिनः सदा निर्दोषरूपिणं तं कदाचिदपि न स्पृशन्ति । अविग्रहस्य कर्तृत्वादिविरोधाद्धरेः नित्यवपुष्ट्वम् । मानं चात्र 'सहस्रशीर्षा पुरुषः' इत्यादयः श्रुतयः, 'पश्य मे पार्थ रूपाणि' इत्यादयः स्मृतयश्च । एतादृशस्य सगुणस्य ब्रह्मणो ज्ञानादेव मोक्षो भवति ।

इति माध्वमते ब्रह्मस्वरूपविमर्शः ।

## निम्बार्कमते ब्रह्मस्वरूपविमर्शः

### ( द्वितीयम् )

द्वैताद्वैतप्रतिपादके निम्बार्कमते च सार्वज्ञ्याद्यनन्तकल्याणगुणाब्धिरनन्तशक्तिर्जगतो जन्माद्यभिन्ननिमित्तोपादानकारणं चेतनाचेतनवस्तुस्वाभाविक-भेदाभेद-संबन्धाश्रयः परब्रह्म-परमात्मपुरुषोत्तमादिशब्दाभिधेयः श्रीकृष्ण एव सर्ववेदान्तप्रतिपाद्यः। 'यः सर्वज्ञः सर्ववित्', 'सर्वस्य शरणं सुहृत्', 'एष एवाचिन्त्यः परः परमो हरिरादिरनादिरनन्तोऽनन्तशीर्षोऽनन्ताक्षोऽनन्तबाहुरनन्तगुणोऽनन्तरूपः' 'परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च' 'सर्वाल्लोकानीशत ईशनीभिः' 'यतो वा इमानि भूतानि जायन्ते, येन जातानि जीवन्ति, यत्प्रयन्त्यभिसंविशन्ति' इत्याद्याः श्रुतयः, 'विवक्षितगुणोपपत्तेश्च' 'सर्वधर्मोपपत्तेश्च' 'सर्वोपेता च' 'जन्माद्यस्य यतः' 'प्रकृतिश्च प्रतिज्ञादृष्टान्तानुरोधात्' इत्यादिसूत्राणि,

'तेजोबलैश्वर्यमहावबोधस्ववीर्यशक्त्यादिगुणैकराशिः।'

'कर्मक्लेशविपाकाद्यैरस्पृष्टस्याखिलेशितुः।
ज्ञानादिषाड्गुण्यनिधेरचिन्त्यविभवस्य ताः॥'

'अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते।'

इत्यादिस्मृतयश्चात्र मानम्। तथा 'भोक्ता भोग्यं प्रेरितारं च मत्वा सर्वं प्रोक्तं त्रिविधं ब्रह्म चैतत्' 'प्रधानक्षेत्रज्ञपतिर्गुणेशः' 'अथातो ब्रह्मजिज्ञासा' इत्यादि शास्त्राद् भोक्तृभोग्यनियन्तृरूप-जिज्ञासुजिज्ञासाजिज्ञास्यरूप-चिदचिदीश्वरात्मकतत्त्वत्रयसिद्धिः। एवं च 'सत्यं ज्ञानमनन्तं ब्रह्म' 'बृंहति बृंहयति तस्मादुच्यते परं ब्रह्म।'

'एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा।
कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्च॥'

'सूक्ष्माच्च यत्सूक्ष्मतरं विभाति यस्मान्नाणीयो न ज्यायोऽस्ति कश्चित्।'

'अणोरणीयान् महतो महीयान्', 'तस्मात्कृष्ण एव परो देवस्तं ध्यायेत्'। 'यथा सैन्धवघनोऽनन्तरोऽबाह्यः कृत्स्नो रसघन एवं वा अरेऽयमात्माऽनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एव' 'सदेव सौम्येदमग्र आसीदेकमेवाद्वितीयम्।' 'आत्मा वा इदमेक एवाग्र आसीत्'। 'एको ह वै नारायण आसीत्', 'तत्त्वमसि', 'अयमात्मा ब्रह्म', 'सर्वं खल्विदं ब्रह्म', 'त्वं वा अहमस्मि भगवो देवते', 'अहं वै त्वमसि देवते', 'तदात्मानमेव वेदाहं

ब्रह्मास्मि' इत्यादिशास्त्रेण चिदचितोर्ब्रह्मतादात्म्यमुपदिश्यते। 'अणु ह्येष आत्माऽयं वा एते सिनीतः पुण्यं पापं च' इत्यादिश्रुत्या, 'द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च। क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ॥'' इत्यादिस्मृत्या, 'अजामेकां लोहितशुक्लकृष्णाम्' इत्यादिश्रुत्या च चिदचिदीश्वराणां त्रयाणां स्वरूपस्वभाववैलक्षण्यसिद्धिः। एवं चोभयविधवाक्यानां परस्परं बाध्यबाधकभावो वक्तुं नैव शक्यः, तुल्यबलत्वात्। तस्मात्सर्वेषां वाक्यानां स्वार्थे प्रामाण्यसिद्धयर्थं स्वाभाविकभिन्नाभिन्नं ब्रह्मेति सूत्रकृद्भिर्निर्णीतम्। तेनाभिप्रायेणैव सूत्राणि प्रणीतानि—'अंशो नानाव्यपदेशात्' 'अन्यथा चापि दाशकितवादित्वमधीयत एके', 'उभयव्यपदेशात्त्वहिकुण्डलवत्', 'प्रकाशाश्रयवद्वा तेजस्त्वात्' इत्यादीनि। तस्मात् स्वाभाविकभेदाभेद एव सूत्रकारसंमतः। अत्यन्तभेदोऽत्यन्ताभेदश्च भ्रान्तिरिति निश्चीयते। तथाहि—

केवलद्वैतवादिभिस्तादृशभेदसिद्धयर्थं नैयायिकवद् ब्रह्मणो जगदुपादानत्वं नाङ्गीक्रियते, किन्तु निमित्तत्वमात्रमेव। तथा सति तन्मते 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्' 'तदैक्षत बहु स्यां प्रजायेय' इत्यादिश्रुतीनां 'प्रकृतिश्च प्रतिज्ञादृष्टान्तानुरोधात्' 'आत्मकृते परिणामात्' इत्यादिसूत्राणां 'अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते' 'मयि सर्वमिदं प्रोतं प्रोतं सूत्रे मणिगणा इव' इत्यादिस्मृतीनां च सर्वोपादानत्वसर्वात्मत्वप्रतिपादिकानां बाध एव जायेत।

किञ्च ब्रह्मणो निमित्तत्वमात्राङ्गीकारे श्रुत्युक्तयोः प्रतिज्ञादृष्टान्तयोरपि बाधो निश्चितो भवति। प्रतिज्ञादृष्टान्तौ यथा—'येनाश्रुतं श्रुतं भवति अमतं मतमविज्ञातं विज्ञातम्' इति प्रतिज्ञा। 'यथा सौम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्यात्। यथैकेन लोहमणिना सर्वं लोहमयं विज्ञातं स्यात्' इति दृष्टान्तः। नहि निमित्तमात्रज्ञानेन कार्यजातं विज्ञातं भवतीति शक्यते वक्तुम्। कुलालादिज्ञानेन मृदादिविकारजातवत् सर्वानुभवविरोधात्। उपादानत्वे तु उपादानोपादेययोस्तादात्म्याद् युक्तं तज्ज्ञानेन तज्ज्ञानमिति। ब्रह्मण उपादानत्वाङ्गीकारे च मृद्घटवत् सुवर्णकुण्डलादिवच्च जगद्ब्रह्मणोरभेदोऽप्यवर्जनीयः। न च तथात्वे विकारित्वापत्तिरिति वाच्यम्; शक्तिविक्षेपलक्षणपरिणामाङ्गीकारात्। स्वरूपे परिणामाऽनभ्युपगमाच्च। 'यथोर्णनाभिः सृजते गृह्णते च यथा सतः पुरुषात्केशलोमानि। तथा पृथिव्या ओषधयः संभवन्ति तथाऽक्षरात् संभवतीह विश्वम्' इति श्रुतेः। 'प्रसार्य च यथाऽङ्गानि कूर्मः संहरते पुनः। तद्वद् भूतानि भूतात्मा सृष्ट्वा निग्रसते पुनः ॥'

इति भीष्मवाक्याच्च । अपि चात्यन्तभिन्नयोरभेदाऽसंभवाच्चिदचितोर्ब्रह्म-तादात्म्यप्रतिपादकमुक्तशास्त्रं विरोधादेव परित्यक्तं स्यात् । किञ्च 'सर्वं तं परादाद् योऽन्यत्रात्मनः सर्वं वेद' इत्यादिना ब्रह्मणोऽन्यपदार्थस्यात्यन्त-भिन्नत्वेन ज्ञातुर्निन्दाश्रवणात् । अतः केवलद्वैतवादिमतमसङ्गतमिति निश्चीयते ।

तथैव केवलाद्वैतवादिमतमसङ्गतम् । तथाहि 'सजातीयविजातीय-स्वगतभेदशून्यं सर्वधर्मविनिर्मुक्तं शुद्धं मुक्तं स्वरूपं चिन्मात्रं वस्तु परमार्थम्; नान्यत्' इति तेषां मतम्, तदनुपपन्नम्; तत्र प्रमाणाभावात् । तथाहि—तत्र न तावत् प्रत्यक्षम्; अतीन्द्रियत्वात् तस्य । नाप्यनुमानम्; लिङ्गशून्य-त्वात् । नापि शब्दः; वागगोचरताश्रवणात् । उपमानादिकन्तु तत्रासंभवदु-क्तिकमेव । किञ्च तस्य प्रमाणविषयत्वे मिथ्यात्वप्रसङ्गो द्वैतापत्तिश्च । तथा च प्रयोगः—ब्रह्म मिथ्या, प्रमाणविषयत्वात् तव मते प्रपञ्चवत् । सर्वप्रमाणा-गोचरताङ्गीकारे च शशशृङ्गतुल्यत्वापत्तिः । निर्विशेषं ब्रह्म अवस्तु; सर्वप्रमाण-शून्यत्वात्, शशशृङ्गाद्यवस्तुजातवत्—इत्याद्यनुमानात् । स्वयंप्रकाशत्वेन प्रमाणान्तराऽनपेक्षत्वे च शास्त्रवैयर्थ्यप्रसङ्गात् । तथाहि निर्विशेषाद्वितीयस्य दोषस्पर्शाभावाद् बन्धाभावस्तदभावान्मोक्षाभावस्तदभावे मोक्षतत्साधन-प्रतिपादकशास्त्रस्य सुतरां वैयर्थ्यम् । किञ्च तत्र धर्ममात्रानङ्गीकारे तदितर-वस्तुमात्रानङ्गीकारे च 'तदैक्षत बहु स्यां प्रजायेय' 'नामरूपे व्याकरवाणि' 'यतो वा इमानि भूतानि जायन्ते' 'द्वा सुपर्णा सयुजा सखाया' 'अक्षरात्परः' 'प्रधानक्षेत्रज्ञपतिर्गुणेशः', 'अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम्', 'दैवी ह्येषा गुणमयी मम माया दुरत्यया' इत्यादिश्रुतिस्मृतिवाक्यानां 'जन्माद्यस्य यतः' 'विवक्षितगुणोपपत्तेश्च' 'सर्वोपेता च' 'शास्त्रयोनित्वात्' इत्यादि-सूत्राणां च ब्रह्मभिन्नत्वेन क्षेत्रक्षेत्रज्ञ-प्रधानपुरुष-प्रकृतिपुरुष-जीवमायादि-शब्दाभिधेययोर्वस्तुनोरजत्व–मायावश्यत्व–तन्मुक्तत्वेश्वरसखित्व-कर्मफल–भोक्तृत्व-नित्यत्व-नानात्वशक्तिरूपांशत्व–कर्मबन्धार्हत्व-तन्मोक्षार्हत्वानाद्य-नन्तत्व–गुणत्रयाश्रयत्व–जडत्व–परिणामित्व–दुरत्ययत्वादि–प्रतिपादकानां बाधाच्छास्त्रबहिर्भूतत्वप्रसङ्गो दुर्वारः । व्यवहारकाले ब्रह्मणि ह्यविद्यया जग-दध्यस्तमिति स्वीकारेण न द्वैतप्रतिपादकपूर्वोक्तवाक्यविरोध इति तु न संभवति, निर्विशेषाद्वितीयचेतनमात्रस्य वस्तुनोऽधिष्ठानत्वासम्भवात् । सामान्यविशेषधर्मवत्त्वस्याधिष्ठानत्वप्रयोजकत्वात् । सामान्येन ज्ञातं विशे-षेणाज्ञातमेवाधिष्ठानं लोके प्रसिद्धम् । यथेदं रजतमित्यत्रेदन्तासामान्यधर्मो

रजतस्य साधकः शुक्तौ वर्तते। शुक्तित्वं च विशेषधर्मस्तस्य बाधकः सर्वानुभवप्रसिद्धः। न तथा निर्धर्मके चिन्मात्रे उभयधर्मवत्त्वं वक्तुं शक्यम्; सिद्धान्तभङ्गात्।

किञ्चाविद्यायाः सत्त्वमसत्त्वं वा ? नाद्यः, भवतामनङ्गीकरात्; न द्वितीयः, असत आवरकत्वासम्भवात्। अधिष्ठानावरणाभावेऽध्यासाभावः। नहि शुक्तिस्वरूपे भासमाने रजतारोपो भवति, स्वप्रकाशे आवरणासम्भवाच्च। आत्मैकत्वविज्ञानेन आत्मन्यध्यस्तसर्वप्रपञ्चबाधो भवतीत्यपि अद्वैतिनां मतं न सम्यक्। अद्वैततत्त्वसाक्षात्कारवतामाचार्याणामपि यथापूर्वं स्वमतपरमतोद्देशपूर्वकदूषणभूषणोपपादनात्मकशास्त्रप्रणयनरूपभेदव्यवहारदर्शनात्, जीवन्मुक्तौ मानाभावाच्च। तथा च विश्वात्मा पुरुषोत्तमः स्वाश्रितात्मसत्तया विश्वस्मादभिन्नः, तथैवात्मीयचेतनाचेतननियम्यवर्गवृत्तिपरतन्त्रसत्त्वाभावरूपेण विश्वविलक्षणत्वापरपर्यायेण सार्वज्ञ्यादिवद् भावरूपेणात्मा साधारणेन धर्मेणास्थूलादिवाक्यप्रतिपाद्येन विश्वस्माद् भिन्न इति स्वभावतो विश्वभिन्नाभिन्नः श्रीपुरुषोत्तमः परब्रह्मभूतो भगवान् रमाकान्तः सर्ववेदान्तार्थ इति सिद्धान्तः।

भेदाभेदसाधकानि श्रुतिवाक्यानि—"एकः सन् बहुधा विचचार एको देवो बहुधा संन्निविष्टः', 'त्वमेकोऽसि बहुधा बहून् प्रविष्टः' इत्यादीनि। 'एकत्वे सति नानात्वं नानात्वे सति चैकता। अचिन्त्यं ब्रह्मणो रूपं कस्तद् वेदितुमर्हति ॥' इति भगवान् मनुः। 'ज्ञानयज्ञेन चाप्यन्ये यजन्तो मामुपासते। एकत्वेन पृथक्त्वेन बहुधा विश्वतो मुखम् ॥' इति भगवद्वाक्यम्। नानात्वनिषेधकवाक्यानि तु कारणगतनानात्वनिषेधपराणि। विशिष्टाद्वैतवादिमते सूक्ष्मचिदचिद्विशिष्टयोर्ब्रह्मणोरेवाद्वैतमभ्युपगम्यते; न तु विशेषणविशेष्ययोरपि। तथा चोक्तं तैरेव—'विशेषणस्य विशिष्टवस्त्वेकदेशत्वेनाभेदव्यवहारो मुख्यः'। विशेषणविशेष्ययोः स्वरूपस्वभावभेदेन भेदव्यवहारो मुख्यः इति। अणुगीतासु—

'तथैवैकत्वनानात्वमित्येव विदुषां नयः।
मशकस्यौदुम्बरे चैक्यं पृथक्त्वमपि दृश्यते।
मत्स्यो यथाऽन्यः स्यादप्सु संयोगस्तु तथा तयोः ॥"

इत्युदुम्बरफलजलाश्रययोर्मशकमत्स्ययोरिव यथा स्वाश्रयापेक्षया भेदाभेदव्यपदेशावुभावपि न्याय्यौ, तथा सत्त्वपुरुषयोरपीत्युपसंहृतम्। अनेन

मोक्षशास्त्रे चिदचिदीश्वराणां भेदव्यपदेशस्तेषां स्वरूपवैलक्षण्यान्मुख्यः। अभेदव्यपदेशोऽपि आश्रयाश्रयिभावेन मुख्य एवेत्युक्तं भवति। एवञ्च केवलभेदकेवलाभेदयोः शास्त्रविरुद्धत्वेन निरस्तत्वाच्चिदचितोर्ब्रह्मणा सह स्वाभाविकभेदाभेदस्यैवाङ्गीकारो निश्चितो भवति।

इति निम्बार्कमते ब्रह्मस्वरूपविमर्शः।

## रामानुजमते ब्रह्मस्वरूपविमर्शः

(तृतीयम्)

विशिष्टाद्वैतिनां मते तु सर्वेश्वरत्वं सर्वशेषित्वं सर्वकर्माराध्यत्वं सर्वफलप्रदत्वं सर्वाधारत्वं सर्वकार्योत्पादकत्वं स्वज्ञानस्वेतरसमस्तद्रव्यशरीरत्वमित्यादीनि ईश्वरलक्षणानि। (स्वज्ञानात् स्वस्माच्चेतरद् यत् समस्तं द्रव्यं तच्छरीरकत्वमित्यर्थः)। आदिपदग्राह्यं व्यापकत्वे सति चेतनत्वं सत्यसंकल्पत्वञ्च। अयमीश्वरः सूक्ष्मचिदचिद्विशिष्टस्वरूपेण जगदुपादानकारणं भवति। संकल्पविशिष्टस्वरूपेण निमित्तकारणं भवति। कालाद्यन्तर्यामिस्वरूपेण सहकारिकारणञ्च भवति। इत्थं जगतस्त्रिविधमपि कारणमीश्वर एव। तत्र कार्यरूपेण परिणामयोग्यं वस्तु उपादानकारणम्, यथा—घटं प्रति मृत्तिका। उपादानवस्तुनः कार्यरूपेण यः परिणामं करोति स कर्तैव निमित्तकारणमुच्यते, यथा—कुलालः। कार्योत्पत्त्युपकरणं वस्तु सहकारिकारणम्, यथा—दण्डचक्रादयः। तथा च सूक्ष्मचिदचिद्विशिष्ट ईश्वर उपादानम्। 'बहु स्याम्' इति संकल्पविशिष्टो निमित्तम्। ज्ञानशक्त्यादिविशिष्टः सहकारिकारणम्—इति फलितम्।

चिदचिद्रूपविशेषणविशिष्टस्येश्वरस्य जगद्रूपेण परिणामेऽपि विशेष्यस्य स्वरूपस्य विकाराभावात् 'अविकाराय शुद्धाय' (वि० पु० १।२।१) इति वचनाद् निर्विकारत्वं न विरुध्यते। परिणामस्तु विशेषणद्वारैव। यथोर्णनाभिः स्वरूपविकाराभावेऽपि स्वशरीरभूतविशेषणद्वारा तन्तुजालरूपकार्यं प्रत्युपादानं तद्वद् विशिष्टस्वरूपेण विकाराश्रयत्वमीश्वरस्येष्टमेव।

मनुष्यादिशरीरविशिष्टे स्वरूपतो निर्विकारे पुंसि बाल्ययुवत्वस्थविरत्वस्थूलत्वादिवद् एकस्यैवोपादानत्वं निमित्तत्वञ्च न विरोधावहम्। यथा एक एव जीवात्मा तैस्तैरुपायैः स्वसुखादीनुत्पादयति, स्वयमेव च तेषां समवायिकारणं भवति तद्वत्। तथा च जगत्कारणे श्रुत्येक्षित्वादिप्रतिपादनात् प्रकृत्या'दष्वचेतनेषु तदभावाद् महोपनिषन्नारायणोपनिषत्सुबालोपनिषन्मैत्रावरुणीयपुरुषसूक्तनारायणानुवाकान्तर्यामिब्राह्मणादिषु नारा-

यणस्यैव परमकारणत्व-सर्वशब्दवाच्यत्व-मोक्षप्रदत्व-जगच्छरीरत्वादेः प्रतिपादनादन्यत्र जगत्कारणे प्रयुक्तानां स्वयम्भूहिरण्यगर्भप्रजापतिशब्दानां नारायण एव पर्यवसानान्नारायण एवाखिलजगत्कारणं सर्ववेद्यावेद्यश्च। एवञ्चान्यत्र जगत्कारणे प्रयुक्तानां सूर्यरुद्राग्न्यादिशब्दानामपि न स्वार्थपरत्वम्, तेषां कर्मवश्यत्वादिश्रवणेन जीवत्वात्। जीवस्य चासर्वज्ञत्वादिना जगत्कारणत्वाऽसम्भवात्। ततश्च तेषामपि यथाकथञ्चिन्नारायणपरत्वमेव।

सूक्ष्मचिदचिद्विशिष्टं ब्रह्म कारणं स्थूलचिदचिद्विशिष्टं ब्रह्म कार्यमिति कारणादनन्यत्कार्यमिति विशिष्टाद्वैतवेदान्तिनां सम्प्रदायः। समस्तकल्याणगुणात्मकः प्रकृतिपुरुषाभ्यां भिन्नस्ताभ्यां विशिष्टः परब्रह्म जगत्कारणं नारायण एव।

नन्वद्वैतश्रुत्या ब्रह्मैक्यमेव सत्यं निर्गुणञ्च, तदन्यवद् ज्ञातृज्ञेयादिकं तस्मिन्नेव परिकल्पितं सर्वं मिथ्या। ब्रह्माऽविद्यया संसरति। तत्त्वमसीत्यभेदज्ञानं तन्निवर्तकम्। तस्मान्निर्विशेषचिन्मात्रे ब्रह्मणि वेदान्तानां तात्पर्यमिति मतान्तरस्थैः प्रतिपादनात् कथं नारायणे तात्पर्यं तस्य समस्तकल्याणगुणाकरत्वादिकथनं चेति चेद्? उच्यते—कारणत्वप्रतिपादकश्रुतिभिर्नारायणस्य कारणत्वे सिद्धे भेदाभेदश्रुत्योर्विषयभेदेनाविरोधे प्रतिपादिते निर्गुणप्रतिपादकश्रुतीनां हेयगुणनिषेधकत्वाद् ज्ञातृज्ञेयादिकल्पकाविद्याया एवाप्रामाण्याद् ब्रह्मकार्यस्य सत्यत्वादविद्यया संसारे जीवगतदोषाणां ब्रह्मण्यपि संभवात्तन्निवर्तकान्तरस्य वक्तुमशक्यत्वात्। अतोऽद्वैतवादस्यासंभवान्न निर्विशेषचिन्मात्रब्रह्मसिद्धिः। अतो नारायणस्यैव जगत्कारणत्वमोक्षप्रदत्वादिगुणयोगः संभवतीति सविशेषमेव ब्रह्म। ईश्वरस्य कार्यं प्रत्युपादानत्वनिमित्तत्ववत् कर्तृत्व-प्रेरकत्व-नियन्तृत्व-प्रशास्तृत्व-सहकारित्वोदासीनत्वादिकमप्युपपद्यते। बाल्ययौवनावस्थादयो दोषा यथा शरीरगताः, न तु शरीरिणि जीवे; एवं चिदचिच्छरीरिणः परमात्मनोऽपीति न निर्विकारश्रुतिविरोधः।

नियमेनाधेयत्वविधेयत्वशेषत्वादेः शरीरलक्षणस्य जगति विद्यमानत्वाद् जगच्छरीर ईश्वरस्तद्गतदोषैरसंस्पृष्टश्च। स चेश्वरो विभुरनन्तश्च। विभुत्वं व्यापकत्वम्। अनन्तो नाम त्रिविधपरिच्छेदरहितः। त्रिविधपरिच्छेदस्तु देशतः कालतो वस्तुतश्च। सत्यत्वज्ञानत्वानन्दत्वामलत्वादय ईश्वरस्य स्वरूपनिरूपकधर्माः। ज्ञानशक्त्यादयो निरूपितस्वरूपधर्माः। सर्वज्ञत्वसर्वशक्तिमत्त्वादयः सृष्ट्युपयुक्ता धर्माः। वात्सल्यसौशील्यसौलभ्या-

दय आश्रयणोपयुक्ता धर्माः। कारुण्यादयो रक्षणोपयुक्ता धर्माः। अयमीश्वरोऽणुसृष्ट्यनन्तरं चतुर्मुखदक्षकालादिष्वन्तर्यामितया स्थित्वा सृष्टिं करोति। विष्ण्ववताररूपेण मनुकालाद्यन्तर्यामिस्वरूपेण च स्थित्वा रक्षको भवति। रुद्रकालान्तकादीनामन्तर्यामितया संहारमपि करोति। अतः सृष्टिस्थितिसंहारकर्ता च भवति।

इति रामानुजमते ब्रह्मस्वरूपविमर्शः।

## वल्लभमते ब्रह्मस्वरूपविमर्शः

(चतुर्थम्)

शुद्धाद्वैतिनां मते च–'साकारं सर्वशक्त्येकं सर्वज्ञं सर्वकर्तृ च। सच्चिदानन्दरूपं हि ब्रह्म'। साकारम्–आनन्दाकारम्।

"विश्वतश्चक्षुरुत विश्वतो मुखो विश्वतो बाहुरुत विश्वतस्पात्।
सम्बाहुभ्यां धमति सम्पतत्रैर्द्यावाभूमी जनयन् देव एकः॥"

इति तैत्तिरीये श्वेताश्वतरे चास्ति श्रुतिः। अत्र मुखादीनां सर्वत्र विद्यमानत्वमुक्तं सर्वेन्द्रियोपलक्षणम्। तेन साकारस्यैव व्यापकत्वम्। बाहुभ्यामिति द्विवचनेन ब्रह्मणो द्विभुजत्वं श्रुतिसिद्धम्। चतुर्भुजत्वन्तु स्मृतिप्रसिद्धम्। देव इत्यनेन लीलास्थपुरुषोत्तमस्यात्र ग्रहणम्, दिव्–धातोः क्रीडार्थकत्वात्। छान्दोग्ये 'सर्वकामः सर्वगन्धः सर्वरसः' इत्युक्तम्। 'रसो वै सः' इति तैत्तिरीये। 'सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्' इति पुरुषसूक्तेऽपि साकारम्। अग्रे 'ततो विराडजायत' इति कथनान्नायं विराट् पुरुषः। 'सर्वतः पाणिपादं तत्सर्वतोऽक्षिशिरोमुखम्' इत्यादि गीतायाम्, 'आनन्दमात्रकरपादमुखोदरादिः' इति नारदपञ्चरात्रे, 'अथवा परमात्मानं परमानन्दविग्रहम्' इति याज्ञवल्क्यस्मृतौ।

ननु 'अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः' 'अस्थूलमनणु' इत्यादिश्रुतिषु निषेधात्कथं साकारत्वमिति चेत्? न; अपाणिपादत्वमुक्त्वा यज्जवनगृहीतृत्वमुक्तं तद् लौकिकपाणिपादादिनिषेधपरम्। 'अनणु' इत्यादिवाक्येऽप्यग्रे 'एतस्य प्रशासने गार्गि द्यावाभूमी विधृते तिष्ठतः' इत्युक्तम्, 'यथा सैन्धवो बाह्यो अन्तरः कृत्स्नो रसघन एवं वा अरेऽयमात्मा कृत्स्नः प्रज्ञानघन एव' इति श्रुतौ घनपदेन साकारत्वलाभात्। अर्थस्तु यथा सैन्धवः सर्वः परिदृश्यमानो रसघनः, एवं ब्रह्मापि यावत् तावत् सर्वं प्रज्ञानघन एवेति। 'पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभा-

विकी ज्ञानबलक्रिया च' इति श्रुतेः। 'यः सर्वज्ञः सर्ववित्' 'सर्वकर्ता सर्वभोक्ता च' 'सत्यं ज्ञानमानन्दं ब्रह्म' इत्यादिश्रुतेरानन्दमात्रमेव। एवञ्च करादिरपि ब्रह्मैव। इदं परिदृश्यमानं सच्चिदानन्दरूपब्रह्मणः सकाशाज्जगदुत्पत्तौ जडजीवान्तर्यामिणां सदादिभ्य उद्गम इत्याहुः।

"द्विधा ज्ञानं तु यद्यत्स्यात् नामरूपात्मना मुहुः।
ईशजीवात्मना वाऽपि कार्यकारणतोऽथवा॥
द्वीतं तदेव द्वैतं स्याद‌द्वैतं तु ततोऽन्यथा।"

'सर्वं खल्विदं ब्रह्म' 'तज्जलानिति शान्त उपासीत' इति पठ्यते। द्वीतं द्विःप्रकारं ज्ञानम्। 'नामरूपे व्याकरवाणि' इति श्रुत्वा नामरूपव्यवहारस्य भगवत्कृतत्वेन भगवद्रूपत्वात्। नामरूपयोर्मायिकत्वं तु न, तदात्मकस्य जगतो ब्रह्मकार्यत्वात्, कार्यकारणयोरभेदात्। नामरूपभेदज्ञानमेवाऽऽविद्यकम्, न तु नामरूपे। एवमीशजीवभेदज्ञानं तथा कार्यकारणभेदज्ञानम्। इदं सर्वं विश्वं खलु उत्पत्तिस्थितिलयावस्थासु तस्मिन्, अतः सर्वं ब्रह्मेत्युपासीतेत्यर्थः।

"सर्वं ब्रह्मात्मकं विश्वमिदमाबोध्यते पुरः।
सर्वशब्देन यावद्धि दृष्टश्रुतमिदं जगत्॥
बोध्यते तेन सर्वं हि ब्रह्मरूपं सनातनम्।
कार्यस्य ब्रह्मरूपस्य ब्रह्मैव स्यात्तु कारणम्॥"

सनातनम्—सदा वर्तमानम्, नित्यमिति यावत्। 'सन्मूलाः सौम्येमाः प्रजाः सदायतनाः सत्प्रतिष्ठानाः' 'कथमसतः सज्जायेत' 'तत्सत्यं यदिदं किञ्च' 'तत्सत्यमित्याचक्षते' इत्यादिश्रुतेः। असत्यत्वेन ज्ञानं त्वासुराणामेव। तथा च गीतायाम्—'असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम्' इति। जगतो नित्यत्वे सत्यत्वे च द्वैतापत्तिस्तु न, मृद्घटयोरिव कार्यकारणयोरैक्यात्। 'जन्माद्यस्य यतः' इति सूत्रेण ब्रह्मणो जगदुपादानत्वं प्रतिपादितम्, तदेव ब्रह्मणो लक्षणम्। 'शास्त्रयोनित्वात्' इति तत्रैव हेतुर्न तु सूत्रान्तरम्। ब्रह्मणो जगत्समवायिकारणत्वे हेतुः—'तत्तु समन्वयात्' इति। अस्यार्थः—तत् समवायिकारणं ब्रह्म, कुतः समन्वयात् सम्यगनुवृत्तत्वात् =अनागन्तुकानारोपितरूपेणान्वयात्, घटे मृद इवास्ति भाति प्रियाणां जगत्यनुवृत्तत्वादित्यर्थः। उपादानञ्च स्वसमानसत्ताककार्याकारेण यदाविर्भवति तदेव। तथा च ब्रह्मणो जगदुपादानत्वाज्जगत् सत्यमेव।

तिरोधानं हरीच्छातो निबन्धादिषु वर्णितम्।
आविर्भावे तु सर्वं हि ब्रह्मैवेति न संशयः॥

ननु जीवादिभावे किं प्रयोजनम् ?

रमणार्थमिदं सर्वं ब्रह्मैव स्वेच्छयाऽभवत् ।
यथा सर्पः स्वेच्छया हि कुण्डलाकारतां गतः ॥
न विकारि तथा ब्रह्म व्यासैः सूत्रे निरूपितम् ।
सुवर्णस्याविकारित्वं कामधेनोर्मणेरपि ॥

'उभयव्यपदेशात्त्वहिकुण्डलवद्' इति व्याससूत्रम् । उभयोर्विरुद्ध-धर्मयोर्व्यपदेशस्तस्मान्निर्गुणत्वेनानन्तगुणत्वेन परिणामित्वेनाविकारित्वेन विरुद्धधर्मरूपेण व्यपदेशाच्छ्रुतौ कथनात्सर्वाकारं ब्रह्मेत्यर्थः ।

तिरोभावे तु कार्यं हि वर्तते कारणात्मना ।
आविर्भावे तु कार्यं हि यथा मृदि घटादयः ॥
शुद्धाद्वैतपदे ज्ञेयः समासः कर्मधारयः ।
अद्वैतं शुद्धयोः प्राहुः षष्ठीतत्पुरुषं बुधाः ॥
मायासम्बन्धरहितं शुद्धमित्युच्यते बुधैः ।
कार्यकारणरूपं हि शुद्धं ब्रह्म न मायिकम् ॥

शुद्धाद्वैतपदे शुद्धपदं मायावादिमतनिरासायेति भावः ।

शुद्धाद्वैतविदां या हि प्रतीतिः सोत्तमा मता ।
भेदाभेदप्रतीतिस्तु मध्यमानां प्रकीर्तिता ॥

सर्वत्र भगवत्स्फूर्त्या विषयान्तरानुसन्धानानुदयादिति भावः । कार्य-रूपेण भेदः, कारणात्मनाऽभेद इति प्रतीतिरित्यर्थः ।

अतो हि मध्यमः पक्षः शुद्धद्वैतानुरोधतः ।
बोधाय बहुसंदर्भे गोस्वामिपुरुषोत्तमैः ॥

कार्यत्वेन कारणत्वेन भेदेऽपि ब्रह्मत्वं न व्यभिचरतीति शुद्धद्वैतानु-रोधः, तस्मादित्यर्थः ।

श्रीमदाचार्यचरणैर्यत्र कुत्रापि दर्शितः ।
निम्बार्कभास्कराचार्यौ भेदाभेदनिरूपकौ ॥

निम्बार्काणां भेदाभेदो वास्तवः ।

तत्राद्यानां वास्तवः स भास्कराणामुपाधितः ।
तत्राद्ये वास्तवो भेदो मध्वाचार्यवदेव हि ॥
तृतीये भगवान् भिन्नो जगतः कर्तृतः स्फुटः ।
इति द्वैतप्रतीतिस्तु श्रुतिबाधान्न गृह्यते ॥

कनिष्ठेऽधिकारिणि यथा घटोत्पादकः कुलालो घटतो भिन्नः, तथा भगवान् जगतो भिन्न इत्यर्थः। सर्वं खल्विदं ब्रह्मेत्यादिश्रुतिबाधात्।

विभिन्नांशाः सदा जीवा न स्वांशा इति निश्चयः।
अभेदश्चित्त्वसाधर्म्यादेवं तेषां मतस्थितिः॥

मध्वाचार्याणां मते अंशा द्विविधाः—करचरणादिवत् स्वांशाः, पुत्रादिवद्विभिन्नांशाः। तत्र स्वांशा मत्स्यादयः, विभिन्नांशा जीवाः।

अंशत्वं नाम राश्येकदेशत्वम्। माध्वानुयायिवनमालिदासस्तु 'तद्भिन्नत्वे सति तत्सदृशत्वमंशत्वम्। यथा चन्द्रमण्डलाच्छतांशो गुरुमण्डलः, तथा—'अंशो नानाव्यपदेशाद्' इत्यादिष्वित्याह। तेन जीवेषु न कदापि ब्रह्मत्वमिति। तद्वन्निम्बार्काचार्याणां कथं भेदाभेदस्तत्राहुः—अभेद इति। यथा मुखं चन्द्र इत्यत्राह्लादकत्वादिधर्मसाधर्म्यान्मुखे चन्द्रारोपान्मुखं चन्द्र इति व्यवहारस्तथा चित्त्वसाधर्म्याज्जीवो ब्रह्मेति व्यवहारः। तेषां निम्बार्काणाम्।

कनिष्ठा सा प्रतीतिस्तु नास्मन्मतमपेक्षते।
अभेदो वास्तवस्त्वंशा जीवा इति निजे मते॥

शुद्धाद्वैतमते भेदाभेदं निरूपयति। तदुक्तम्—

भेदः कार्यतया जातः क्रीडार्थन्तु हरीच्छया।
पश्चाल्लये कारणे हि स्थितिर्दृष्टा यथा मृदि॥

'एकाकी न रमते स द्वितीयमैच्छत्' 'एकोऽहं बहु स्याम्' इत्यादिश्रुतेः।

पूर्वावस्था तु मृद्रूपा घटावस्था ततोऽभवत्।
घटोऽपि मृत्तिकारूपो लये पश्चाच्च मृत्तिका॥

'वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्' इति। श्रुत्यर्थस्तु यो विकारः पृथुबुध्नोदरादिः, स वाचारम्भणं वाचिकक्रियात्मकः, न तु कारणाद् व्यक्तिभेदापादकः। यथा सुप्ते उत्थिते उपविष्टे च पुरुषेऽवयवविन्यासभेदो न तु पुरुषभेदः। अतो नामधेयं कारणस्यैव नामधेयम्, कारणमेव हि तत्तदर्थक्रियानिष्पत्त्यर्थं घटशरावादिनाम्ना व्यवह्रियते—इति कारणादभिन्नं कार्यम्। तदाह 'मृत्तिकेत्येव सत्यम्' न तु मिथ्या। अन्यथा कार्याभावेन ब्रह्म कस्य कारणं भवेत्। कारणाभावे कारणप्रतिपादिका 'यतो वा' इत्यादिश्रुतयो बाध्येरन्।

कार्यकारणयोरैक्यं स्वमते न परे मते।
नैम्बार्के नेदृशो मार्ग इति बोद्धव्यमञ्जसा॥

परे मतेऽद्वैतिमते सत्यमिथ्यावस्तुनोरैक्यानुपपत्तेः ।

आत्मसृष्टेर्न वैषम्यं नैर्घृण्यञ्चापि विद्यते ।
श्रीमदाचार्यचरणैर्निबन्ध इदमीरितम् ॥

श्रीमत्प्रभुवर्यैर्विद्वन्मण्डनेऽपि निरूपितम्—

रमणार्थमिदं विश्वमुच्चनीचादिभावतः ।
आत्मरूपं चकारातो हरिर्यस्मान्न दूषणम् ॥

ब्रह्मशक्तेरपि ब्रह्मणोऽभेद एव ।

तत्र भेदो न चैवास्ति शक्तेर्ब्रह्मत्वनिश्चयात् ।
भिन्नत्वे तु जडत्वं स्यात्········ ॥

अस्माकं मते भेदोऽपि न घटपटवत् परमार्थः । किन्तु मृद्घटशराववद् अपरमार्थः । विशिष्टाद्वैतवादिनान्तु वास्तवो भेदः । विशिष्टञ्च विशिष्टञ्च विशिष्टे, विशिष्टयोरद्वैतं विशिष्टाद्वैतमिति समासः । सूक्ष्मचिदचिद्विशिष्टं कारणं स्थूलचिदचिद्विशिष्टं कार्यं तयोरद्वैतमित्यर्थः ।

विशिष्टाद्वैतवादिमतं खण्डयन् स्वमतमाह शुद्धाद्वैतमार्त्तण्डे—

तत्त्वत्रयं समायाति विशिष्टाद्वैतवादिनाम् ।
रामानुजानामिति चेन्न दोषोऽस्मन्मते शृणु ॥
जडजीवान्तरात्मान इति कार्ये भिदाश्रिता ।
बहु स्यान्तु प्रजायेयेत्यादिश्रुतिषु वर्णनात् ॥
न कारणे भिदा ज्ञेया तत्रैकोऽहं निरूपणात् ।
आत्मैवेदमग्र आसीदित्यादिषु च दर्शनात् ॥
तत्रैकाकी न रमते द्वितीयेच्छा निरूपिता ।
श्रुतिविद्भिरतो ज्ञेयं ब्रह्मैकं नान्यदेव हि ॥
अन्यस्य च स्थितौ तत्र द्वितीयस्य च संभवात् ।
रमणार्थं द्वितीयेच्छा श्रुत्युक्ता भग्नतामियात् ॥
एकोऽहमित्यपि मुधा तस्माच्छ्रुतिविरोधतः ।
तत्त्वत्रयं कारणे हि त्याज्यमेव विचक्षणैः ॥
सृष्टिकाले भगवतः शरीरं चिदचित्स्मृतम् ।
अन्तर्यामिण एतेन विशिष्टाद्वैतमेव यत् ॥
तदेकदेशविज्ञेयमित्युक्तं तैर्विचक्षणैः ॥

इति वल्लभमते ब्रह्मस्वरूपविमर्शः ।

## अद्वैतिमते ब्रह्मस्वरूपविमर्शः

### ( पञ्चमम् )

तत्र कौमुदीकृतः 'जगज्जन्मस्थितिलयेष्वेकैकं ब्रह्मलक्षणम्, एकैकस्य ब्रह्मलिङ्गत्वात्' इत्याहुः। तच्च तटस्थं लक्षणम्, अविद्यमानत्वे सति व्यावर्तकत्वात् शाखायाश्चन्द्रलक्षणत्ववत्। अन्ये तु जगज्जन्मादिकारणत्वं समुदितं लक्षणम्, न तु प्रत्येकम्, जन्मकारणत्वस्य स्थितिकारणत्वस्य च निमित्तकारणसाधारण्यात्। लयकारणत्वप्रदर्शनेनापादानकारणत्वलाभः, ताभ्याञ्च निमित्तकारणत्वलाभ इत्यभिन्ननिमित्तोपादानत्वं ब्रह्मणः सिद्धयति। किञ्च, चेतनत्वात्कर्तृत्वं सर्वकर्तृत्वात्सर्वज्ञत्वं सर्वोपादानत्वाद्द्वितीयत्वञ्च सिद्धम्। तत्र ब्रह्मणः सर्वोपादानत्वं सर्वविवर्तास्पदत्वम्। विवर्त्तलक्षणन्तु स्वाभिन्नन्यूनसत्ताकत्वम्। परिणामब्रह्मणःपारमार्थिकसत्त्वाद् जगतस्तु व्यावहारिकसत्त्वाल्लक्षणसमन्वयः। यद्वा कारणसजातीयोऽन्यथाभावः परिणामः। तद्विलक्षणोऽन्यभावो विवर्त इति। स्वरूपलक्षणन्तु सच्चिदानन्दादिकम्, 'सत्यं ज्ञानमानन्दं ब्रह्म' इत्यादिश्रुतेः। तत्र शुद्धस्य ब्रह्मणो जगदुपादानत्वमिति संक्षेपशारीरककृतः, जन्मादिसूत्रतद्भाष्ययोरुपादानत्वस्य ज्ञेयब्रह्मलक्षणत्वोक्तेः। 'आत्मन आकाशः संभूतः' इत्यादिश्रुतिषु मायोपहितब्रह्मवाचिनात्मादिशब्दानान्तु शुद्धे ब्रह्मणि लक्षणैवेति शुद्धस्य विवर्तोपादानत्वम्।

विवरणानुसारिणस्तु 'यः सर्वज्ञः सर्वविद् यस्य ज्ञानमयं तपः' इत्यादिश्रुत्यनुरोधेन सर्वज्ञत्वादिधर्मविशिष्टं मायोपहितमीश्वररूपमेव ब्रह्म जगदुपादानकारणमिति वदन्ति। अत एव सर्वोपादानत्वं जीवव्यावृत्तमीश्वरलिङ्गम्। जीवेश्वरानुगतचैतन्यमात्रस्य जगदुपादानत्वे तु तन्न स्यात्। ईश्वरस्य स्वरूपलक्षणमपि जगज्जन्मादिकर्तृत्वमीश्वरानुगताखण्डचैतन्यस्य तटस्थलक्षणमिति जन्मादिसूत्रभाष्ये तस्य ज्ञेयब्रह्मलक्षणत्वोक्तिरपि संगच्छते।

केचित्तु मायाऽविद्ययोर्भेदमाश्रित्य वियदादिप्रपञ्चोपादानमीश्वरः, वियदादेरीश्वराश्रितमायापरिणामत्वात्, अन्तःकरणादिरूपे लिङ्गशरीरे तु जीवेश्वरयोरुभयोरुपादानत्वम्, लिङ्गस्येश्वराश्रितमायापरिणाममहाभूतोपष्टब्धत्वात्, जीवाविद्याकृतभूतसूक्ष्मकार्यत्वाच्चेति वदन्ति। लिङ्गस्याविद्याकार्यत्वादेव विद्ययोच्छेदोऽपि तत्र तत्र दर्शितः संभवति।

लिङ्गे जीवस्यैव तादात्म्याभिमानाद् जीव एव लिङ्गोपादानमिति त्वन्ये। अपरे तु सर्वस्य व्यावहारिकजगत उपादानकारणमीश्वरः।

"एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च।
खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी॥" इति श्रुतेः।

प्रातिभासिकस्य तु सर्वस्य स्वप्नप्रपञ्चस्य चोपादानं जीवः। ब्रह्मणो जगदुपादानत्वे तस्य कार्त्स्न्येन जगदाकारेण परिणामे विकारातिरिक्त-ब्रह्मणोऽभावो वा, एकदेशेन परिणामे निरवयवत्वश्रुतिविरोधो वा प्रसज्येत—इत्यादि दूषणन्तु विवर्त्तवादाश्रयणेन परिहर्तव्यमित्याहुः।

केचित्तु स्वाविद्यायाः समस्तस्य सेश्वरस्य जगतः कल्पकत्वात् स्वप्न-द्रष्टृत्ववद् जीवस्यैवैकस्य सर्वकर्तृत्वमित्याहुः। इदन्तु मतमुपेक्ष्यम्। ईश्वरप्रतिपादकश्रुत्यादिविरोधाद् बन्धमोक्षव्यवस्थानुपपत्तेश्च।

तत्त्वनिर्णयकृतस्तु ब्रह्म माया चेत्युभयमुपादानकारणम्, 'यः सर्वज्ञः सर्ववित्' 'मायां तु प्रकृतिं विद्यात्' इत्यादिश्रुतेः। तत्र ब्रह्म विवर्तोपादानम्। माया तु परिणाम्युपादानम्।

संक्षेपशारीरककृतस्तु ब्रह्मैवोपादनकारणम्। माया तु द्वारकारणम्। कूटस्थस्य चितः स्वतः कारणानुपपत्तेः। यथा मृदः श्लक्ष्णता घटं प्रति द्वारकारणम्। अकारणमपि द्वारं कार्येऽनुगच्छति, यथा मृदः श्लक्ष्णता घटे।

कल्पतरौ तु भाष्यकारभामतीकारयोर्जगदुपादानत्वविषये मतद्वयमित्थं संगृहीतम्—

"स्वशक्त्या नटवद् ब्रह्म कारणं शङ्करोऽब्रवीत्।
जीवभ्रान्तिनिमित्तं तद् बभाषे भामतीपतिः॥
अज्ञातं नटवद् ब्रह्म कारणं शङ्करोऽब्रवीत्।
जीवाज्ञानं जगद्वीजं जगौ वाचस्पतिस्तथा॥" इति।

सिद्धान्तमुक्तावलीकृतस्तु ब्रह्म नोपादानकारणम्; 'तदेतद् ब्रह्मापूर्व-मनपरमबाह्यम्' 'न तस्य कार्यं करणञ्च विद्यते' इत्यादिश्रुतिविरोधात्। किन्तु मायैवोपादानकारणम्। ब्रह्मण्युपादानव्यवहारस्तु जगदुपादानमाया-धिष्ठानत्वेनौपचारिकः।

'अथ क ईश्वरः को जीवः' इति जिज्ञासायां प्रकटार्थकृतः—"अनादि-रनिर्वाच्या भूतप्रकृतिश्चिन्मात्रसम्बन्धिनी माया, तस्याश्चित्प्रतिबिम्ब ईश्वरः। तस्या एव परिच्छिन्नानन्तप्रदेशेष्वावरणविक्षेपशक्तिमत्सु अविद्याभिधानेषु चित्प्रतिबिम्बो जीवः" इति वदन्ति।

रजस्तमोऽनभिभूतशुद्धसत्त्वप्रधाना सत्त्वरजस्तमोगुणात्मिका माया, तदभिभूतमलिनसत्त्वाऽविद्येति मायाऽविद्याभेदं परिकल्प्य मायाप्रतिबिम्ब

ईश्वरः, अविद्याप्रतिबिम्बो जीव इति तत्त्वविवेककृतः। तत्र प्रमाणम्—'जीवेशावाभासेन करोति माया चाविद्या च स्वयमेव भवति' इति श्रुतिः।

एकैव मूलप्रकृतिर्विक्षेपशक्तिप्रधाना मायापदवाच्येश्वरोपाधिः। आवरणशक्तिप्रधानाऽविद्याऽज्ञानशब्दाभिधेया जीवोपाधिरित्यपि कश्चित्। तदुक्तं पञ्चदश्याम्—

"सत्त्वशुद्ध्यविशुद्धिभ्यां मायाविद्ये च ते मते।
मायाबिम्बो वशीकृत्य तां स्यात् सर्वज्ञ ईश्वरः॥
अविद्यावशगस्त्वन्यस्तद्वैचित्र्यादनेकधा ।" इति।

संक्षेपशारीरककृतस्तु—"मायायां चित्प्रतिबिम्ब ईश्वरः, अन्तःकरणे चित्प्रतिबिम्बो जीवः। 'कार्योपाधिरयं जीवः कारणोपाधिरीश्वरः' इति श्रुतेः। अत्र कार्यपदेन मायाकार्यमन्तःकरणं गृह्यते" इत्याहुः।

पञ्चदश्यां चित्रदीपप्रकरणे तु जीव ईशो विशुद्धा चिदिति त्रैविध्यप्रक्रियां विहाय—

"कूटस्थो ब्रह्म जीवेशावित्येवं चिच्चतुर्विधा।
घटाकाशमहाकाशौ जलाकाशाभ्रखे यथा॥
यथा चित्रपटे दृष्टमवस्थानां चतुष्टयम्।
परमात्मनि विज्ञेयं तथावस्थाचतुष्टयम्॥"

इत्यादिना अन्यैव प्रक्रियाऽऽश्रिता। सा तु विस्तरतस्तत एवावगन्तव्या। जीवब्रह्मणोरैक्यञ्च 'एकमेवाद्वितीयं ब्रह्म' इत्यादिश्रुतिसिद्धम्, तदनुकूलतर्कसिद्धञ्च। तथाहि श्रुत्या ऐक्यावधारणद्वितीयप्रतिषेधैर्ब्रह्मणः स्वगतसजातीयविजातीयभेदराहित्यं बोध्यते, अन्यथा विशेषणत्रयवैयर्थ्यात्। 'यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति' इति श्रुतिरपि द्वैतपदोत्तरमिवपदमुपन्यस्यन्ती द्वैतस्य वस्तुसत्तां नाभिप्रैति। तच्च जगतो मायामयत्वेन सत्त्वादिनाऽनिर्वाच्यत्वादुपपद्यते। जगतो मिथ्यात्वञ्च सत्त्वादिनाऽनिर्वाच्यत्वमेवाद्वैतिनामभिमतं न तु असत्त्वम्; शशशृङ्गादिवदप्रतीत्यापत्तेः। जगतो निस्तत्त्वरूपता च युक्त्याऽपि सिद्ध्यति। यतोऽवैदिकैरपि माध्यमिकैः शून्यत्वं जगतोऽभ्युपेयते। एतत्सर्वं विस्तरस्तोऽद्वैतसिद्ध्यादौ विवेचितमिति नेह प्रतन्यते। जीवब्रह्मणोरैक्ये जीवस्याणुत्वं ब्रह्मशब्दार्थविरुद्धं तद् विभुत्वप्रतिपादकश्रुतिविरुद्धमन्तर्यामिब्राह्मणविरुद्धञ्च। जीवस्याणुत्वप्रतिपादकश्रुतयश्च सूक्ष्मत्वेन दुर्ज्ञानत्वपराः। अत एव जीवस्यानन्दरूपब्रह्मरूपताप्राप्तिर्निश्शेषानर्थनिवृत्तिश्च मुक्तिरित्यपि प्राप्त-

विस्मृतकण्ठगतचामीकरादिप्राप्तिवत् परिहृतरज्जुभुजङ्गपरिहारवन्मन्तव्या। न त्वप्राप्तप्राप्तिरूपाऽपरिहृतपरिहाररूपा च मुख्या। अत एव श्रुतिरपि—

"न निरोधो न चोत्पत्तिर्न बद्धो न च साधकः।
न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थता॥"

तथा च बन्धस्य नित्यनिवृत्तस्यापि स्वात्मतत्त्वाननुभवाद् विपर्ययाच्च स्वात्मनि कल्पितस्य प्रहाणायात्मैकत्वविद्याप्तये च सर्वे वेदान्ता आरब्धाः, सर्वाणि च शास्त्राणि विधिप्रतिषेधमोक्षपराणि। आत्मैकत्वविद्याप्रतिपत्तिरेव च ब्रह्मप्राप्त्युपायः, 'तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय' इति श्रुतेः। तत्र च सर्वत्र वेदान्तेषु शास्त्रेषु च प्रतिपादिता नानाविधा उपायाः सर्वेऽपि परस्पराऽविरोधिनः, साक्षात्परम्परया प्रकारभेदेन मार्गभेदेन च स्वरूपप्राप्तिहेतुत्वात्। तदुक्तम्—'सर्वे वेदा यत्पदमामनन्ति', 'वेदैश्च सर्वैरहमेव वेद्यः', 'ऋजुकुटिलनानापथजुषां नृणामेको गम्यस्त्वमसि पयसामर्णव इव' इति। तथा चैवं साम्प्रदायिकानां परस्परं कलहो बधिरकलहवदुपेक्ष्य एव। ते सर्वेऽप्युपाया भगवद्रूपतयोपास्यत्वेन शास्त्रे उपदर्शिता स्वरुच्यनुसारेणाराधिताः स्वान्तःशुद्धिद्वारा ज्ञानजननेन भगवत्प्राप्तिसाधका एव। तथा च श्रूयते—'एकं सद् विप्रा बहुधा वदन्ति' इति। भगवदुपासनञ्च स्वस्यैव कल्याणाय जीवेन कर्तव्यं न तु नित्यतृप्ते भगवति तेन कश्चन परितोषलेशोऽपि। तदुक्तं भागवते—

नैवात्मनः प्रभुरयं निजलाभतुष्टो
मानं जनादविदुषः कृपणाद् वृणीते।
यद्यत्करोति पुरुषः पुरुषाय भूम्ने
स्वस्यैव तत् प्रतिमुखस्य यथा मुखश्रीः॥

किञ्च, निश्शेषानर्थप्रहाणाय नित्यानन्तानन्दस्वरूपात्मावाप्तये च यथाकामं यं कञ्चन शास्त्रपथं समाश्रितवताऽपि भगवद्भक्तिरशेषविघ्नवारिका जगतस्तारिका विविधदुःखदारिकाऽऽनन्दकारिका न ज्ञानगर्वाद् हातव्या, यतस्तद्धाने निरवलम्बाम्बरगमन इव विनिपातोऽवश्यम्भावी। तदुक्तं भागवते—

"ये चारविन्दाक्ष विमुक्तमानिनस्त्वय्यस्तभावादविशुद्धबुद्धयः।
आरुह्य कृच्छ्रेण परं पदं ततः पतन्त्यधोऽनादृतयुष्मदङ्घ्रयः॥" इति।

मीमांसा ब्रह्मणः सेयं वेदान्तपथगामिनी।
विभाविता विदां नूनं मनस्तोषं विधास्यति॥

# भारतीयप्राचीनशासनपद्धतिः

महसस्तमसः पारे ज्योतिः स्फुरतु मे हृदि ।
यस्य भाषा विभातीदमाचन्द्राग्न्यर्कतारकम् ॥

महतः प्रमोदस्य महतो विस्मयस्य महतो भयस्य च स्थानमिदं यदिदं भारतं वर्षं तदभिजना वयञ्चेदानीं बहुवर्षशतव्यवायेन वन्धनमुक्ता इव कीरा अपरायत्ताः संजाताः। यथा च ते शुकाः स्वामिभिः स्वस्वमनोरथानुक्रमेण यत्किञ्चिदध्यापिताः स्वभाषाऽसंस्तवात्तदेव पदे पदे जल्पन्ति, यदेव शिक्षितास्तदेव बहु मन्यन्ते, सजातीयांश्च स्वजात्युचितभाषाभाषिणो नाद्रियन्ते, कुलक्रमागतायाञ्च विहायसा गतौ अन्येष्वप्याचारेषु कुलक्रमायातेषु अपरिचितास्तत्कारिणः स्वजनान् वीक्ष्य स्वयमसमर्था मनसि विस्मिता अप्युपहसन्ति तान्, उपहस्यन्ते च तैः; तथैव वयं भारतीया अपि वर्गद्वयेनाधुना प्रविभक्ताः। तत्रेदमप्रमादेनालोचनीयमस्माभिर्यद्वयं यद्यपि प्रत्यक्षं स्वतन्त्रास्तथापि सर्वस्वातन्त्र्यमूलस्य मानसस्वातन्त्र्यस्याभावादत्यन्तमधुनापि परतन्त्राः।

अधुनाप्यस्माकं बुद्धिः स्वराष्ट्राभ्युदयार्थं पाश्चात्त्यदेशपथानेव सुदूरव्यवहितानपि त्वरयानुधावति, गृहस्थितानपि मन्वादिप्रदर्शितान् गुरुशुक्रकणिकभीष्मविदुरकौटिल्यकामन्दकाद्युपदिष्टाँश्च पुराणपथान्न जिज्ञासते, न परीक्षते सदसत्त्वाभ्याम्, न शुश्रूषते, न वा तज्ज्ञान् परिपृच्छति, परिप्रश्ने वा का हानिः, सन्तश्चेत् पुराणपथा उपादेयाः, अन्यथा हेयाः; अंशतो वोपादेया हेयाश्चेति।

महात्मनां श्रीगान्धिमहोदयानामपि स्वशास्त्रोदितपुराणपथावलम्बन एव बुद्धेर्भरवश आसीत्, यतस्तैः सत्याहिंसाख्ये वर्त्मनी एवाश्रित्येयं भारतभूरुद्धृता। अपरञ्च स्वराष्ट्रकल्याणार्थं यत्तैः शस्त्रं सूत्रकर्तनचक्रं स्वीकृतं तदपि पुराणमेव। तथाहि कौटिल्यप्रणीतेऽर्थशास्त्रे सूत्राध्यक्षप्रकरणे त्रयोविंशेऽध्याये—

"विधवान्यङ्गी-कन्या-प्रव्रजिता-दण्डाप्रतिकारिणीभी रूपाजीवामातृकाभिर्वृद्धराजदासीभिर्व्युपरतोपस्थानदेवदासीभिश्च कर्तयेत्। श्लक्ष्णस्थूल-

मध्यताञ्च सूत्रस्य विदित्वा वेतनं कल्पयेत् । बह्वल्पताञ्च सूत्रप्रमाणं ज्ञात्वा तैलामलकोद्वर्तनैरेता अनुगृह्णीयात् । तिथिषु प्रतिपादनमानैश्च कर्म कारयितव्याः । सूत्रह्रासे वेतनह्रासो द्रव्यसारात् । याश्चानिष्कासिन्यः प्रोषितविधवान्यङ्गाः कन्यका वाऽऽत्मानं बिभृयुस्ताः स्वदासीभिरनुसार्य सोपग्रहं कर्म कारयितव्याः । स्वयमागच्छन्तीनां वा सूत्रशालां प्रत्युषसि भाण्डवेतनविनिमयं कारयेत् । सूत्रपरीक्षार्थमात्रः प्रदीपः । स्त्रिया मुखसंदर्शनेऽन्यकार्यसम्भाषायां वा पूर्वः साहसदण्डः । वेतनकालातिपातने मध्यमः । अकृतकर्मवेतनप्रदाने च । गृहीत्वा वेतनं कर्म अकुर्वन्त्या अङ्गुष्ठसंदंशनं दापयेत् । भक्षितापहृतावस्कन्दितानाञ्चेति'' ।

ततश्च महात्मानुगृहीतपुराणराजनीतिवर्त्मनां परीक्ष्य समाश्रयणमेवाधुना युक्तम् ।

श्रेयान् स्वधर्मो विगुणः परधर्मात् स्वनुष्ठितात् ।
स्वधर्मे निधनं श्रेयः परधर्मो भयावहः ॥

(गीता ३ अ० ३५ श्लो० )

इदानीन्तनी पाश्चात्यानुगृहीतशासनपद्धतिरपि पुराणभारतीयशासनपद्धत्यनुसारिण्येव । यतस्तस्या एव परिवर्द्धितं परिवर्तितञ्च रूपमाधुनिक्यां शासनपद्धतौ समुपलभ्यते । तथाहि यथाऽधुना प्रजातन्त्रे प्रान्तपतेर्देशपतेश्च सहकारिणस्तत्तद्विभागाध्यक्षा मन्त्रिणः, एकश्च महामन्त्री भवति; तथैव पुरा राजतन्त्रेऽपि तत्तद्विभागाध्यक्षा मन्त्रिणः, एकश्च महामन्त्री बभूवान्ये च स्वस्वविभागाध्यक्षा अमात्यपदवाच्या न तु मन्त्रिणः । तथाहि कौटिलीयेऽर्थशास्त्रे प्रथमेऽधिकरणेऽमात्योत्पत्तिनाम्नि प्रकरणे—

"विभज्यामात्यविभवं देशकालौ च कर्म च ।
अमात्याः सर्व एवैते कार्याः स्युर्न तु मन्त्रिणः ॥'' इत्युक्तम् ।

मन्त्रिपुरोहितोत्पत्तिप्रकरणे च महामन्त्रिगुणा उक्तास्तत्रैव—"जानपदोऽभिजातः स्ववग्रहः कृतशिल्पश्चक्षुष्मान् प्राज्ञो धारयिष्णुर्दक्षो वाग्मी प्रगल्भः प्रतिपत्तिमान् उत्साहप्रभावयुक्तः क्लेशसहः शुचिर्मैत्रो दृढभक्तिः शीलबलारोग्यसत्त्वसंयुक्तः स्तम्भचापल्यवर्जितः संप्रियो वैराणामकर्तेत्यमात्यसम्पत्'' । पुरोहितगुणाश्चोक्तास्तत्रैव—"पुरोहितमुदितोदितकुलशीलं षडङ्गे वेदे दैवे निमित्ते दण्डनीत्याञ्चाभिविनीतमापदां दैवमानुषीणामथर्वभिरुपायैश्च प्रतिकर्तारं कुर्वीत । तमाचार्यं शिष्यः पितरं पुत्रो भृत्यः स्वामिनमिव चानुवर्तेत ।

ब्राह्मणेनैधितं क्षत्रं मन्त्रिमन्त्राभिमन्त्रितम् ।
जयत्यजितमत्यन्तं शास्त्रानुगमशस्त्रितम् ॥'

ततोऽनन्तरप्रकरणे च 'उपधाभिः शौचाशौचज्ञानममात्यानाम्' इत्येतदर्थपरे 'महामन्त्रिपुरोहितसहितो राजाऽमात्यानां मनःशौचं परीक्षेत । तत्र तत्तदुपधाशुद्धान् तत्तत्कार्येषु नियुञ्जीत, सर्वोपधाशुद्धान् मन्त्रिणः कुर्यात् । सर्वत्राशुचीन् खनिद्रव्यहस्तिवनकर्मान्तेषूपयोजयेत्' इत्युक्तम् । तेन तत्तन्मन्त्रिभ्योऽन्य एव महामन्त्रीति ज्ञायते । मन्त्रिभ्योऽन्येऽप्यमात्याः खनिद्रव्यहस्तिवनादिषु विनियुक्तास्तत्तद्विभागाध्यक्षा भवन्तीति च ज्ञायते ।

किञ्च, तत्रैव मन्त्राधिकारनाम्नि प्रकरणे मन्त्रिपरिषदुक्ता । तथाहि—"मन्त्रिपरिषदं द्वादशामात्यान् कुर्वीतेति मानवाः । षोडशेति बार्हस्पत्याः । विंशतिमित्यौशनसाः । यथासामर्थ्यमिति कौटिल्यः । ते ह्यस्य स्वपक्षं परपक्षञ्च चिन्तयेयुः । अकृतारम्भमारब्धानुष्ठानमनुष्ठितविशेषं नियोगसंपदञ्च कर्मणां कुर्युः । आसन्नैः सह कार्याणि पश्येत् । अनासन्नैः सह पत्रसम्प्रेषणेन मन्त्रयेत । इन्द्रस्य हि मन्त्रिपरिषदृषीणां सहस्रम् । तच्चक्षुः । तस्मादिमं द्व्यक्षं सहस्राक्षमाहुः । आत्ययिके कार्ये मन्त्रिणो मन्त्रिपरिषदश्चाहूय ब्रूयात् तत्र यद्भूयिष्ठाः कार्यसिद्धिकरं वा ब्रूयुः तत्कुर्यात्" इति । अनेन मताधिक्यस्यैवादरणीयताप्युक्ता सति वैमत्ये । यथा च पुरा राज्ञां विशेषाधिकार आसीत् तथाद्यत्वेऽप्यात्ययिके कर्मणि प्रान्तपतेर्देशपतेश्च विशेषाधिकारो नियमनिर्माणेऽस्त्येवेति समानम् ।

किञ्चाधुना यथा प्रान्तपतेर्देशपतेश्चाधीनं प्रजासभा राजसभा चेति सभाद्वयं वर्तते, तथा पुरा राजतन्त्रे प्रजासभा राजसभा गुरुसभा चेति सभात्रयमासीत् । यथा चाधुना जनमतगणनया तत्तद्वर्णानां प्रतिनिधयः प्रजासभासु प्रेष्यन्ते, तथा पुरापि चातुर्वर्ण्यं सङ्कीर्णवर्णञ्चाश्रित्य ब्राह्मणाश्चत्वारो विद्वांसः प्रगल्भा राज्ञि मनःशौचवन्तो विद्याव्रतस्नातकाः, क्षत्रिया अष्टौ बलिनः शस्त्रकुशलाः, वैश्या एकविंशतिसङ्ख्याका वित्तसम्पन्नाः, शूद्राश्च त्रयो विनीताः कर्मकुशलाः राज्ञि शुचयश्च, एकश्च सूतः सङ्कीर्णवर्णप्रतिनिधिः श्रवणाद्यष्टधीगुणयुक्तः । सर्वेऽपि प्रतिनिधयः पञ्चाशद्वर्षवयसः प्रगल्भा अनसूयकाः श्रुतिस्मृतिसमायुक्ता विनीताः समदर्शिनः ( पक्षपातरहिताः ) अलुब्धा व्यसनवर्जिताः । इदञ्चोक्तं सर्वम् ८५ अध्याये शान्तिपर्वणि महाभारते राजधर्मानुशासनप्रकरणे—

"वक्ष्यामि तु यथाऽमात्यान् यादृशाँश्च करिष्यसि ॥
चतुरो ब्राह्मणान् वैद्यान्[1] प्रगल्भान् स्नातकान् शुचीन्।
क्षत्रियाँश्च तथा चाष्टौ बलिनः शस्त्रपाणिनः ॥ ७ ॥
वैश्यान् वित्तेन संपन्नानेकविंशतिसङ्ख्यया।
त्रींश्च शूद्रान् विनीतांश्च शुचीन् कर्मणि पूर्वके[2] ॥ ८ ॥
अष्टाभिश्च [3]गुणैर्युक्तं सूतं पौराणिकं तथा।
पञ्चाशद्वर्षवयसं[4] प्रगल्भमनसूयकम् ॥ ९ ॥
कार्ये विवदमानानां [5]शक्तमर्थेष्वलोलुपम्।
श्रुतिस्मृतिसमायुक्तं विनीतं समदर्शिनम् ॥ १० ॥
वर्जितञ्चैव व्यसनैः सुघोरैः [6]सप्तभिर्भृशम्।"

एते सर्वे प्रजापक्षीया अमात्यपदवाच्याः। एतेष्वेवाष्टौ वा पञ्च वा त्रयो वा मन्त्रिणः। सैषा मन्त्रिपरिषद् राजसभा वा। तदुक्तं तत्रैवाध्याये तत्रैव—

"अष्टानां[7] मन्त्रिणां मध्ये मन्त्रं राजोपधारयेत्।
ततः सम्प्रेषयेद् राष्ट्रे राष्ट्रियाय च दर्शयेत् ॥११-१२॥"

"तस्मात् सर्वैर्गुणैरेतैरुपपन्नाः सुपूजिताः।
मन्त्रिणः प्रकृतिज्ञाः स्युः त्र्यवरा महदीप्सवः ॥"

[ महा० शान्ति० ८३ अ० ४७ श्लो० । ]

'पञ्चानामभावे त्र्यवरास्त्रिभ्यो न्यूना न कार्या' इति नीलकण्ठी। प्रजानां सम्मत एव मन्त्री महामन्त्री च भवतीत्यपि भारतीयसामान्यवाक्यतोऽवगम्यते—

---

(१) विद्यामधीयते विदन्ति वा वैद्याः। (२) पूर्वके नित्ये कर्मणि। (३) "शुश्रूषा श्रवणञ्चैव ग्रहणं धारणं तथा। ऊहापोहार्थविज्ञानं तत्त्वज्ञानञ्च धीगुणाः ॥" इति नीलकण्ठी। (४) पञ्चाशद्वर्षवयसमित्येकैकस्यामात्यस्य विशेषणम्। एतेन लोकानुभवो बुद्धिपरिपाकश्च द्वौ गुणावुक्तौ। (५) कार्ये विवदमानानां मन्त्रिणां मतानि श्रुत्वा स्वमतं व्यवस्थापयितुं शक्तम्। (६) सप्तभिः—मृगयाक्षाः स्त्रियः पानमिति चतुर्भिः कामजैः, दण्डपातनं वाक्पारुष्यमर्थदूषणमिति त्रिभिः क्रोधजैः। (७) अष्टानाम्—ब्राह्मणचतुष्टयं शूद्रत्रयं सूतश्चेति तेषाम्।

"पौरजानपदा यस्मिन् विश्वासं धर्मतो गताः ।
योद्धा नयविपश्चिच्च स मन्त्रं श्रोतुमर्हति ।।"

[८३ अ० ४६ श्लो०]

गुरुसभाऽपि तदनन्तरमेव तत्रैवाध्याय उक्ता —

"नित्यं पञ्चोपधातीतैर्मन्त्रयेत् सह मन्त्रिभिः ।। ५ ।।

तेषां त्रयाणां विविधं विमर्शं विबुध्य चित्तं विनिवेश्य तत्र ।
स्वनिश्चयं तत्प्रतिनिश्चयज्ञं निवेदयेदुत्तरमन्त्रकाले ।।५३।।
धर्मार्थकामः समुपेत्य पृच्छेद् युक्तो गुरुं ब्राह्मणमुत्तरार्थम् ।
निष्ठा कृता तेन यदा सहः स्यात्तं मन्त्रमार्गं प्रणयेदसक्तः ।।५४।।

"तेषामिति । त्रयाणां त्रीणि मतानि स्वनिश्चयं चावधार्य निश्चयज्ञं गुरुं प्रति तन्मतचतुष्टयं निवेदयेदिति द्वयोः सम्बन्धः ।। ५३ ।। तेन गुरुणाऽपि चतुर्भिः सह ऊहापोहपूर्वकं यदा निष्ठा सिद्धान्तः कृतो भवेत् सोऽपि यदा सहः स्यात् सर्वेषामैकमत्येन सम्मतः स्यात्तदा तं मन्त्रं प्रणयेत् कार्ये नियोजयेत् ।। ५४ ।।" इति नीलकण्ठी ।

गुरुश्च कौटिल्यप्रोक्तलक्षणलक्षितः पुरोहित एव । यथा श्रीरामचन्द्रस्य वसिष्ठो यथा वा श्रीबुक्कक्ष्मापतेर्माधवः । एतदुक्तं जैमिनीयन्यायमालाविस्तरारम्भे स्वयमेव माधवेन ।

यथाधुना प्रान्तपति'गंवर्नर'पदवाच्यः, मण्डलाध्यक्षः 'कलक्टर'पदवाच्यः, तदायत्ताश्च भूकरादायिनः 'तहसीलदार'पदवाच्यास्तथा पुरापि राष्ट्रियः सहस्रग्रामीपतिः शतग्रामीपतिस्त्रिंशतिग्रामीपतिर्दशग्रामीपतिर्ग्रामाधिपतिश्चेति क्रमेण शासका बभूवुः । तेषां संग्रामकृत्यस्य ग्रामकृत्यस्य च सम्पादकः कश्चिद् धर्मज्ञः ( राजधर्मपरिज्ञाता ) अमात्यो बभूवैकः । यद्वा नगरे नगरे कश्चिद् घोररूपो बलाध्यक्ष एव बभूव, यथाधुना मण्डले मण्डले 'एस० पी०' पदवाच्यो भवति । सर्वमप्येतदुक्तं महाभारते शान्तिपर्वणि ८७ अध्याये—

"राष्ट्रगुप्तिश्च ते सम्यग् राष्ट्रस्यैव तु संग्रहम् ।
हन्त सर्वं प्रवक्ष्यामि तत्त्वमेकमनाः शृणु ।। २ ।।
ग्रामस्याधिपतिः कार्यो दशग्राम्यास्तथा परः ।
द्विगुणायाः शतस्यैवं सहस्रस्य च कारयेत् ।। ३ ।।

ग्रामेयान् ग्रामदोषाँश्च ग्रामिकः प्रतिभावयेत् ।
तान् ब्रूयाद् दशपायासौ स तु विंशतिपाय वै ॥ ४॥
सोऽपि विंशत्यधिपतिर्वृत्तं जानपदे जने ।
ग्रामाणां शतपालाय सर्वमेव निवेदयेत् ॥ ५ ॥
तेषां संग्रामकृत्यं स्याद् ग्रामकृत्यं च तेषु यत् ।
धर्मज्ञः सचिवः कश्चित्तत्तत्पश्येदतन्द्रितः ॥ ९ ॥
नगरे नगरे वा स्यादेकः सर्वार्थचिन्तकः ।
उच्चैः स्थाने घोररूपो नक्षत्राणामिव ग्रहः ॥१०॥

राष्ट्रियश्च ८५ अध्याये तत्रैवोक्तः –

"अष्टानां मन्त्रिणां मध्ये मन्त्रं राजोपधारयेत् ।
ततः सम्प्रेषयेद् राष्ट्रे राष्ट्रियाय च दर्शयेत्" ॥११॥

राष्ट्रेऽधिपतित्वेन भवो राष्ट्रियः। राष्ट्रियस्याप्यधिपतिः समाहर्ता बभूव, यथाधुना प्रान्तपतेरप्यध्यक्षो देशपतिर्भवति 'गवर्नर जनरल' इति प्रसिद्धः। तदुक्तं कौटिलीयेऽर्थशास्त्रेऽध्यक्षप्रचारे द्वितीयाधिकरणे षष्ठाध्याये समाहर्तृसमुदयप्रस्थापननाम्नि प्रकरणे—

"समाहर्ता दुर्गं राष्ट्रं खनिं सेतुं वनं व्रजं वणिक्पथं चावेक्षेत। शुल्कं दण्डः पौतवं नागरिको लक्षणाध्यक्षो मुद्राध्यक्षः सुरा सूना सूत्रं तैलं घृतं क्षारः सौवर्णिकः पण्यसंस्था वेश्या द्यूतं वास्तुकं कारुशिल्पिगणो देवताध्यक्षो द्वारवाहिरिकादेयं च दुर्गम् । सीताभागो बलिः करो वणिक् नदीपालस्तरो नावः पट्टनं विवीतं वर्तनी रज्जुश्चोररज्जुश्च राष्ट्रम् । सुवर्णरजतवज्रमणिमुक्ताप्रवालशङ्खलोहलवणभूमिप्रस्तरसधातवः खनिः। पुष्पफलवाटषण्डकेदारमूलवापाः सेतुः। पशुमृतद्रव्यहस्तिवनपरिग्रहो वनम् । गोमहिषमजाविकं खरोष्ट्रमश्वाश्वतराश्च व्रजः। स्थलपथो वारिपथश्च वणिक्पथः। इत्यायशरीरम् । मूलं भागो व्याजी परिघः क्लृप्तं रूपिकमत्ययश्चायमुखम्" इति ।

एतेन राष्ट्रस्य राष्ट्रियाधीनत्वेऽपि समहर्त्रधीनत्वमपि गम्यते। यथाधुना द्विविधा न्यायालया भवन्ति 'दीवानी'ति नाम्ना प्रसिद्धो दायनिर्णेतृन्यायालयः। अपरश्च 'माल' इतिनाम्ना ख्यातः पारुष्यनिर्णेतृन्यायालयः शासकाधीनः। तत्र दायनिर्णेतृन्यायालयेऽपि वधादयो महान्तोऽपराधा निर्णीयन्ते। पारुष्यनिर्णेतृन्यायालयेऽपि लघवो विवादा भूमि/भूकरादिविषया निर्णीयन्ते। द्वावपीमौ मार्गौ प्रत्येकं भूमिकात्रयेण तच्चतुष्टयेन वा विभक्तौ।

पूर्वभूमिकानिर्णीतार्था एवोत्तरभूमिकासु पुनर्विचार्यन्ते सति वादिनोरन्यतरस्य द्वयोर्वाऽसंतोषे। सर्वास्वपि भूमिकासु प्रत्येकमेकैक एव निर्णायको भवति। कदाचिदेव 'हाईकोर्ट'नाम्नि न्यायालये न्यायाधीशा यथासम्भवं सम्मिल्य विचारयन्ति। पुरापि द्वौ न्यायालयावास्ताम्। एको धर्मस्थन्यायालयोऽपरश्च प्रदेष्टृन्यायालयः। तत्र धर्मस्थन्यायालये त्रयोऽमात्या धर्मोपधाशुद्धाः सम्मिल्य निर्णायका बभूवुः। धर्मेषु वर्णाश्रमजातिसम्बन्धिषु तिष्ठन्ति तान् धर्मान् विदन्त्यनुवर्तन्ते चेति धर्मस्थपदेनोच्यन्ते। तत्र धर्मस्थन्यायालयस्य चतस्रः पञ्च वा भूमिका आसन्। तथाहि—

"जनपदसन्धौ संग्रहणे द्रोणमुखे स्थानीये चेति। तत्र जनपदसन्धिरन्तपालदुर्गः, संग्रहणं दशग्रामीप्रधानाधिष्ठानं चतुश्शतग्रामीप्रधानाधिष्ठानञ्चेति द्विविधम्। द्रोणमुखमष्टशतग्रामीप्रधानाधिष्ठानम्। स्थानीयं विवादपदाधिकरणग्रामेण साक्षात्सम्बद्धो न्यायालयः।"

पूर्वपूर्वभूमिकास्वसन्तोषे चोत्तरोत्तरभूमिकाश्रयणमासीदिति चानेकभूमिकाकल्पनया प्रतीयते। धर्मस्था एव दायपारुष्ययोरुभयोरपि निर्णायका आसन्। यतस्तयोरुभयोरपि निर्णेतृत्वेन धर्मस्था एव कौटिलीयेऽर्थशास्त्रे तृतीयेऽधिकरणे स्पष्टं समुपलभ्यन्ते। तदुक्तम्—'धर्मस्थास्त्रयस्त्रयोऽमात्या जनपदसन्धिसंग्रहणद्रोणमुखस्थानीयेषु व्यावहारिकानर्थान् कुर्युः'। प्रदेष्टृन्यायालयश्च प्रकटकण्टकप्रतिशोधनार्थं आसीत्। तथाहि राज्ये द्विविधाः कण्टका भवन्ति—प्रकटकण्टकाः प्रच्छन्नकण्टकाश्चेति। तत्र प्रकटकण्टका यथा कारुकवैदेहकाः। तत्र कारुका नाडिन्धमतक्षायस्कारतन्तुवायतुन्नवायरजकसरकपांशुधावकभिषक्कुशीलवचारणभिक्षुकादयः। वैदेहका वणिजः। तेषामपराधप्रतिषेद्धारः प्रदेष्टार उच्यन्ते, तेऽपि त्रयस्त्रयोऽमात्या आसन्। तेषां न्यायालयोऽपि भूमिकाचतुष्टयेन तत्पञ्चकेन वा प्रविभक्तः प्रागुक्तरीत्यासीद् विशेषानुक्तेः। तेषां दण्डापराधादिनिर्णयार्थं कारुकरक्षणं वैदेहकरक्षणं चेत्यध्यायद्वयं कौटिलीयेऽर्थशास्त्रे निर्मितम्। तथा च कारुकरक्षणाध्यायस्य चरमः श्लोकः—

"एवं चोरानचोराख्यान् वणिक्कारुकुशीलवान्।
भिक्षुकान् कुहकांश्चान्यान् वारयेद् देशपीडनात्॥"

चोरानचोराख्यानित्यस्य चोरकर्मकुर्वाणानप्यचोरसंज्ञानित्यर्थः। कुहकान् ऐन्द्रजालिकान्। वैदेहकरक्षणाध्यायस्य चायञ्चरमः श्लोकः—

"प्रक्षेपं पण्यनिष्पत्तिं शुल्कं वृद्धिमवक्रयम्।
व्ययानन्यांश्च सङ्ख्याय स्थापयेदर्घमर्घवित्॥"

देशव्यवहितानां कालव्यवहितानाञ्च पण्यानां प्रक्षेपं वस्तुमूल्यम्, पण्यनिष्पत्तिमिदमियता कालेन निष्पद्यत इत्यमुमर्थम्, शुल्कं राजग्राह्यकरम्, वृद्धिं वस्तुमूल्यस्य, अवक्रयं शकटबलीवर्दादिभाटकम्, अन्यान् व्ययांश्च सङ्ख्यायार्घं स्थापयेत् कल्पयेद् अर्घविदर्घविधानाभिज्ञः संस्थाध्यक्षः। तदतिक्रमे दण्ड इति भावः। प्रच्छन्नकण्टकाश्च त्रयोदश—धर्मस्थः, प्रदेष्टा, ग्राममुख्यः, तत्तद्विभागाध्यक्षः, कूटसाक्षी, कूटश्रावकः, संवननकर्ता, कृत्याशीलः, अभिचारशीलः, रसदः, मदनयोगव्यवहर्ता, कूटरूपकर्ता, कूटसुवर्णव्यवहारी चेति। ते च कौटिलीयेऽर्थशास्त्रे गूढाजीविरक्षाप्रकरणे यथायथं दर्शिताः। तथा च तत्प्रकरणस्यायञ्चरमः श्लोकः—

"आरब्धारस्तु हिंसाया गूढाजीवास्त्रयोदश।
प्रवास्या निष्क्रयार्थं वा दद्युर्दोषविशेषतः॥"

हिंसाया लोकोपद्रवस्य कर्तारो गूढाजीवास्त्रयोदश प्रवास्याः स्वदेशतो निष्कासयितव्याः। दोषविशेषतोऽपराधतारतम्येनापराधनिष्क्रियार्थं दण्डं वा दद्युरित्यर्थः। तथा च तेषां प्रच्छन्नकण्टकानां प्रतिशोधनार्थं समाहर्ता सिद्धतापसादिव्यञ्जनान् चरान् नियुञ्जीत। गूढजीवित्वशङ्कायाञ्च परीक्ष्य प्रवास्यास्ते। तदुक्तं कौटिलीये गूढजीविरक्षाप्रकरणे——

"समाहर्ता जनपदे सिद्धतापसप्रव्रजितचक्रचरचारणकुहकप्रच्छन्दककार्तान्तिकनैमित्तिकमौहूर्तिकचिकित्सकोन्मत्तकमूकबधिरजडान्धवैदेहककारुशिल्पिकुशीलववेशशौण्डिकापूपिकपाकमांसिकौदनिकव्यञ्जनान् प्रणिदध्यात्। ते ग्रामाणामध्यक्षाणाञ्च शौचाशौचं विद्युः, यं चात्र, गूढजीविनं शङ्केत तं सत्रिसवर्णेनापसर्पयेत्। धर्मस्थं प्रदेष्टारं वा विश्वासोपगतं सत्री ब्रूयात्। असौ मे बन्धुरभियुक्तस्तस्यायमनर्थः प्रतिक्रियताम्, अयं चार्थः प्रतिगृह्यतामिति। स चेत्तथा कुर्यात्, उपदाग्राहक इति प्रवास्येत। तेन प्रदेष्टारो व्याख्याताः" इत्यादि।

करवृद्ध्या च प्रजा उद्विजन्ते, विशेषतो वैदेहकाः कर्षकाश्च। तथाहि महाभारते शान्तिपर्वणि ८९ अध्याये भीष्मस्य युधिष्ठिरं प्रति प्रश्नः—

"कच्चित्ते वणिजो राष्ट्रे नोद्विजन्ति करार्दिताः।
क्रीणन्तो बहुनाल्पेन कान्तारकृतविश्रमाः॥ २२॥
कच्चित्कृष्टिकरा राष्ट्रं न जहत्यतिपीडिताः।
ये वहन्ति धुरं राज्ञां ते भरन्तीतरानपि॥ २३॥

अतः करवृद्धेरावश्यकत्वेऽपि क्रमेणैव करवृद्धिः सम्पाद्या, न तु सहसा युगपदेव। एतदप्युक्तं महाभारत एव शान्तिपर्वणि ८८ अध्याये—

"अल्पेनाल्पेन देयेन वर्धमानं प्रदापयेत्।
ततो भूयस्ततो भूयः क्रमवृद्धिं समाचरेत् ॥ ७ ॥
दमयन्निव दम्यानि शश्वद्भारं विवर्धयेत्।
मृदुपूर्वं प्रयत्नेन पाशानभ्यवहारयेत् ॥ ८ ॥
न चास्थाने न चाकाले करांस्तेभ्यो निपातयेत्।
आनुपूर्व्येण सान्त्वेन यथाकालं यथाविधि ॥ १२ ॥" इति।

यथा चाधुना प्रजातन्त्रे 'पार्टी' नाम्ना प्रसिद्धाः सङ्घास्तेषां नेतारश्च भवन्ति, केचन राज्योपकारकाः केचन तद्विघातकाश्च, तथैव पुरा राजतन्त्रेऽपि तत्तन्नाम्ना प्रसिद्धाः सङ्घास्तन्नायकाश्च बभूवुः राज्योपकारकास्तद्विघातकाश्च। तेषाञ्चानुगुणानां सामदानाभ्यामुपभोगो विगुणानाञ्च तेषां भेददण्डाभ्यां विघटनं राज्ञः कर्तव्यमुपदिष्टं कौटिलीये। तदेव प्रजातन्त्रेऽपि आवश्यकम्, क्रियतेऽपि च। तथाहि कौटिलीयेऽर्थशास्त्रे सङ्घवृत्तनाम्नि एकादशेऽधिकरणे उक्तम्—

"सङ्घलाभो दण्डमित्रलाभानामुत्तमः। सङ्घा हि संहतत्वादधृष्याः परेषाम्।ताननुगुणान् भुञ्जीत सामदानाभ्याम्। सङ्घेष्वेवमेकराजो भेददण्डाभ्यां वर्तेत। सङ्घाश्चाप्येवमेकराजादेतेभ्योऽतिसन्धानेभ्यो रक्षयेयुः (आत्मानमिति शेषः।)

सङ्घमुख्यश्च सङ्घेषु न्यायवृत्तिर्हितः प्रियः।
दान्तो युक्तजनस्तिष्ठेत् सर्वचित्तानुवर्तकः ॥" इति।

भेददण्डोपायाश्चास्मिन्नेवाधिकरणे बहुधा प्रदर्शिताः। महाभारतेऽपि शान्तिपर्वणि १०७ अध्याये भीष्मवाक्यानि—

"द्रव्यवन्तश्च शूराश्च शस्त्रज्ञाः शास्त्रपारगाः।
कृच्छ्रास्वापत्सु संमूढान् गणाः सन्तारयन्ति ते ॥ २ ॥"

अनेन भारतवाक्येन प्रतीयते यत्पुरा धनिनां भटानां विदुषाञ्च पृथक् पृथक् सङ्घा आसन्निति।

"क्रोधो भेदो भयं दण्डः कर्षणं निग्रहो वधः।
नयत्यरिवशं सङ्घो गणान् भरतसत्तम ॥ २२ ॥
तस्मान्मानयितव्यास्ते गणमुख्याः प्रधानतः।
लोकयात्रा समायत्ता भूयसी तेषु पार्थिव ॥ २३ ॥
मन्त्रगुप्तिः प्रधानेषु चारश्चामित्रकर्षण।
न गणाः कृत्स्नशो मन्त्रं श्रोतुमर्हन्ति भारत ॥ २४ ॥

गणमुख्यैस्तु सम्भूय कार्यं गणहितं मिथः ॥ २५ ॥
भेदाच्चैव प्रदानाच्च भिद्यन्ते रिपुभिर्गणाः ।
तस्मात्सङ्घातमेवाहुर्गणानां शरणं महत् ॥ ३२ ॥

'सङ्घात ऐकमत्यम्' इति नीलकण्ठी । तदेष भारतीयप्राचीनशासनपद्धतेर्दिङ्निर्देश उदाहृतः । कौटिलीयेऽर्थशास्त्रे त्वपेक्षिता सर्वेऽपि राजधर्माः प्राधान्येन सपञ्चाशदध्यायशतेन षड्भिः श्लोकसहस्रैः समुपदिष्टाः । तत्र मित्रहिरण्यभूमिकर्मानवसितसन्धयो विग्रहाद्याश्च विषया राज्ञां प्रतिदिनमपेक्षिताः प्रतिपक्षनिरासेन व्यवस्थाप्य दर्शिताः । महाभारतेऽपि शान्तिपर्वण्युद्योगपर्वण्यनुशासनपर्वणि च प्राधान्यविस्तराभ्यां नानाख्यानैरुपदृष्टान्तैश्च, अन्येष्वपि पर्वसु तत्र तत्र प्रकीर्णरूपतया च निर्णीताः । सुनीतयः कुटिलनीतयश्च कणिकादिप्रवक्तृमुखेन सप्रमाणं सोदाहरणञ्च संदर्शिताः । तदेष प्राचीनशासनपथो देशस्य बहुकालपराधीनतया ग्रन्थस्थितोऽपि व्यवहारागोचरत्वेनाजस्रमक्षुण्णतया प्रत्यक्षतोऽविभाव्यमानः पारिभाषिकशब्दानामपरिचयात् क्लेशेनानुमीयमानः सुचारुरपि धूलिसंवृतं रत्नमिवाचारुत्वेनोपेक्ष्यतेऽधुना । अन्यच्चोपेक्षाकारणं व्यवहारे पुरः प्रसर्पतां नेतॄणां संस्कृतभाषात्यन्तासंस्तवमूलिकाऽरुचिः । तदेषाऽन्ते भूयोऽभ्यर्थना यद् भारतीयप्राचीनशासनपथस्य परीक्ष्य समाश्रयणमेव श्रेयस्करम् । इदञ्चाशीर्वचः—

विग्रहः करितुरङ्गपत्तिभिर्नो कदाऽपि भवतान्महीभुजाम् ।
नीतिमन्त्रपवनाहतारिचरं संश्रयन्तु गिरिगह्वरं द्विषः ॥



# सदाचारसूत्राणि

( १ ) अथातः सदाचारादेशः ।

( २ ) सदाचारलोपो हि लोके ।

( ३ ) सदाचारः संपदः ।

( ४ ) सदाचाराद् भगवत्तोषस्ततः स्वर्गः ।

( ५ ) परापवादं न वदेत् ।

( ६ ) पैशुन्यं न कुर्यात् ।

( ७ ) नानृतं वदेत् ।

( ८ ) नान्योद्वेगकरं वदेत् ।

( ९ ) परदार-परद्रव्येष्वगर्धः ।

( १० ) शरीरवाङ्मनोभिः परहिंसानिवृत्तिः ।

( ११ ) काले देवद्विजगुरून् शुश्रूषेत् ।

( १२ ) सर्वभूतेषु आत्मवत् पुत्रवच्च हितकामः ।

( १३ ) चेतसो रागादिदोषान् युक्त्या परिहरेदनिष्टदर्शनतः ।

( १४ ) स्वस्ववर्णाश्रमधर्मान् अनुतिष्ठेदनापदि ।

( १५ ) भृत्यभृतये परिग्रहः, ऋतुकाले स्वदाराभिगमः, भूतदया, तितिक्षा, अमानित्वम्, सत्यम्, शौचम्, अतिश्रमपरिहारः, मङ्गल्यवेषधारणम्, प्रियवादित्वम्, भूतेषु मैत्री, परद्रव्येऽस्पृहा, अदैन्यम्, अनसूया, एते साधारणाः सदाचाराः ।

( १६ ) अतिथिसत्कारः सर्वेषाम् ।

( १७ ) आपदि उत्तमानामवरावरधर्माः ।

( १८ ) ब्राह्मे मुहूर्ते उत्तिष्ठेदेव स्वस्थः ।

( १९ ) तत्रोत्थितो धर्ममर्थं कामञ्च तदविरोधिनं चिन्तयेत् ।

( २० ) ततः प्रातरुत्थाय नैर्ऋत्यामावसथाद् दूरं गत्वा मूत्रपुरीषे कुर्यात् ।

( २१ ) आवसथाद् बहिरेव पादाववनेजयेत ।

( २२ ) आत्मतरुच्छाये गोसूर्याग्न्यनिलान् गुरुद्विजादीन् नाधिमेहेत् नाभिमेहेत् ।

(२३) न कृष्टे, न सस्यमध्ये, न गोगोष्ठे, न जनसंसदि, न मार्गे, न नद्यादितीर्थेषु, नाप्सु, न तीरे, न श्मशाने मूत्रपुरीषे उत्सृजेत् ।

(२४) अनापदि दिवा उदङ्मुखो रात्रौ दक्षिणामुखो मूत्रपुरीषे उत्सृजेत् ।

(२५) आपदि कामचारः ।

(२६) वसुधां तृणैरास्तीर्य वासःप्रावृतमस्तको मौनी तत्र नातिचिरं तिष्ठन् मूत्रपुरीषे कुर्यात् ।

(२७) हस्तादिशौचार्थं वल्मीकसंभवाम्, मूषिकोत्खातां जलान्तःस्थितां शौचावशिष्टां गेहलेपसंभवाम्, पिपीलिकाद्यणुप्राणिजुष्टां हलोत्खातां च मृदं वर्जयेत् ।

(२८) लिङ्गे सकृद्, गुदे त्रिः, वामकरे दश, ततो हस्तद्वये सप्त, सकृत्सकृत्पादयोर्मृदं दद्यात् शौचोपपत्तिर्भवति ।

(२९) यावद्वा गन्धलेपनिवृत्तिः ।

(३०) ततोऽन्तः शुद्ध्यर्थमपां पञ्च गण्डूषान् प्रास्य, त्रिः सलिलं पिबेत्, द्विश्च मुखं परिमार्जयेत् ।

(३१) ततः सप्त शीर्षण्यानि खानि मूर्धानं बाहू नाभिं हृदयं च तोयेन संस्पृशेत् ।

(३२) ततः स्वाचान्तः सुस्नातः केशप्रसाधनम्, आदर्शे दर्शनम्, चक्षुषो रञ्जनम्, गोष्ठदूर्वाद्यालम्भनानि माङ्गल्यानि कुर्यात् ।

(३३) नदीनदतटाकेषु, देवखातजलेषु, गिरिप्रस्रवणेषु, कूपेषु, गृहे वा स्नायात् ।

(३४) स्नातो देवर्षिपितृतर्पणं कुर्यात् ।

(३५) ततो धनार्जनाय मध्याह्नात्प्राग् यतेत धनस्य त्रिवर्गमूलत्वात् ।

(३६) ततो मध्याह्ने पुनः स्नातः स्वल्पशौचेन वा शुचिर्देवपित्रतिथिभूतेभ्यः श्वश्वपचवायसेभ्यो गुर्वादिभ्यः संश्रितेभ्यश्चान्नं दत्त्वा गृहे बालवृद्धगर्भिणीस्तर्पयित्वा चरमं विघसं भुञ्जीत ।

(३७) नैकवस्त्रधरो नानार्द्रपाणिपादो न विदिङ्मुखे नान्यमनाः प्राङ्मुख उदङ्मुखो वा अकुपितः प्रशस्तं पथ्यञ्च प्रोक्षितमन्नं प्रशस्ते शुद्धे च पात्रे भुञ्जीत ।

(३८) न आसनाश्रिते पात्रे, न कुदेशे, नाकाले, नान्धावृते देशे, नातिजनसंकीर्णे भुञ्जीत ।

(३९) न अप्रशस्तम्, न पर्युषितम्, अन्यत्र फलमूलेभ्यः, शुष्कशाकादिभ्यः, अपक्वलेह्यादिभ्यो गुडनिर्मितभक्ष्येभ्यश्च न हृतसारं पयोदध्यादि भुञ्जीत।

(४०) मध्वम्बुदधिसर्पिःसक्तुभ्योऽन्यत्र भुक्तशेषमनुच्छिष्टमपि न भुञ्जीत।

(४१) पूर्वं मधुरं रसम्, मध्ये लवणाम्लौ, अन्ते कटुतिक्तादिकान् रसान् अश्नीयात्।

(४२) बलारोग्यकामः पुरुषः प्राग् द्रवम्, मध्ये कठिनम्, अन्ते पुनर्द्रवमश्नीयात्।

(४३) अन्नमकुत्सयन् मौनी भुञ्जीत।

(४४) भुक्त्वाऽऽचाम्य पाणिपादौ प्रक्षालयेत।

(४५) भुक्त्वा स्वस्थः प्रशान्तचित्तः कृतासनपरिग्रहोऽभीष्टदेवताः स्मरेदन्नपरिपाकाय।

(४६) भुक्त्वाऽऽयासकर्माणि वर्जयेत्।

(४७) न संध्ययोः स्वपेदनातुरः।

(४८) सायंप्राप्तोऽतिथिर्नापनोद्यः।

(४९) नाज्ञातकुलशीलाय गृहे वासो देयः।

(५०) तस्य बहिर्वासोऽपरिच्छदः।

(५१) सपरिच्छदत्वेऽवधानम्।

(५२) सायं भुक्त्वा अस्फुटितां दारुमयीं विशालां अभुग्नां समाम् अमलिनाम् अजन्तुमयीम् आस्तृतां शय्यामधितिष्ठेत्।

(५३) प्राच्यां याम्यायां वा दिशि शय्यायाः शिरः।

(५४) ऋतौ भार्यामुपेयात् सकामायामनृतावपि।

(५५) न प्रतिकूलाम्, नातुराम्, न रजस्वलाम्, न नानिष्टाम्, न प्रकुपिताम्, न त्रस्ताम्, न च गर्भिणीम्, न कुटिलाम्, नान्यकामाम्, नाकामाम्, न परस्त्रियम्, न क्षुत्क्षामाम्, नातिभुक्ताम्। स्वयमप्येवंविधो न स्यात्।

(५६) सायं स्नातः स्रग्गन्धधृक् प्रीतो नातिभुक्तो न क्षुधितः सकामः सानुरागश्च व्यवायं व्रजेत्।

(५७) नाष्टम्याम्, न चतुर्दश्याम्, नामायाम्, न पूर्णिमायाम्, न रविसंक्रान्तौ।

(५८) नान्ययोनौ, नायोनौ, नोपयुक्तौषधः, न देवद्विजगुरूणामाश्रमे, न चैत्यचत्वरतीरेषु, न गोष्ठे, न चतुष्पथे, न श्मशानोपवने, न सलिलेषु, न संध्ययोः, न दिवा, न भुवि, न मूत्रोच्चारपीडितो व्यवायं गच्छेत् ।

(५६) सति विभवे अनुपहतवासाः प्रस्निग्धामलकेशः सुगन्धश्चारुवेषधृक् सितानि पुष्पाणि बिभृयात् ।

(५७) परस्वं नापहरेत् ।

(५८) अल्पमपि अप्रियं न वदेत् ।

(५९) प्रियं च नानृतं ब्रूयात् ।

(६०) नान्यदोषानुदीरयेत् ।

(६१) अन्यस्त्रियं वैरञ्च न रोचयेत् ।

(६२) न नग्नां संसक्तमैथुनां वा परस्त्रियमीक्षेत ।

(६३) नोदयास्तमययोः सूर्यस् ।

(६४) न श्मश्रुमुखलग्नं भक्षयेत ।

(६५) न लोष्टं वृथा मृद्नीयात् ।

(६६) न दुष्टं यानमारोहेत् ।

(६७) तीरच्छायां न संश्रयेत् ।

(६८) विद्विष्टपतितोन्मत्तबहुवैरकीटवत्पीडकवर्धकीबन्धकीभर्तृक्षुद्रकथानृतकथातिव्ययशीलपरिवादरतशठैः सह मैत्रीं न कुर्वीत ।

(६९) नैकः पन्थानमाश्रयेत् ।

(७०) अग्रे स्थितो जलौघस्य वेगं नावगाहेत ।

(७१) प्रदीप्तं वेश्म न विशेत् ।

(७२) तरोः शिखरं नारोहेत् ।

(७३) दन्तसंघर्षं न कुर्यात् ।

(७४) नासिकां नोत्किरेत् ।

(७५) असंवृतमुखो न जृम्भेत् ।

(७६) श्वासकासौ न ग्रसेत् किन्तु विसर्जयेत् ।

(७७) उच्चैः सशब्दश्च न हसेत् ।

(७८) कुत्सितं पवनं सदसि न मुञ्चेत् ।

(७९) तत्प्रसक्तावपक्रामेत् ।

(८०) न नखान् खादेत् ।

( ८१ ) न नखान् तृणं वा छिन्द्यात् ।
( ८२ ) न महीं पदाङ्गुष्ठेन लिखेत् ।
( ८३ ) वर्षैरूनां कन्यामुद्वहेत् ।
( ८४ ) नातिकेशाम्, नाकेशाम्, नातिकृष्णवर्णाम्, न पिङ्गलाम्, न स्वभावतोऽधिकाङ्गीम्, न न्यूनाङ्गीम्, न हीनसंवर्द्धिताम्, नाकुलजाम्, न सरोमाम्, न रोगिणीम्, न दुष्टाम्, न दुष्टवाक्याम्, न मातृपितृतो विकलाङ्गीम्, न श्मश्रुव्यञ्जनवतीम्, न पुरुषाकाराम्, न घर्घरस्वराम्, न क्षामाम्, न काकस्वराम्, न प्रतिपाद्येऽनिबन्धेक्षणाम्, न वृत्ताक्षीम्, न रोमशजङ्घाम्, नोन्नतगुल्फाम्, न हसन्त्या गण्डे दृश्यगर्ताम्, नातिरूक्षच्छविम्, न पाण्डुनखाम्, नारुणेक्षणाम्, नात्यन्तपीनहस्तपादाम्, न वामनाम्, नातिदीर्घाम्, न संहतभ्रुवम्, नातिच्छिद्रदशनाम्, न करालमुखीम्, न मातृतः पञ्चमीम्, न पितृतः सप्तमीम् ।
( ८५ ) रात्रौ चतुष्पथम्, चैत्यवृक्षम्, श्मशानोपवनानि, दुष्टस्त्रीसंनिकर्षञ्च वर्जयेत् ।
( ८६ ) शवगन्धं नावज्ञया हुंकुर्यात् ।
( ८७ ) देवद्विजज्योतिषां छायां नातिक्रामेत् ।
( ८८ ) नैकः शून्याटवीं गच्छेत् ।
( ८९ ) नैकः शून्यगृहे वसेत् ।
( ९० ) केशास्थिकण्टकामेध्यबलिभस्मतुषस्नानार्द्रधरणीर्दूरतः परिवर्जयेत् ।
( ९१ ) न अनार्यानाश्रयेत् ।
( ९२ ) न जिह्मान् रोचयेत् ।
( ९३ ) न व्यालमुपसर्पेत् ।
( ९४ ) यदि उपसृप्तस्तत्र चिरं न तिष्ठेत् ।
( ९५ ) अत्यन्तं जागरस्वप्नौ, स्थानासने, शय्याम्, व्यायामञ्च न सेवेत ।
( ९६ ) दंष्ट्रिणः शृङ्गिणः, हिमम्, पुरोवातम्, पुरआतपञ्च वर्जयेत् ।
( ९७ ) नग्नो न स्नायात्, न स्वपेत्, नाचामेत् ।
( ९८ ) मुक्तशिखो नाचामेद् न देवादीनर्चयेत् ।
( ९९ ) नैकवस्त्रः होमदेवार्चनाचमनद्विजपादावनेजनेषु प्रवर्तेत ।

( १०० ) दुर्जनसंसर्गं परिहरेत् ।
( १०१ ) सतां सङ्गं समाश्रयेत् ।
( १०२ ) नोत्तमैरधमैर्वा विवादं कुर्यात् ।
( १०३ ) कलिं स्वयं नारभेत ।
( १०४ ) शुष्कवैरं विवर्जयेत ।
( १०४ ) अल्पहानिं सोढ्वाऽपि वैरं न कुर्यात् ।
( १०५ ) स्नातः स्नानशाट्या पाणिना वा न गात्राणि संमार्जेत् ।
( १०६ ) स्नातो जलापनोदाय केशान्न निर्धूनयेत् ।
( १०७ ) उत्थितो नाचामेत् ।
( १०८ ) पादं पादेन नाक्रामेत् ।
( १०९ ) न पूज्याभिमुखं तं नयेत् ।
( ११० ) गुरोरग्रे नोच्चासनं भजेत् ।
( १११ ) देवागारचतुष्पथान् माङ्गल्यानि पूज्यांश्च नापसव्यं गच्छेत् ।
( ११२ ) एतद्विपरीतान् न प्रदक्षिणं गच्छेत् ।
( ११३ ) सोमार्काग्न्यम्बुवायूनां पूज्यानाञ्च संमुखं निष्ठीवविण्मूत्राणि न समुत्सृजेत् ।
( ११४ ) न तिष्ठन् न पथिषु मूत्रयेत् ।
( ११५ ) श्लेश्मविण्मूत्ररक्तानि न लङ्घयेत् ।
( ११६ ) श्लेश्मशिङ्घाणिके भोजनकाले नोत्सृजेत् ।
( ११७ ) न बलिमङ्गलजप्यादौ न होमे न महाजने ।
( ११८ ) योषितो नावमन्येत नेर्ष्येत न धिक्कुर्यात् न च विश्वसेद् नाविश्वासं लक्षयेत् ।
( ११९ ) पूज्यान् अनभिवाद्यगृहान् न निःसरेत् ।
( १२० ) चतुष्पथान् नमस्कुर्यात् पथि गच्छन् ।
( १२१ ) दीनान् साधूनभ्युद्धरेत् ।
( १२२ ) बहुश्रुतानुपासीत ।
( १२३ ) न बहुभाषिता ।
( १२४ ) हितं मितं प्रियञ्च कालेऽभिभाषेत ।
( १२५ ) धीमान् ह्रीमान् क्षान्त आस्तिको विनीतः स्यात् ।
( १२६ ) सर्वबन्धुरमत्सरी भीताश्वासनकृत् क्रुद्धान् सान्त्वयेत् ।
( १२७ ) वर्षातपादिषु छत्री रात्र्यटवीषु दण्डी सोपानत्को व्रजेत् ।

( १२८ ) अग्रे युगमात्रं महीपृष्ठं विलोकयन् गच्छेत्, नोर्ध्वम्, न तिर्यग् दूरम् ।

( १२९ ) पापेऽप्यपापः, परुषेऽप्यपरुषः स्यात् ।

( १३० ) कामक्रोधलोभान् जयेत्, असंकल्पकामविवर्जनार्थानर्थेक्षाभिः।

( १३१ ) सत्यं ब्रूयात् प्रियम् ।

( १३२ अप्रियञ्च सत्यमपि न ब्रूयात् ।

( १३३ ) प्रियञ्च नानृतं ब्रूयात् ।

( १३४ ) यद्धितं श्रेयश्च तदत्यन्तमप्रियमपि ब्रूयात् ।

( १३५ ) अपृष्टाऽपि हितं ब्रूयाद् यस्य नेच्छेत्पराभवम् ।

इति श्रीब्रह्मीभूतकाशीनाथपितृपादानुध्यानावाप्तप्रतिभ-
सौभद्ररघुनाथशर्मस्मृतानि सदाचारसूत्राणि
विष्णुपुराणमूलकानि ॥



# श्रीकाशीनाथतातपादानामात्मवृत्तम्

अस्ति विरञ्चिनिर्मलमानससमुद्भूतमानससरःप्रसरदत्यच्छपयःप्रवाहमुद्वहत्सरयूपाथःपावितमुदक्, दक्षिणा च निमज्जज्जनोद्धरणदीक्षादक्षपावितपापविपक्षहिमचन्द्रपुण्डरीकहंसादिसकलवलक्षसमक्षसुधासदृक्षगिरिशशिरःसंपातसंपूतसुरसरित्पानीयानीयमानपूतभावं हंसकारण्डवादिविविधविहगकुलाकुलपातप्रभ्रश्यत्पद्मपरागपिञ्जरितपयः सप्तगव्यूतिमानविततब्रह्माणी-वैष्णवीदेवी-बलखण्डिनाथ-औह्यीनाथ-अशोकनाथपदाभिधेय–देवाधिष्ठिताखिलकूलसौरथसरःसमुद्भासितम्, सरयूसुरसरित्संगमक्षितीश्वरनाथमन्दिरभृगुपराशरस्थाण्वाश्रमादितीर्थशतशालिकामानङ्गतासंप्राप्त्याश्रयत्वेनानङ्ग इति ख्यातं भारतवर्षस्य मूर्धानमुन्नमयद् 'बलिया' मण्डलम्। तत्रास्ति विश्वसृजो वसिष्ठशक्तिपराशरव्यासशुकदेवब्रह्मदत्तादिवंशपरम्पराक्रमेणानवद्यचतुर्दशविद्यावित्तैर्मखशतपरिपूतैरप्रतिग्रहवित्तैः पातञ्जलमहाभाष्यादृष्टाश्रुतपूर्वप्राध्यापनचुञ्चुभिः पाराशर्यब्राह्मणकुलैः प्रख्यातम्, जाह्नवीजलभृतसौरथसरःप्रसृतया गङ्गां संमिततया च लघुकाययाऽपि बहुगव्यूतिमानया देवनदीतनूजया सरिता उदीच्यामुपसेवितम्, सर्ववर्णाश्रममाश्रितम्, बहुवापीकूपतडागचैत्यदेवतायतनादिमण्डितं 'छाता' नाम ग्रामप्रकाण्डम्। तत्रत्यस्य च पाराशर्यब्राह्मणवंशस्य परःशतावदानसिद्धिजेगीयमानयशसोऽवतंसभूतः समजनि विद्याविनयवृत्ततपःपूतश्चित्रधर इति ख्यातनामा चित्रशास्त्रधरः। तस्य च षट्सु पुत्रेषु गुणैर्वचसा च ज्यायानभूद् रामटहलनामा विदितसर्वविद्योऽपि व्याकरणेऽपर इव पतञ्जलिः श्रुतिशास्त्रानुसारिविधिविधानेन प्रसाधितोभयलोकश्चिन्ताचितिर्वर्जितो भर्गाराधनभर्जिताखिलकर्मबीजः। तस्य च प्रवयस एकमेवापत्यरत्नमुदपद्यताशेषगोत्रोत्तारकारणं काशीनाथपदाभिधेयम्। बाल्य एव चास्य पित्रा व्ययुज्यत माता। सा च महान्तमपि विरहानलं हृदये धूमायमानं बालमुखचन्द्रनिरीक्षणप्रसक्तिशाटिकयाऽनौपयिक्यापि कथञ्चित् प्रच्छाद्य शिशुपालनमात्रैकव्यापारा पूर्वजसमुपार्जितसंपत्त्या समयस्य समर्थत्वेन दिवसाननैषीत्। संप्राप्ते चाष्टमे वर्षे उपनिन्युरेनं

गुरुप्रियं गुरवः। उपनीतश्चायं महत्पाल( सहतवार )नाम्नि छाताग्रामतः पूर्वस्यां गव्यूतिमिते महति ग्रामे निवसतः शास्त्रविधिव्रातविधानप्रयतात् कुतश्चिच्चतुर्वेदवृद्धात् श्रीपीलनपदाभिधेयादाचार्यात् सारस्वतं व्याकरणं प्रागधीतवान्।

तदनन्तरञ्च छाताग्रामतः पश्चिमदिशि गव्यूतिमिते एव देशे सौरथसरसो दक्षिणे उपकूले प्रतिष्ठिताया वैष्णव्यालोकविदितमहिम्नो महनीये मन्दिरे निवसतः श्रीपरमेश्वरदत्तमिश्रनाम्नो नामानुरूपावदानाद् गुरोः सिद्धान्तकौमुदीं सशब्दरत्नां मनोरमां परिभाषेन्दुशेखरं चाधीत्यातः परमध्यापयितुमकल्पेन कारुणिकेन गुरुणा विनेयबुद्धिदर्शिना सस्नेहमभ्यनुज्ञातः काशीमुपेत्य असीनद्याः कूले उत्तरस्मिन् स्थिते 'गुद्दरदास का अखाड़ा' इति लोके संश्रुते वैष्णवमन्दिरे निवसन् महति अर्थसंकटे सत्यप्युपचतुरैरेव रूप्यकैर्मध्याह्ने भोजनेन रात्रौ चामचपाकचर्वणेन कालं यापयन् अस्सीघट्टे एवाद्युनापि प्रतिष्ठितद्वारिकाधीशमन्दिरमधिवसतो व्याकरणे नागेशादिधुरामुद्वहतः श्रीमाधवाचार्यात् सकलं व्याकरणम्, काश्यामेव हनुमद्घट्टमधितिष्ठतः श्रीसीतारामशास्त्रिणो द्रविडात् कणादगौतमकल्पाद् नव्यन्यायम्, श्रीब्रह्मानन्दस्वामिनश्चोदासीनात् शास्त्रदृष्ट्या ब्राह्मण्यमुत्सृज्य न्यस्तकर्मणो विदितवेदितव्याद् वेदान्तपारदृश्वन उत्तरमीमांसां श्रीपण्डितपद्मनाभशास्त्रिपितुः श्रीनित्यानन्दशास्त्रिणः सारस्वतवंशावतंसात् पूर्वमीमांसां चाधीत्य पदवाक्यप्रमाणलक्षणस्य पाथोधित्रयस्य पारं गतः। अध्ययनकाल एव च विनेयान् तत्तद्विद्यासु विनयन् परां प्रौढिमुपागमत्।

तदनन्तरं काश्यामेव कृपारामेतिश्लाघ्यनामधेयेन संन्यासानन्तरं दर्शनानन्दस्वामीति नाम्ना लोके प्रथितेनाभ्यर्थितः जगतगञ्जनाम्नि काश्याः शाखानगरे तदीयविद्यालयेऽध्यापिपत्। तदनन्तरञ्च श्रीभवानीदीक्षितैर्महावैयाकरणैः सार्धं दुर्गाकुण्डं समया सदरामाविद्यालयेऽध्यापयामास। तदनन्तरञ्च श्रीपण्डितप्रवरगङ्गादत्तोपाध्यायनाम्ना स्वशिष्येषु प्रवरेण स्निग्धेन चानतिलङ्घनीयवचसा वचनरचनया संप्रार्थ्य प्रवणीकृत्य चानिच्छन्नपि काशीं हातुं हरिद्वारनगरसविधे गङ्गायाः पूर्वस्मिन् तटे कनखलनाम्नां पर्वतानामुपत्यकायां प्रतिष्ठापिते "गुरुकुलकाङ्गड़ी" इति नाम्ना वित्ते महाविद्यालये उपद्वादशवर्षाणि विनेयान् व्यनैषीत्। कदाचिच्च रुड़कीनगरं गच्छन् श्रीपण्डितनरदेवशास्त्रिणा वेदतीर्थेन कमपि त्वरं प्रेष्य कयाऽपि उपधयाऽऽकारितो रुड़कीनगराद् ज्वालापुरमहाविद्यालये प्रति-

निवृत्त्यागतः श्रीपण्डितगङ्गादत्तोपाध्यायमहाभागैस्तच्छिष्यैः श्रीपण्डितभीमसेनशर्मभिस्तच्छिष्यैः श्रीपण्डितदिलीपदत्तोपाध्यायैः श्रीपण्डितपद्मसिंहशर्मभिर्विशेषेण सर्वप्रयत्नैश्च श्रीपण्डितनरदेवशास्त्रिभिश्चावरुद्धः पुनर्गुरुकुलकाङ्गड़ीमहाविद्यालयं न गतः। उद्घोषितञ्च समाचारपत्रेषु गुरुकुलकाङ्गड़ीमहाविद्यालयाध्यक्षैस्तदानीमस्माकं गुरवो ज्वालापुरमहाविद्यालयाधिकारिभिर्मध्ये मार्गमवरुद्धाश्चोरिताश्चेति। ज्वालापुरमहाविद्यालये च उपदशवर्षाणि उषित्वाऽध्याप्य च कदाचिद् देवनदीकुल्यां स्नातुं गतः पूर्वसंकेतानुसारेण समायातेन श्रीकृष्णानन्दस्वामिना उदासीनेन सज्जमेकाश्वयानमारोप्य हरिद्वारे रयलशकटिकास्थेशने रयलयानमारोह्य वाराणसीं नीतः। पुनर्वाराणसीं प्राप्तञ्च महानिधिं प्राप्त इव प्रमुदित आसीत्। तत्र चोदासीनविद्यालये द्वित्राणि वर्षाणि अध्याप्य जरसा रोगेण चाभिभूतो विद्यालयाध्यापनात् प्रतिनिवृत्तः।

श्रीभगवद्दासश्रेष्ठिना च यावज्जीवमुपढौकितेन रूप्यकशतेन मासिकेन जीविकां कुर्वन् श्रीपण्डितमदनमोहनमालवीयैः स्वयमागत्य हिन्दूविश्वविद्यालयस्य संस्कृतमहाविद्यालयेऽध्यक्षपदमलङ्कर्तुं सुबहुशोऽभ्यर्थितोऽपि नोररीचकार। उदासीनविद्यालयत्यागानन्तरमपि सप्तविंशतिहायनानि कालिकाप्रतोल्यां श्रीविश्वनाथं दक्षिणेन स्वनिवासभवन एव समागतान् विदुषस्तोषयामास, चित्राध्यापनेन विविधशङ्कापाकरणेन ग्रन्थग्रन्थिविश्लेषणेन च। श्रीपण्डितमदनमोहनमालवीयमहाभागाश्चैनं प्रायेण विश्वनाथदर्शनान्तरमुपतिष्ठन्ते स्म। ते च लन्दनयात्रातः प्राङ्मिलिताः पृष्टवन्तः, प्रतिनिवृत्ताश्चापृच्छ्य प्रायश्चित्तं चक्रुः। एते च दिग्दिगन्तेभ्यः समागतान् नानादेश्यान् छात्रान् भोजपुरीभाषयैवाध्यापयामासुरित्यपरमेषां वैशिष्ट्यम्। कदापि कुत्रापि चान्यभाषया लोके न व्यवजह्रुः। एते च पञ्चाशीतेरूर्ध्वमुपनवतिवर्षेषु कस्मिंश्चिद् हायने राममनुस्मरन्तः काश्यामेव शिवसायुज्यमेता इति प्रत्यक्षमनुभूतम्। निधनकालश्च १९३८ ईशवीयो हायनः। एतस्य च जन्मकुण्डल्यभावेन जन्मकालज्ञानं नास्ति।

एतस्य काशीतो बहिर्गमनात् प्राच्यविशिष्टच्छात्रपरम्परा—श्रीपण्डितराधाप्रसादद्विवेदो हिन्दूविश्वविद्यालये धर्मशास्त्रप्राध्यापकः। श्रीपण्डितरमापतिमिश्रः-बम्बईनगरे प्रख्यातः प्रधानपण्डितः। श्रीराजारामत्रिपाठी गोरक्षपुरमण्डलवास्तव्योऽल्पायुः। श्रीपण्डितशिवबालकशर्मा गोयनकामहाविद्यालये व्याकरणाध्यापकः। श्रीपण्डितवामदेवशर्मा हिन्दूविश्व-

विद्यालये साहित्यप्राध्यापकः। श्रीपण्डितरामावतारशर्मा गोदनासेमरिया-विद्यालये गङ्गासरयूसमागमसंनिहितेऽध्यापकः। काशीतो हरिद्वारगमनान्तरम्—गुरुकुलकाङ्गड़ीमहाविद्यालये विशिष्टाश्छात्राः। तत्र केचन तत्रत्या अध्यापका यथा—श्रीपण्डितशालिग्रामशास्त्री साहित्याचार्यः साहित्यदर्पणे विमलानाम्न्या हिन्दीटीकायाः कर्ता। श्रीपण्डितबाबुदेवचतुर्वेदो माथुरः। श्रीपण्डितकाशीनाथशर्मा सारस्वतो जम्मूनगरवास्तव्यः। छात्राश्च तत्रत्या हरिश्चन्द्र इन्द्रचन्द्र जयचन्द्रेति चन्द्रत्रयी प्रख्याता। तत्र श्रीहरिश्चन्द्रः श्रीमहेन्द्रप्रतापेन राज्ञा सममभरीकादेशं गतो ब्रिटिशराजसत्तामभिद्रुह्यन् तत्रैव स्वर्गतः। श्रीइन्द्रचन्द्रस्तु देहलीनगरे महतीं प्रतिष्ठामधिष्ठयार्यसमाजमुन्नयन् सद्धर्मप्रचारकसमाचारपत्रप्रकाशनेन नेदीयस्येवातीते काले निष्ठां समवाप। श्रीजयचन्द्रोऽपि काशिकहिन्दूविश्वविद्यालये बहूनि हायनानि अर्थशास्त्रविभागाध्यक्ष्यपदं विभूष्य स्वकीर्तिव्रततिप्रतत्या पुष्प्यन्त्या दिगन्तानधिवासयामास। ज्वालापुरविद्यालये चास्य छात्राः—श्रीपण्डितगङ्गादत्तोपाध्यायः, श्रीपण्डितभीमसेनशर्मा, श्रीपण्डितदिलीपदत्तोपाध्यायः, श्रीपण्डितनरदेवशास्त्री वेदतीर्थः, श्रीपण्डितपद्मसिंहशर्मा, श्रीपण्डितराघवेन्द्रः, यः पश्चाद् बाबाराघवदास इति नाम्ना ख्यातः, एते च ज्वालापुरमहाविद्यालयस्याधिकारिणोऽध्यापकाश्चासन्। तत्रत्यच्छात्रेषु च बहुषु सत्स्वपि डाक्टरसूर्यकान्त एवोल्लेख्यः। ततः पुनः काशीप्राप्त्यनन्तरञ्च तस्यच्छात्राः—श्रीपण्डितनरसिंहत्रिपाठी (श्रीनारायणदत्तत्रिपाठीत्यपराभिख्यः) मारवाड़ीसंस्कृतमहाविद्यालये काशिके प्रधानाचार्यः, श्रीवेणीमाधवशर्मा तत्रैवाध्यापकः, प्रायेण च सर्वेषु साधुसम्प्रदायेषु बहवो वीतरागा भिक्षवस्तस्य छात्रा येषु श्रीस्वामी असङ्गानन्दोऽतिशेते सर्वान्।

तस्य च द्वौ पुत्रौ छात्रौ च। तयोः श्रीपण्डितहरिनाथशर्मा प्रथमः, यः सर्वाणि शास्त्राण्यधीत्य पितुर्नव्यन्यायं मिथिलामिहिरादक्षपादसंकाशात् श्रीधर्मदत्तापरनामधेयश्रीबच्चाझा इत्यपराख्यादध्यैष्ट। द्वितीयस्तु श्रीरघुनाथशर्मा पितुरधीताखिलविद्याकलापः साम्प्रतं वाराणसेयसंस्कृतविश्वविद्यालये वेदान्तविभागाध्यक्षः। यस्य परःसहस्राणि शिष्याः सर्वेषु साधुसम्प्रदायेषु सर्वेषु ब्राह्मणवंशेषु भारतवर्षस्य सर्वेषु प्रमुखपुरेषु बहिर्देशेष्वपि नेपालसीलोनमारीशसप्रभृतिषु विद्यया वृत्त्या च प्रख्याता निवसन्ति, येन च वाक्यपदीयब्रह्मकाण्डस्य अम्बाकर्त्री नाम्नी व्याख्याऽदृष्टाश्रुतपूर्वार्था व्यरचि। साम्प्रतञ्च द्वितीयकाण्डं तथैव व्याचष्टे। एतयोर्द्वयोरपि संतानपरम्परा

महती गुणवत्यपि नोपवर्ण्यतेऽप्रकृतत्वात् ।

श्रीकाशीनाथपादनां कन्यासंततिस्तु नासीत् । अपूर्वं तु तस्य भाग्यमासीत् । तथा हि—अतिदीर्घमतिदीर्घायुर्बलान्वितमरुजमाजानुबाहु वपुः, द्वौ सुतौ विद्यावृत्तिवृत्ततपःसंपन्नौ सप्रसुतौ, दैन्यापादिकायाः कन्याया अभावः, विनेयावर्जनकरी अर्थकरी विद्याऽनवद्या, लोकानां सश्रद्धं शिरो नमयन्ती वृत्ततपसी, स यावज्जीवं गृहस्थोऽपि त्यक्तसर्वैषणः समुज्झितदेहगेहाभिमानः कोऽपि भूदेवव्याजेन धृतकाय आजानदेव आसीत् । यः पुरा ज्वालापुरमहाविद्यालये आम्रपादपस्याधस्तले मण्डलिकयोपविष्टान् छात्रान् समध्यापयन् कञ्चुकिकान्तः प्रविष्टेन वृश्चिकेन दष्टोऽपि बहुवारं स्वेदबिन्दुभूषितभालः कुतो माघेऽघर्मंघर्मोदकमिति आश्चर्यचकितैरनुबद्धश्रद्धैः शिष्टैः शिष्यैः सानुरोधं पृष्टः कोऽपि कीटो दशतीति व्याजहार । किं बहुना—

"नरो ह्यत्यन्तमेधावी चतुर्णामेव भाजनम् ।
अल्पायुरनपत्यो वा दरिद्रो वा रुजान्वितः ॥'

इति लोकवित्तस्य अभियुक्तपद्यस्य स सर्वात्मनाऽपवाद आसीदेकः ।

अस्य कृतयः—अनुभूतिप्रकाशस्य विद्यारण्यस्वामिमुनिकृतस्य उपनिषदां प्रायेण सर्वासां व्याख्यानभूतस्य व्याख्या, या पुरा भगवद्दासश्रेष्ठिना द्रव्यसाहाय्येन मुद्रिताऽऽसीत् । तथा—महावाक्यरत्नावल्यास्तैलङ्गस्वामिकृताया व्याख्याऽपि एनेनैव कृता तथैव तेनैव सह मुद्रिता । श्रीरामकृष्णकृतव्याख्यासहितायाः पञ्चदश्या व्याख्या अनेनैव लिखिता वाराणसेयसंस्कृतविश्वविद्यालयस्य सरस्वतीभवननाम्नि पुस्तकालयेऽमुद्रिता वर्तते । चित्सुखीग्रन्थस्य प्रथमतरं सटिप्पणं संशोध्य प्रकाशनम्, तथैव व्याकरणमहाभाष्यस्य । इदन्तु अस्य अयत्नसाध्यं कार्यम्, इत्येतावदुक्त्वाऽनल्पजल्पतो विरम्यते इदं कस्यचित्कवेः सूक्तं संस्मृत्य—

सृजति तावदशेषगुणाकरं पुरुषरत्नमलङ्करणं भुवः ।
तदपि तत्क्षणभङ्गि करोति चेत्यहह कष्टमपण्डितता विधेः ॥

इति शम् ।

# त्रिपाठिश्रीदेवनारायणशर्मणां संक्षिप्तचरितम्*

अस्ति पितॄणां विस्तृतसंसृतिसिन्धुसन्तरणसेतुः हेतुः श्वःश्रेयसानाम् अर्गला नरकद्वारस्य, नराकारैरमरैरधिष्ठिता, स्वसौभाग्योपहसितसुरपुरसौन्दर्या, मगधदेशशेखरीभूता, दत्तविपन्नजनाभयो गया नाम नगरी। सुखसम्पत्तिविततिव्रततिकन्दले यस्या मण्डले सुकृतिजनपदे जनपदे इतराश्चर्यंतपश्चर्यालङ्कर्मीणतपस्विकुलाकुलविपुलकूला शकुन्तरवनिरन्तरदिगन्तरमहीरुहपरिवारिततीरा पुण्यनीरा पुण्यपुण्या तरङ्गिणी प्रवहति। यस्याश्च लोलकल्लोलमालामिलिताः, अरविन्दमकरन्दसुगन्धगन्धिनोऽमन्दमन्दताभृतो मरुतः, अविश्रमपरिश्रमपरिश्रान्तजानपदजनानां स्वेदशीकरनिकरानाचामन्ति। तस्या एव सविधे सकलकलानिधिधवले सद्वृत्तबहलेऽमाये सरयूपारीणत्रिपाठ्यन्ववाये पितामहमहनीयमहा धीरधीषणाधिक्कृतधिषणो विद्याविद्योतितसदयहृदयः श्रौतस्मार्तकर्मसञ्चयसञ्जातशर्मोर्मिकिर्मीरितो वसुधासुधाशनेशानः अनिशानुध्येयरामचरणः श्रीरामचरणो विपश्चितामपश्चिमो जनुरधत्त।

स्तम्भितजम्भरिपुगुरुप्रभावो महानुभावोऽयं त्रयोविंशत्यधिकैकोनविंशतिशततमे वैक्रमेऽब्देऽभङ्गुरमङ्गलाङ्कुरविकाशपूर्तिभृति मुहूर्ते वशिष्ठमिव हिरण्यगर्भः शक्तिमिव वशिष्ठः पराशरमिव शक्तिः, व्यासमिव पराशरः, शुकमिव व्यासः, सुतमवापत् उभयान्वयोन्नायकमस्मच्चरितनायकम्। यस्य च गणकगणावेदितं भाविनं विद्यादिगुणसमुदयमवेक्ष्य पिता द्वादशेऽह्नि देवनारायण इत्यन्वर्थं नाम चक्रे। यं च हरिनारायणेत्यपि केचन स्मरन्ति। पित्रोः सकलकुलस्य च मुदमातन्वन् आपञ्चवर्षमेव बालकेलीः परिसमाप्याप्रतिमया प्रतिभया विनयेन च निगमागमवनावन्यवनद्वीपिनः शाकद्वीपिनो द्विजराजकान्तेर्द्विजराजस्य श्रीविश्वेश्वरदत्तविदुषो मानसमाचकर्ष। यः खलु भूपालमौलिमालालालितचरणयुगलस्य विद्यासंभारभासुरबुधकविवरावृतस्य इष्टापूर्तपूरितजनपदसंपादितस्वर्गसर्गस्य 'टेकारी'—वसुधासुधांशोर्गुरुरासीत्। तस्यैवान्ते वसन् फणिभाषितभाष्यावध्यशेषं शब्दशास्त्रमल्पीयसैवानेहसाऽवगतवान्। प्रतिदिनमेधमानमेधाविशेषश्च विद्वन्मण्डली-

* १९९८ वैक्रमाब्दे मार्गामावास्यायां लिखितमिदं चरितम्।

मण्डितामनवरतोच्चार्यमाणगीर्वाणवाणीगुञ्जदतुलप्रतोलिकां प्रयास्यज्जन्तु-परब्रह्मप्रकाशिकां काशिकामागात् । तत्र च शिवाट्टहासकैलासकाशनीकाश-यशोधवलिताखिलधरातलस्य पण्डिताखण्डलस्य समस्तविद्यासंभृतस्वा-न्तस्य महामहोपाध्यायाद्यनेकविरुदावलीविभूषितस्य कोविदचक्रचक्रवर्तिनः साक्षात् शिवकुमारस्येव शिवकुमारमिश्रस्य, असंख्यसंख्यावत्पूजितपाद-युगलस्य वैदुष्यविस्मापितविपश्चित्सार्थस्य वादिनिवहवारणवारणपञ्चाननस्य भारद्वाजवंशमुक्तामणेर्मनीषिव्रजचकोरचन्द्रमसः श्रीदामोदरशास्त्रिणश्च शिष्यतामधिगत्य महीयस्या गुरुवरिवस्यया परिष्काराविष्कारेण च विदुषां मनांसि विस्मितान्यतानीत् । ततश्च मधु मधुप इव सुमनोभ्यः सुमनोभ्यः सांख्यन्यायवेदान्तसाहित्यपारावारपारीणतां सद्यः सम्पाद्यापि लोकप्रगतिगतमतीनां कृतिनामनुरोधमुरीकृत्य सविशेषशेमुषीविकाशविका-सितसकलाशावकाशं वादिदृशां कोशीकरणदेशिकं विद्याकुशलकुशेशय-शिशिरेतराभीषुमध्यापनामन्दानन्दतुन्दिलं साक्षाद् भवान्यैव वैदुष्यपदे दीक्षितं श्रीभवानीदत्तदीक्षितं शिक्षकमासाद्य काशीस्थराजकीयसंस्कृतमहा-विद्यालयाद् व्याकरणाचार्यपदवीविभूषितोऽभूत् ।

अथ बुद्धिवैभवसरलीकृतविबुधाचार्यविचार्यकार्यसाहित्यैरनवरतशास्त्र-चर्चार्चितमतिभिः श्रीमदच्युतशर्मत्रिपाठिप्रभृतिभिः कृतिभिर्विभासितां विशालां काशीस्थसंन्यासिसंस्कृतपाठशालामलमलमकार्षीत् । ततश्च काशिक-श्रीचन्द्रमहाविद्यालये सूक्तिदिवाकरोऽन्तेवासिनिकरकमलाकरेषु सूक्तिकर-प्रकरान् प्रकीर्य षण्मासान् हिन्दूविश्वविद्यालये महाध्यापकपदमलंकृत्य च महामहोपाध्यायधर्मधुराधौरेयश्रीगङ्गानाथझामहेच्छाध्यक्षतायां वाराणसेय-राजकीयसंस्कृतमहाविद्यालये महाध्यापकाध्वन्यध्वन्य आसीत् । यद्यपि विद्वद्भिर्वन्दितचरणत्रिपाठिचरणशिष्या दिशि दिशि भारतमभिव्याप्य तिरस्कृतसुधाभुक्तिसूक्तिधाराक्षरणैः क्षालयन्ति क्षमाम्, येषां पृथक् कथनम-ब्दशतातिपाति, तथापि कतिपयान् प्रख्यातख्यातीन् विद्वदुत्तंसान् कीर्तयामि।

अखण्डपाण्डित्यमण्डितमहीमण्डलाः अनेकशतशिष्यरोलम्बनिकुरम्ब-करम्बितपादपाथोरुहाः प्रचुरग्रन्थनिबन्धनसमुद्यद्यशःस्तोमसोमविभासित-दशदिशः विद्वत्सभापतिसभापतिशर्मोपाध्यायाः राज्ञो दानवीरश्रीबल-देवदासविडलामहोदयस्य काशीस्थमहाविद्यालयप्रधानाध्यापकाः त्रिपाठि-वर्यशिष्या एव । अप्रतिमप्रतिभातिभासिताः सर्वतोमुखीशेमुषीका जगन्नाथ-पुर्या राजकीयमहाविद्यालयप्रधानाध्यापकाः श्रीरामाज्ञापाण्डेयमहोदयाः त्रिपाठिचरणशिष्याः । ग्रन्थग्रन्थिनिश्लथनप्राप्तविख्यातयः वेदान्ताधिगति-

विशुद्धबुद्धयः पण्डितप्रवीणा वैयाकरणधुरीणा विद्वन्मनोमोहहिरण्यकशिपुविदारणनृसिंहा नृसिंहत्रिपाठिनो मारवाडीसंस्कृतमहाविद्यालयप्रधानाध्यापका एतच्चरणानुरागावर्जितविद्यासंभाराः। व्याकरणसाहित्याचार्याः शास्त्रान्तरसंजातसंबोधाः काशिकराजकीयमहाविद्यालयसाहित्याध्यापकाः श्रीविद्याविलासशुक्लशर्माणोऽपि तदीयान्तेवासिनः। सकलशास्त्रव्याख्यातारो व्याकरणार्णवकर्णधारा विद्वत्कुलालङ्कारा वलियानगरस्थजुबिलीसंस्कृतमहाविद्यालये प्रधानव्याकरणपाठकाः श्रीमङ्गलदत्तपाठका अपि त्रिपाठिचरणानुग्रहावाप्तसमज्ञाः। सूरिसमाजप्रसृतयशःप्रशस्तयो वैयाकरणशिरोमणयः शास्त्रान्तरप्रकटितपाटवगृहीतगौरवाः काशिकलोयलकाविद्यालयप्रधानाध्यापका बालेश्वरशर्मोपाध्यायाश्च त्रिपाठिमहोदयशिष्या एव।

साम्प्रतं तु वर्षत्रयात् काशिकराजकीयमहाविद्यालयादवकाशमवाप्यावतारितकार्यसंभारभारा अपि 'परोपकरणं कायादसारात् सारमाहरेत्' इति वचनं सार्थयन्तः विदुषां शङ्कालतातर्ति समाधिकुद्दालकैरुन्मूलयन्तः सततञ्च श्रीकाशिकेशं विश्वेशं स्मरन्तो मनो विनोदयन्ति। अधुनाप्यध्यापने तेषां पुरेव हरिगर्जनं विस्मापयति विदुषः। एवमेव चिरञ्जीवन्तु विद्वत्तारम्भणदृढस्तम्भाः साक्षादवतीर्णनारायणविभ्रमधराः श्रीत्रिपाठिदेवनारायणशर्माण इति विश्वेशानादाशासानो विरमामीति शम्।



# कालिदासीयपद्येऽस्थानस्थपदता

साहित्यदर्पणे अस्थानस्थपदतादोषस्योदाहरणत्वेनेदं रघुवंशे उक्तं पद्यं समुपन्यस्तम्—

तीर्थे तदीये गजसेतुबन्धात्प्रतीपगामुत्तरतोऽस्य गङ्गाम् ।
"अयत्नबालव्यजनीबभूवुर्हंसा नभोलङ्घनलोलपक्षाः ॥"

[ १६ । ३३ ] इति ।

अत्र 'तदीये तीर्थे' इत्यस्य 'गङ्गासंबन्धिनि तीर्थे' इत्यर्थमभिमत्यायं दोषो दर्पणकृतोद्भावितः ।

मल्लिनाथेन तु 'तदीये तीर्थे' इति पदद्वयम् 'वैन्ध्येऽवतारे' इत्यर्थकतया व्याख्यातम्, न चात्रास्थानस्थपदतादोषस्य संभावनापि कृता। विन्ध्यवर्णनं चास्मात्पद्यात्प्राक् प्रक्रान्तम्, अतो विन्ध्य एव तत्पदपरामर्शयोग्य इति न महाकविकृतौ धूलिप्रक्षेपः समुचितः ॥

# ❀ चन्द्रगर्हणाष्टकम् ❀

विनिमज्जतु संततमम्बुनिधौ प्रविशत्वनिशं मुहुरभ्रगणे ।
न जगज्जननीवदनद्युतिमिन्दुरवाप्स्यति हन्त कलङ्कितया ॥ १ ॥
गगनाङ्गणमञ्चतु दूरतरम्, उदयाचलमौलिशिलां श्रयताम् ।
न हिमालयशैलसुतावदनद्युतिमाप्स्यसि चन्द्र कलङ्कितया ॥ २ ॥
भवमौलिविभूषणतां भजतां, जगदीशितुरन्तरथाश्रयताम् ।
न सतीवदनद्युतिमाप्स्यसि रे गुरुतल्पग मूढ कलङ्कितया ॥ ३ ॥
कलया कलया परितर्पयतां, सुरतां सततं शुचितासिकृते ।
न सुरौघनिषेवितपादयुगावदनद्युतिमैषि कलङ्कितया ॥ ४ ॥
उदयाचल-गैरिकधातुशिला-घटनाघटिताखिलशोणवपुः ।
नहि कुङ्कुमरक्तसतीवदनद्युतिमाप्स्यसि चन्द्र कलङ्कितया ॥ ५ ॥
प्रतिपर्व तिथौ परिहाय कलाः सकला अपरां विनिवेश्य पुनः ।
न निसर्गसमुज्ज्वल मातृमुखद्युतिमाप्स्यसि चन्द्र कलङ्कितया ॥ ६ ॥
रवितः परिपोषय तां सुषमां कवितः स्तुतिमाप्नुहि पुण्यतमाम् ।
छवितः परिहीणतरो जननीमुखमाह्वयतां न कलङ्कितया ॥ ७ ॥
यदि वाञ्छसि निर्मलमात्मवपुर्जननीपदपद्मयुगं श्रयताम् ।
नखचन्द्रमिषेण ततो जननीमुखता तव सिध्यति शुद्धतया ॥ ८ ॥



# मुक्तकं मातृस्तवाष्टादशकम्

या त्वमञ्चसि जगत्त्रयोपरि, या त्वमञ्चसि जगत्त्रयादधः ।
या च तिष्ठसि जगत्त्रयेऽम्बिके, तेन ते वपुरमेयतामितम् ॥ १ ॥
सत्त्वमम्ब तव भासकं वपुः, स्याद् रजो विविधकर्मकारणम् ।
यत्तमस्तव विभाविवर्जितं, सर्वसर्जनपरं महद्वपुः ॥ २ ॥
येन भान्ति तव तेजसेरिताः, सूर्यकोटिमतिवृत्तशक्तिना ।
सोमसूर्यदहनादयः समे, तेन शोषय हिमं निपातुकम् ॥ ३ ॥
यत्र भाति सुविभाति भास्करः, यत्र वह्निरवभाति भासते ।
तद् दृगन्तकरुणाभृतं महः, त्वं समुद्धर पतन्तमम्बिके ॥ ४ ॥
वाञ्छया विहितसर्वसर्जना, लीलया विहितसर्वसंस्थितिः ।
पाहि मां पतितमम्ब ते पदे, पाणिना विनतलोकपालिना ॥ ५ ॥
त्वन्मुखाम्बुजनिरीक्षिणं भिया, वेपमानमगतिं कृतागसम् ।
मातराह्वय मृदुस्मितान्वितप्रेमगद्गदगभीरया गिरा ॥ ६ ॥
कालिके प्रणतलोकपालिके, शांभवि प्रणत शंविभाविनि ।
वैष्णवि प्रणतभीतिभञ्जिके, मातरः स्मरत मां विराविणम् ॥ ७ ॥
तावदम्ब भवति प्रियाकरी, देहगेहवनितादिसंस्मृतिः ।
यावदीश्वरि निवर्तिताशुभत्वत्पदाम्बुजपरागविस्मृतिः ॥ ८ ॥
या श्रुता हरति हृद्गतं तमो, या स्मृता हरति सर्वकल्मषम् ।
या स्तुता हरति सर्ववेदनाः, तां गतोऽस्मि शरणं महेश्वरीम् ॥ ९ ॥
कामलोभदृढरश्मिसंयतं, क्रोधयोधविकृताकृतीकृतम् ।
पात्यमानमिह दारुणेऽवटे, मातरुद्धर कृपाऽवलोकनैः ॥ १० ॥
मज्जतो मम भवाब्धिसंप्लवे, नास्ति संतरणसंक्रमः शिवे ।
तत्र संस्मृतिसृतिं गता मुहुर्मातरेहि तरणीकृताकृतिः ॥ ११ ॥
मातरस्ति तव विग्रहः श्रुतिः, तस्य कान्तिरपि वर्तते स्मृतिः ।
व्याकृतिस्तव मुखं शुभं शुभे, कल्प एव तव पादयुग्मकम् ॥ १२ ॥
शब्दविग्रहधरा परा वपुः, त्वं विमृश्य सकलार्थजालकम् ।
बोधरूपिणि परात्परे शिवे, संनयस्यपि वाङ्मागतम् ॥ १३ ॥

चित्तमस्ति तव साकृतिस्तनुः,या चितिः खलु निराकृतिस्तु सा।
एवमद्भुतविकल्पयोगतो हानतश्च तव भिद्यते वपुः॥ १४॥
शून्यभूमिशयना सवासना, शुद्धमार्गगमना शवासना।
संसृतिं सृतिनिवृत्तिमप्यथो, कुर्वती जयति काऽपि ते तनुः॥ १५॥
वीक्षते यदि जगत् शिवस्त्वया, वीक्ष्यमाणमनु कोऽत्र विस्मयः।
त्वत्प्रभामनुमिनोति यच्छिवे, तेन ते जयति काऽपि मातृता॥ १६॥
अट्टहासविधिभीषितासुरा शुम्भशोणितसमुक्षिताम्बरा।
रक्तबीजवधवित्तविक्रमा, कालिका जयति शैलबालिका॥ १७॥
दर्पः सर्प इवास्फुरत् समितितः, प्राग्यो सुराणां महान्,
लोकः शोककदर्थितो न हि यदा लेभे परां निर्वृतिम्।
तस्मिन् कालविशेषके करुणया दिव्यां तनुं संस्मृता,
दुर्गा दुःखदरिं दृणातु दयया, दैत्यावली दारिका॥ १८॥

## ॥ प्रकीर्णकानि ॥

कण्ठकलितललितकम्बुकान्तिमुण्डमालिके!
रजतहेमरत्नशबलशृङ्गशैलबालिके!
नृत्तसहितविविधसामगीतदत्ततालिके।
कुरु कृपाकटाक्षमम्ब मयि सदैव कालिके॥ १॥
शरणं जगतां मरणं द्विषतां, धरणं पततां करणं भवताम्।
तरणं भवभाविमहाविपदां, चरणं तव मातरहं प्रभजे॥ २॥
ह्लादः पीयूषपाकान्निजजनविपदां सर्वदैवावसादः,
विश्वाविद्याविषादः परमगुरुकृपाप्राप्तविद्याप्रसादः।
संसाराब्धेर्निषादो दितिसुतकवलीकारिकाभीमयादः,
पादो मातुर्मदीयं भयमपनयताल्लब्धसाधुत्ववादः॥ ३॥

## आदर्श प्रस्ताव-रत्नमाला

सम्पादक : पण्डित विश्वनाथ शास्त्री प्रभाकर

इस पुस्तक में १०० निबन्ध ( प्रस्ताव ) संगृहीत हैं, जो धार्मिक, सामाजिक विषयों को लेकर सरल, सुबोध और प्राञ्जल भाषा में लिखे गये हैं। जिस प्रकार के अपेक्षित लेखों का संकलन इस पुस्तक में हुआ है वैसा अन्यत्र देखने में नहीं आता, अतः इसकी एक प्रति प्रत्येक संस्कृतप्रेमी छात्र को अपने पास अवश्य रखनी चाहिये। उत्तम कागज स्वच्छ छपाई के साथ परिवर्द्धित संस्करण। लगभग ५०० पृष्ठों की पुस्तक का मूल्य ७.००।

मोतीलाल बनारसीदास
नेपाली खपरा, पो. ब. ७५, वाराणसी